# गीतादर्शनम्

## ( सभाष्यं सगुर्जरानुवादम् )

★


द्रष्टा भाष्यकारश्च

**प्रा० नलिन म. भट्ट**

भवन्स कॉलेज मुंबई. ७.


अनुवादिका

**श्री मालती श्रोफ. एम्. ए; एम्. इड.**

प्रकाशकाः

**श्री. इन्दुमती र. शाह**
**श्री. रमणिकलाल पु. शाह**
**श्री. लल्लुभाई बी. बलसारा**
व्यवस्थापकाः गीताबन्धु ग्रन्थावलि,
२४, पारिजात, ९५, मरिन ड्राइव;
मुम्बई.

प्रथमावृत्तिः ( २०१८ ) [ १९६२ ]

**मूल्यम्** रु. ६-०-०
( प्रेषणव्ययो भिन्नः )


संपादिके:

**श्री मालती श्रोफ**
**श्री शान्ता देसाई**
सहतन्व्यौ; गीताबन्धु

मुद्रक :

**के. एल्. एन्. राव,**
मुंबई वैभव प्रेस, ४१७/४२१,
सरदार वल्लभभाई पटेल रोड :
गिरगांव : मुंबई नं. ४

अग्रे दीर्घतरोऽयमर्जुनतरुस्तस्याग्रतो वर्तनी
सा घोषं समुपैति तत्परिसरे देशे कलिन्दात्मजा ।
तस्यास्तीरतमालकाननतले चक्रं गवां चारयन्
गोपः क्रीडति दर्शयिष्यति सखे पन्थानमव्याहतम् ॥

ॐ

प्रियात्मन् ! नाथ ! गोविन्द ! गोपाल ! प्राणवल्लभ
त्वदीयं दीयते तुभ्यं प्रसीद परमेश्वर ! ॥

रास पूर्णिमा
२०१८

नलिन—

# अनुक्रमणिका.

॥ ॐ ॥

# भूमिका

समाधिभावनार्थः क्लेशतनूकरणार्थश्च क्रियायोगस्तपस्स्वाध्यायेश्वरप्रणिधानात्मको भगवता पतञ्जलिना प्रोक्तः। सोऽयं क्रियायोगश्चेद्व्यापको भूयाद्ध्रुवं भावयेत् समाधिं, क्षिणुयाच्च क्लेशाञ्जनतायाः। नास्ति सरलतरोऽन्योपायः कश्चिदनर्घ्यो जनताचेतोमलविधमनाय। अत आत्मानमुन्निनीषुः क्रियायोगरतो भूयात्।

तत्रापि स्वाध्यायोतीवोपयुक्तः। स्वाध्यायो ह्यान्तरप्रदीपोऽन्तस्तमतमसोऽपसारकः। यत्र हि सौरी वा वैधवी वा प्रभा प्रवेष्टुं न पारयति तत्र स्वाध्यायज्योतिरप्रतिषिध्यप्रसरं प्रकाशकं भवति। अत एव स्वाध्यायान्न प्रमदितव्यमिति वेदवचो युक्तम्। तत्रभवतः स्वाध्यायनिष्ठस्य भगवतः सहायीभवन्ति परमर्षय इष्टदेवताश्च।

आत्मज्ञानप्रदानां शास्त्राणामभ्यासः श्रद्धाभक्तिपूर्वकः स्वाध्याये समाविष्टः। व्युत्पत्तिबलात्। व्युत्पत्त्या स्वाध्यायशब्द इममेवार्थं समर्पयति। तस्मान्मोक्षशास्त्राणां शब्दतोऽर्थतश्च साक्षात्कारपर्यवसन्नोऽभ्यासः स्वाध्याय इति तत्त्वविदां परामर्शः।

सन्ति चानन्तानि शास्त्राणि बहुवादीनि सहस्रेणापि पुरुषायुर्भिः पूर्णतयाधिगन्तुमशक्यानि। आयुश्च पलविपलपरिमितमस्ति। न च क्षणपरिमित आयुष्यनन्तानां तेषामिष्टोऽप्यभ्यासः शक्यः। अनिवार्यश्चाभ्यासः। अतस्तान्येव शास्त्राण्यधिगन्तव्यानि भवन्ति यानि ध्येयस्य परमपुरुषार्थस्य द्योतकानि संपादकानि च विद्यन्ते। उक्तं च श्रुत्यापि—"नानुध्यायाद् बहून् शब्दान्, वाचोविग्लापनं हि तत्।" अतस्तदेवानुध्यायेद्यदनुध्यातं सत् परमपुरुषार्थमावहेत्। पाण्डित्यस्यापि निरर्थकः परिग्रहो भारभूत एव। अतो ध्येयनिष्ठस्य पाण्डित्येऽपि चपलवचःप्राये भवति निर्वेदः। अत एवोच्चैर्गीतं भगवत्या श्रुत्या—"अथ पाण्डित्यं निर्विद्य बाल्येनतिष्ठासेदिति"। एवं सति किं कर्तव्यं मनुष्येण मतिमता?। समेषामार्यशास्त्राणां परमसारभूतमर्थमभ्यसेद्धीमान्। तेषां सारभूतोऽर्थश्च भगवती गीता, "सर्वशास्त्रमयी गीता" इति प्राज्ञवचनात्, सर्वशास्त्रमय्या गीताया भगवत्याः परमादरेणार्थज्ञानपूर्वकात् स्वाध्यायात् सर्वदेवमयो हरिः सद्यो हृद्यवरुध्यते। समस्तानां सुमनसां सारभूतं त्रिदोषघ्नं मधु यथाऽपूपे संभ्रीयते तथा समेषां शास्त्रकुसुमानां सारभूतमर्थमधु त्रिगुणदोषघ्नं गीतारूपेऽपूपे संभृतं भगवता देवकीनन्दनेन। अत आस्वादयन्तु विचक्षणा इदमेव मधु, स्वाध्यायरूपेण चषकेण, साक्षाद्भगवता संभृतमुपनिषद्रूपेभ्योऽलौकिकपुष्पेभ्यः।

गीतेयं भगवती सरलाऽपि कठिना, सुबोधाऽपि दुर्बोधा, गाधाऽप्यगाधा विशदाप्यविशदा, बालानां स्पष्टतमापि पण्डितधौरेयाणामस्पष्टतमा, "अविज्ञातं विजानतां

विज्ञातमविजानतामितीमं श्रुतिवाक्यं चरितार्थयन्तीव तिष्ठति। भगवतः कृपयैव तस्या हार्दं क्वचित् क्वापि कश्चिज्जानाति। भगवदनुकम्पया प्रेरितैरस्माभिरितः पूर्वमेव भगवत्या गीतायाः श्रवणं मननं ध्यानं चाकारि। सम्प्रति च तस्या दर्शनं गुम्फ्यते तस्यैवान्तर्यामिणो भगवतोऽनुकम्पया। यथा श्रुता, यथा मता, यथा ध्याता यथा च दृष्टा तथैव साऽत्र शब्देष्ववतारिता करोतु शं समेषामाविर्भावयतु चात्मनो हार्दं सर्वेषां हृदि, भवतु च सुप्रीतोऽनेन दर्शनेनात्मीयो गुरुदेवो हरिर्भाष्येण च मौलिकेनान्तर्यामी भगवान् वासुदेवश्च।

अपूर्वमिदं गीतादर्शनम्। गीतार्थप्रतिपादकानि सूत्राणि चाद्ययावन्नकेनापि रचितानि। कुतस्तर्हीदं चापल्यमक्षम्यमिति चेत् ओमिति ब्रूमः। तथापिकेनाप्यन्तश्चोदित कृतवानिदं साहसमिति क्षन्तव्यो विदितवेदितव्यैः परवशोऽयं जनः।

दर्शनस्यास्य गुर्जरानुवादश्च संपादितोऽत्रभवत्या मालतीदेव्याऽधिकारिण्या। विदुष्या अस्यै धन्यवादं वितरामः। प्रकाशककदम्बकेन संपादिकाभ्याञ्च बहूपकृतमस्माकं स्वस्वनियोगाचरणेनास्थाथेन। तुष्यंतु तेषाञ्जनार्दन इति प्रार्थ्यते।

इदमेव निवेदनं प्रार्थनारूपं—

" निर्मातृकस्य मे माता गीता भगवती मता ॥
चिन्माधुर्येण पूर्णा सा दृष्टा मां पातु सर्वदा ॥ "

शुभं भूयात्समेषामिति—

भवन्स कोलेज
मुंबई
ता. २८-८-६२

महतामनुकम्प्यो
**नलिन भट्टः**

॥ ॐ **तत् सत्** ॥

## 'गीतादर्शन'ग्रन्थस्य द्रष्टारः भाष्यकर्तारः च

### प्रा. श्री. नलिन म. भट्ट-महाशया

'जीवी'ति जननी यस्य पिता च मणिशंकरः ।
हरिप्रसादो गुरुर्यस्य ब्रह्मनिष्ठो महामुनिः ॥ १ ॥

सोऽसावाचार्यवान् धीमान् भट्टो नलिननामकः ।
सर्वभूतहितध्याननिरतो भानमंगलः ॥ २ ॥

* — तेन — *

दृष्टं योगाप्तनेत्रेण स्वात्मबुद्धिप्रसादनम् ।
गीतायाः दर्शनं श्रीलं सभाष्यञ्च मनोरमम् ॥ ३ ॥

प्राणायि योगभाष्यञ्च सांख्यशास्त्रञ्च निर्मलम् ।
अनेका रचिता ग्रन्थाः शारदिप्रतिभांकिताः ॥ ४ ॥

* — च — *

आचार्यत्वञ्च संप्राप्तं गीतोपनिषदांस्तथा ।
भाष्यैश्च ब्रह्मसूत्राणां साधनाख्यैर्मनोरमैः ॥ ५ ॥

प्रवृत्या तुष्यतां देवोऽनयाऽसौ नन्दनन्दनः ।
गुरुदेवो हरिस्तुष्टो भूयाच्च परदर्शकः ॥ ६ ॥

# संपादकीयम्—

गीतागातुर्भगवतो यदुनन्दनस्य कृपयाऽपारयाऽतर्क्यया चास्मिन्नवसरे मंगलमये गीतादर्शनप्रकाशनस्य, दर्शनमिममुद्दिश्य तद्द्रष्टारमुदारचरितमधिकृत्य च विस्तारभिया चेत्स्वल्पमुल्लेखमपि न कुर्महे तदाऽनौचित्यमापतेध्रुवम् । तच्चानिष्टम् । अतो मिताक्षरं संपादकीयं लिखित्वैव संतोषं भजामः ।

गीतां भगवतीमुद्दिश्यानेकाचार्यैविद्वद्वरिष्ठैर्भूरीणि भाष्यादीनि विरचितान्युपलभ्यन्ते । भाविन्यपि कालेऽनेके विद्वांसो गीतामंदाकिन्यां स्वसरस्वतीं स्नपयिष्यन्ति । तथापि अद्ययावन्न केनापि भगवत्याः गीतायाः सारभूतं रहस्यं सूत्रोपनिबद्धं कृतं दृष्टचरम् । दार्शनिकी प्रतिभा च बहुमन्यते वटाद्बीजमिव भाष्यात् सूत्रम् । यतः सूत्रस्थं साहित्यं स्मृतेरुपकरोति, विचारकदम्बं व्यवस्थापयति, मंजूषेव रत्नानि हृदयस्थं विदधाति विचाररत्नवैभवं, ग्रन्थपारतन्त्र्यं विधमति, विदुषां विचारस्वातन्त्र्यं च सहजीकरोति । तत्र निदर्शनं हि योगसूत्राणि । योगसूत्राणि चेद्हृदयस्थानि भवेयुर्न भवेदावश्यकता पराधीनता वा ग्रंथालयस्य । सूत्रसाहित्यं भारतप्रतिभाया अपूर्व आविष्कारः । आचार्यमहोदयैः नलिनभट्टैः गीताशास्त्रं सूत्रोपनद्धं कृत्वा बहूपकृतं दार्शनिकसाहित्यस्य । एतेषां सूत्ररचनकौशल्यं शास्त्रीयं, सरसं, सरलामितार्थप्रदं विस्मयावहं च वर्वर्ति । ऋज्वन्तःकरणानां विदुषां च प्रमोदप्रदं भविष्यत्येवेत्यस्माकिनी श्रद्धा ।

सूत्रस्थ पदानामर्थोऽपि यथार्थः आप्तः कमनीयो ललितोऽर्थस्फोटकः संशयानाविद्धश्च वर्तते । तदेतदर्थकरणनैपुण्यमप्येषां महोदयानां विदुषां चित्तचमत्कारजननसमर्थमस्ति ।

भाष्यं त्वनन्यमेव । भाष्यस्य भाषा तावच्छंकराचार्याणामिव प्रसन्नपदा, भावगंभीरा, ऋतंभरा, निर्विचारसमापत्तिरिव विशदा, रसनिर्भरा आप्ततमा च । तादृशं रमणीयं ललितं लावण्यनिर्भरं बालानामपि बोधकरं विदुषामपि मोदजननं भाष्यं संस्कृतवाङ्मये विरलमस्ति । शैली च गंगाधारेव प्रसन्ना, विवेकख्यातिरिव निर्मला, वेदवागिव गभीरा, दयेव कोमला, हृदयाशीरिव स्पृहणीया, भगवदनुकम्पेव स्वस्तीमती च दृश्यते ।

मध्विव सुमनसां, नवनीतमिव पयसां, हार्दं च गीतायाः संभृतमस्मिन् भाष्ये । वेदान्तसूत्राणीव श्रुतीनां, सूत्राणीमानि गीतायाः स्वारस्यं अभिव्यञ्जन्ति । भागवतोपलब्धस्तुताविवास्मिन् भाष्ये गीतार्थस्य साक्षात्कारजनित उल्लासः प्रतिपदमुल्लसति । रसवदिदं भाष्यं स्वरसं स्वयमेव सहृदयानामर्पयिष्यत्यलं पल्लवितन् ।

बाल्यादेवाभिलषिता गीतासाधना तावदनेन गीतादर्शनप्रणयनेन समाप्तिमिता नलिनभट्टाचार्याणाम् । प्रस्थानत्रय्याः स्वतंत्रभाष्यरचनया मण्डनं एतेषामासीज् जीवनादर्शः । प्रणालिकानुसारं तु एभिः प्रस्थानत्रय्याः भाष्यानुरचनया आचार्यत्वामासादितमेव । भाष्यलेखनकर्मणि "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव" इति इमं गीतोपदेशमनुसृत्य तेषां भगवदर्चनमिष्टम् । स्वविकासे एव पश्यन्ति विश्वविकासं सूरयः । अतः स्वविकासपरायणैरेभिः विश्वविकासः कृतः आसतमग्रंथरचनयेत्यस्मन्मतिः । किमधिकेन ! आर्षदृष्टिमन्तः इमे भारतीभूजनतावतंसाः सन्तीति मन्महे ।

अस्मिन्नवसरे यैः स्वीयाभिप्रायप्रदानेनोपकृता वयं तेषां ऋणस्वीकारं कुर्मः । किञ्च अस्य ग्रन्थस्य प्रकाशने यैः निष्कामभावेन साहाय्यं धनादिना कृतं तेऽपि धन्यवादार्हाः । यतः लक्ष्मीः दानवती यस्य सफलं तस्य जीवितम् । अस्माकं सुहृद्वर्यैः सौ. इन्दुमती-रमणीकलाल–लल्लुभाई–महोदयैः गीताग्रंथावलीव्यवस्थापकैरस्य मुद्रणकार्येऽतीव परिश्रमः जुष्टः । शुभकर्मणि सततयुक्तानां तेषां शं भूयादित्याशास्यते ।

संपातिदृष्टया कृतेऽपि मुद्रणावलोकने केचद्दोषाः तदवस्थाः एव । शुद्धिपत्रके शोधनं तु कृतमस्ति । पूज्यपादशास्त्रीवर्यैः रामचन्द्रदीक्षितमहोदयैः ख्यातनामभिः रामप्रसादबक्षीमहोदयैः च शोधनकर्मणि अस्मभ्यं ऋजुतया साहाय्यं कृतम् । क्षणेऽस्मिन् तेभ्यः धन्यवादं दद्मः । दोषानविगणय्य अनुकंपाप्रेरिता एव विद्वांसः, ग्रन्थमिमं प्रेक्षिष्यन्तीत्यस्माकिनी श्रद्धा अनुनयश्च ।

ग्रन्थेनानेन तुष्यतु हृदयस्थोऽन्तर्यामी, गुरुदेवश्च हृदयसद्मस्थो हरिप्रसादवैदिकमुनिः, प्रमोदं चावहतु तातचरणानां ग्रन्थकारस्य इति संप्रार्थ्य विरमामः ।

मुंबई,
( २८–८–६२ )

मालती श्रोफ
शान्ता देसाई
( संपादिके )

# उपोद्घातः

प्राध्यापकः श्री नलिन भट्टः अनेकैः वर्षैः श्रीमद्भगवद्गीतायाः उपनिषदां चाध्ययनमध्यापनञ्च अनुतिष्ठति । गुर्जरभाषया तेन गीतां उपनिषदश्चाश्रित्य विवरणात्मका टीका अपि लिखिता वर्तन्ते । प्राचीनदर्शनशास्त्रणां विश्लेषणपूर्वकं उपन्यासे श्री भट्टस्यः शैली जनसाधारणगम्या हृद्या च वर्तते । भारतीयविद्याभवनस्य गीतामहाविद्यालयस्याश्रये श्री नलिन भट्टः सप्तभिः वर्षैः गीतादीनां वर्गं चालयति बहुसंख्याकाश्च जनास्तत्र प्राचीनविद्यामृतं पिबन्ति ।

श्रीमद्भगवद्गीतामाश्रित्य नाद्यावधि केनापि सूत्रग्रंथः निर्मितः । अपूर्वोऽयं प्रयोगः। सूत्राणि विचारमणिभिः शास्त्रहारं ग्रथ्नन्ति । सूत्रैः समग्रशास्त्रगतो विषयः संकलनपूर्वकं संक्षेपेण तथा उपस्थाप्यते यथा विशकलिताः दुर्बोधाश्च शास्त्रांशाः संवादं स्पष्टार्थतां च लभन्ते । सूक्ष्मविचारमयत्वात् सूत्रैः चिन्तनसामर्थ्यं वर्ध्यते । श्रीनलिन भट्टः स्वीयसूत्राणां विवरणमपि स्वयमेव विरचितवान् । अनेन सूत्रगतस्य विचारस्य आधारः तत्प्रतिपाद्यश्चार्थः सारल्येन ज्ञातुं शक्येत ।

गीताप्रतिपादितानां विषयाणां सुखबोधाय रचितमिदमुपकरणं जनताया गीतारुचिं वर्धयेत् तद्गतान् च विषयान् हस्तामलकवद् स्पष्टान् विदध्यादिति आशासे ।

भारतीय विद्याभवन,<br>चौपाटी; मुंबई<br>२५–८–६२

कनैयालाल मुनशी

ॐ

# श्री गीतादर्शनम्

## ( सूत्राणि )

वंदे हृदयसद्मस्थं हरिं देवं गुरुं तथा ।
व्यासं सरस्वतीं देवीं महात्मानं तथार्जुनम् ॥ १ ॥
सर्वान् भागवतान् नत्वा ध्यात्वा च यदुनंदनम्
गीताया दर्शनं कुर्वे योगनेत्रविभावितम् ॥ २ ॥
पठन्तु साधवः सर्वे पठन्तु गृहमेधिनः ।
पठन्तु बटवः सर्वे भवन्तु कर्मयोगिनः ॥ ३ ॥

अथातो गीतादर्शनम् ॥ १ ॥ गीतेत्युपनिषत् तादात्म्यात्तदर्थवहत्वात्तन्मूलत्वाच्च ॥ २ ॥ दर्शनमिति सम्यक्ज्ञानमभ्युदयनिःश्रेयसप्रसूतेः प्रसिद्धेश्च ॥३॥ अत एव तत्प्रयोजना ॥४॥ दुःखत्रयस्य सर्वस्पर्शित्वात् परमानन्दप्राप्तौ च समेषां सहजाधिकृतत्वात्सर्वेऽत्राधिकारिणः ॥५॥ अकृत्स्नदर्शनात्प्रयोजनासिद्धेरनर्थप्रसूतेश्च मीमांस्येयं कार्त्स्न्येन सर्वशास्त्रमयीति ॥ ६ ॥ ( पृ० १–६ )

॥ इति अनुबन्धप्रपंचो नाम प्रथमोऽध्यायः ॥

## ॥ विषादयोगः ॥

आदितः द्वितीयस्थदशमश्लोकपर्यन्तं उपोद्घातः गीतार्थावतारसंयोजनोपसंहार-सौष्ठवलाभार्थत्वात् ॥ १ ॥ परकृपाप्रवेशात् मोहसिद्धिः ॥२॥ मोहात् कर्तव्यभ्रेषोपस्थितिः ॥ ३ ॥ पापोपचयादिहिंसान्तोक्तिव्याजेन शस्त्रसंन्यासोऽनुचितः मोहत्राणात् ॥ ४ ॥ स्वजनासक्तेः विपर्ययः ततः शोकसंवेगात् कर्तव्यभ्रेषः ॥ ५ ॥ विषादबीजा प्रसादफला हि गीताकल्पलतेति ॥ ( पृ० ६–११ )

॥ इति विषादयोगः ॥

## ॥ अथ सांख्ययोगः ॥

स्वभावोत्तेजनार्था भगवदुक्तिः ॥ १ ॥ पूज्यपूजाव्यतिक्रमाद् रुधिराक्तभोगापेक्षया भैक्ष्यस्य प्रशस्यत्वाभासात् अर्जुनस्य कथंकारः ॥ २ ॥ शोकसंतप्तत्वात् कर्तव्यानवधारणम् ॥ ३ ॥ ततः कार्पण्याद् भगवत्प्रपत्तिः ॥ ४ ॥ नास्ति आत्मा अप्रमेयत्वात् ॥ ५ ॥ अस्ति ततः एव ॥ ६ ॥ अस्ति संघातपरार्थत्वात् ॥ ७ ॥ त्रिगुणादि विपर्ययात् ॥ ८ ॥ भोक्तृभावात् ॥९॥ कैवल्यार्थं प्रवृत्तेश्च ॥ १० ॥ स हि सच्चिदानंदात्मकः श्रुतिस्मृतियुक्ति–अनुभवेभ्यश्च ॥ ११ ॥ आत्मा हि स्वरूपं सर्वेषाम् ॥ १२ ॥ सर्वथा सर्वो हि अशोच्यः

आत्मत्वादेव ॥ १३ ॥ अत एव देहादयोऽपि ॥ १४ ॥ आत्माऽनात्मनोरविप्लवविवेकात् वर्तनसिद्धिः ॥ १५ ॥ ततो दृष्टिद्वैविध्यम् ॥ १६ ॥ स्थितप्रज्ञलक्षणव्याजेनाविप्लुतात्मज्ञानस्य व्यवहारावतारसाधनम् ॥ १७ ॥ अतः आत्मज्ञानमूलकः भक्तिप्रधानः निष्कामकर्मयोगो हि गीता हार्दम् ॥ १८ ॥ ततः शोकनिवृत्तिः श्रुतेः ॥ १९ ॥ (पृ० १२-२८)

॥ इति सांख्ययोगः ॥

## ॥ अथ कर्मयोगः ॥

व्यामिश्रवाक्यकल्पनात् व्यामोहेन श्रेयःप्रश्नः ॥ १ ॥ उभाभ्यामेव श्रेयोऽवाप्तिः गौणत्वात् मार्गस्य प्रधानत्वाच्चानुष्ठानस्य ॥ २ ॥ न कर्मानारंभः संन्यासो वा अशक्यत्वात् प्रकृतिविरोधात् मिथ्याचारावहत्वाच्च ॥ ३ ॥ निष्कामकर्मयोगो ज्यायान् सत्याचारत्वात् ॥ ४ ॥ शरीरयात्राप्रसिद्धेः अपि ॥ ५ ॥ यज्ञार्थमेव कर्मकरणं अबन्धकत्वात् ॥६॥ इतरथा पापप्रसक्तेश्च ॥७॥ ज्ञस्य कर्माभावः स्वार्थाभावात् ॥ ८ ॥ तथापि स्वाभाविकः कर्मयोगः निष्क्रियत्वासंभवात् लोकसंग्रहाच्च ॥ ९ ॥ पद्मचन्दनेक्षुदण्डहेमव्रतं हि कर्मयोगः ॥ १० ॥ ज्ञाज्ञयोरविशेष इति चेन्न विशेषदर्शनात् ॥ ११ ॥ प्रकृतेः कर्तृत्वं उपपत्तेः ॥ १२ ॥ अत एव प्रपत्तिपूर्वकस्य कर्मयोगस्य ज्यायस्त्वम् ॥ १३ ॥ ततो हि कर्ममोक्षः ॥ १४ ॥ स्वपरधर्मयोः स्वधर्म एव श्रेयान् अभयावहत्वात् ॥ १५ ॥ काम एव शत्रुः परधर्मप्रयोजकत्वात् आवरकत्वात् अनलवत् दुष्पूरत्वाच्च ॥ १६ ॥ इन्द्रियादिजयपूर्वक-परदर्शनात् कामनाशः विरोधित्वात् ॥ १७॥ (पृ०२८-४२)

॥ इति कर्मयोगः ॥

## ॥ अथ ज्ञानयोगः ॥

प्राचीनतमः कर्मयोगः सृष्टिसहजत्वात् ॥ १ ॥ अवतारवादावतारणार्थं हि अर्जुनप्रश्नः ॥ २ ॥ अवतारजन्मनोः भेददर्शनात् आमोक्षं तत्पारतन्त्र्यम् ॥ ३ ॥ अवतारो हि क्रान्तिः रहस्यसाम्यात् ॥ ४ ॥ तत्प्रयोजनतत्त्वज्ञानात् सिद्धिः मोक्षोपदेशात् ॥ ५ ॥ फलस्पृहायाः लेपप्रसक्तेः स्वदृष्टान्तसमार्थितत्वात् हि कर्मयोगादेशः ॥६॥ गहनगतित्वात् कर्मणः तत्पूर्विका प्रवृत्तिः ॥७॥ एकस्मिन् उभयदर्शनशीलस्य कर्मयोगित्वं कृत्स्नकर्मकरत्वात् ॥ ८ ॥ कर्तृत्वेऽपि अकर्तृत्वं दृष्टिसंपत्तेः ॥ ९ ॥ चरितार्थत्वं कर्मणः ज्ञाने, तत्र परिसमाप्तेः ॥ १० ॥ गुरूपसत्तेः ज्ञानम् ॥ ११ ॥ ज्ञानादात्मदर्शनम् ॥ १२ ॥ साधननिर्भरत्वात् विद्यायाः तद्रहितस्य तदप्राप्तिः ॥ १३ ॥ आत्मवतः कर्मालेपदर्शनात् कर्मयोगाग्रहः औचित्यपूर्णः ॥ १४ ॥ (पृ० ४२-६३)

॥ इति ज्ञानयोगः ॥

## ॥ अथ कर्मसंन्यासयोगः ॥

उभयोः शंसनात् प्रश्नः ॥ १ ॥ कर्मयोगस्य वैशिष्ट्य नित्यसंन्यासावहत्वात् ॥ २ ॥ कार्यकारणभावाच्च ॥ ३ ॥ योगफलं तत्त्वज्ञानं तदधीनत्वात् ॥ ४ ॥ संगत्यागात् अहंभावाभावात् कर्मालेपः ॥ ५ ॥ कर्मणः शुद्धिः ततश्च शान्तिः ॥ ६ ॥ न आत्मनः कर्तृत्वादिकं अभ्यासस्य तत्त्वाऽस्पर्शित्वात् ॥ ७ ॥ ज्ञानादध्यास-प्रहाणिः विरोधित्वात् ॥ ८ ॥ ततः ब्रह्मणाभेदः तस्य निर्दोषत्वात् समत्वाच्च ॥ ९ ॥ प्रकृतिस्पर्शस्य दुःखयोनित्वात् तत्त्वे एव रमणम् ॥ १० ॥ विदितात्मनः जीवन्मुक्तिरेव ॥ ११ ॥ ( पृ० ५३–६१ )

॥ इति कर्मसंन्यासयोगः ॥

## ॥ अथ आत्मसंयमयोगः ॥

त्यागो हि फलस्य न कर्मणः शक्यस्यैवोपदेशार्हत्वात् ॥ १ ॥ त्यागस्य योग्यता योगात् ॥ २ ॥ सर्वेषु योगेष्वनुस्यूतत्वात् सर्वमूलत्वाच्च योगोऽत्र पातंजलोक्तः ॥ ३ ॥ योगे युक्ततायाः आग्रहः फलसाधकत्वात् ॥ ४ ॥ फलान्तयोगाभ्यासाग्रहः दुःखवियोगकरत्वात् ॥ ५ ॥ योगपरिपाकात् आत्मदर्शनम् ॥ ६ ॥ योगस्य प्रान्तभूमित्वात् आत्मौपम्येन वर्तनं श्रेष्ठम् ॥ ७ ॥ असाध्यो योगः चांचल्यादिविद्धत्वात् इति चेन्न वैराग्याभ्यासाभ्यां साध्यत्वात् ॥ ८ ॥ कृतस्याविनाशात् सत्वात् च आत्मनः न योगभ्रेषात् हानिः ॥ ९ ॥ पौर्वदेहिकबुद्धिसंयोगस्य लाभात् सुप्तोत्थितवत् पुनरनुसंधानम् ॥ १० ॥ स्वरूपावस्थितः श्रेष्ठः अवधिदर्शनात् ॥ ११ ॥ ( पृ० ६१–७१ )

॥ इति आत्मसंयमयोगः ॥

## ॥ अथ ज्ञानविज्ञानयोगः ॥

दुर्लभतमं हि तत्त्वज्ञानं सौक्ष्म्यात्वधेः ॥ १ ॥ सर्वशक्तिमत्वं भगवतः उत्पत्त्यादेः ॥ २ ॥ सर्वव्यापित्वं कारणत्वात् ॥ ३ ॥ पराभावः अनवस्थाप्रसंगात् ॥ ४ ॥ निराधारोऽपि सर्वाधारः अधिष्ठानत्वात् ॥ ५ ॥ अप्रमेयः प्रमाणानां तत्राप्रवृत्तेः ॥ ६ ॥ तत्त्वानवबोधः मायायाः आवरकत्वात् ॥ ७ ॥ मायासंतरणं प्रपत्तेः ॥ ८ ॥ प्रपत्तिः ईश्वराज्ञापालनं ॥ ९ ॥ अप्रपत्तिः मौढ्यात् ॥ १० ॥ प्रबोधात् प्रपत्तिः ॥ ११ ॥ चतुर्विधो भक्तः आर्तादिभेदात् ॥ १२ ॥ तत्र ज्ञानिनः श्रेष्ठत्वं भगवदात्मत्वात् ॥ १३ ॥ तादृशस्य दुर्लभत्वं साधनायाः दुष्करत्वात् तदृऋते च ज्ञाननिष्ठायाः अलाभात् ॥ १४ ॥ सर्वकर्मफलदातृत्वं सर्वज्ञत्वात् ॥ १५ ॥ सर्वसंमोहः द्वंद्वमोहात् ॥ १६ ॥ भजनान्मोक्षः ॥ १७ ॥ (पृ० ७१–८३)

॥ इति ज्ञानविज्ञानयोगः ॥

## ॥ अथ अक्षरब्रह्मयोगः ॥

अर्जुनस्य प्रश्नसप्तकं व्यवहारनियामकत्वात् तत्त्वज्ञानस्य ॥१॥ प्रतिवचनं षट्कस्य समासेन व्यासस्यान्यत्र दृष्टत्वात् ॥२॥ मतिनियम्या हि गतिः प्रेरकत्वात् ॥३॥ भगवदनुस्मरणमेव भावस्य भवकारणत्वात् उत्क्रान्तेः जीवनपशुनत्वात् च ॥४॥ भगवत्प्राप्तेः अपुनरावृत्तिः सामग्रीविरहात् ॥५॥ प्रभवाप्ययोल्लेखः वैराग्यप्रबोधनार्थः ॥६॥ विरागपुष्टानन्यभक्ते परलाभः तस्याः साधनत्वात् ॥७॥ शुक्लकृष्णगत्योः शास्त्रीयत्वेऽपि लोकमानसादरार्थं उल्लेखः तत्त्वज्ञाने कालकृतविशेषस्याकिंचित्करत्वात् ज्ञानिनः मोहाभावस्य स्वयमेव प्रदर्शितत्वाच्च ॥८॥ योगस्य प्रशंसनं परमफलदातृत्वात् ॥ ९ ॥ (पृ. ८३–९१)

॥ इति अक्षरब्रह्मयोगः ॥

## ॥ अथ राजविद्याराजगुह्ययोगः ॥

ज्ञानस्य राजगुह्यतमत्वादिकं परमात्मतत्त्वोपदेशात् ॥ १ ॥ प्रेम्णः महिमज्ञानमूलत्वात् स्वमहिमवर्णन-प्रतिज्ञा ॥ २ ॥ तत्त्वस्याव्यक्तत्वं–यौगैश्वर्ययुक्तत्वं–अधिष्ठानत्वं–अप्रमेयत्वं–कर्तृत्वेपि अलिप्तत्वं वैषम्यनैर्घृण्यरहितत्वं अध्यक्षत्वं हि गुह्यतमत्वम् ॥ ३ ॥ दैवासुरसंपद्विभागस्य बीजोपन्यासः दैवीप्रकृतियुक्तस्य भजनप्रकारविधानार्थम् ॥ ४ ॥ विश्वतोमुखस्य भजनं अखण्डदृष्टेः एव फललाभात् ॥ ५ ॥ सकामभक्तेः निन्दनम् पुनरावृत्तेः ॥६॥ निष्कामायाः प्रशंसनं तत्त्वलाभात् ॥७॥ अन्यशरणं मोहात् ॥ ८ ॥ न पदार्थापेक्षा भावप्रियत्वात् भगवतः ॥९॥ समर्पणं प्रेमरहस्यं कर्मबन्धविनिवृत्तेः ॥ १० ॥ अनतिवदनीयं सत्कर्ममाहात्म्यं सत्त्वादेव ॥११॥ भक्तिरेव लोकस्यानित्यत्वात् असुखत्वाच्च ॥१२॥ ज्ञानादभिन्ना भक्तिः समानफलत्वात् ॥१३॥ (पृ. ९१–१०२)

॥ इति राजविद्याराजगुह्ययोगः ॥

## ॥ अथ विभूतियोगः ॥

हितकाम्यया विभूतिख्यापन-प्रतिज्ञा ॥ १ ॥ दुर्विज्ञेयः भगवत्प्रभावः आदित्वात्, शिशुवत् ॥ २ ॥ प्रभाववेदनात् पापप्रमोकः ॥ ३ ॥ अन्तर्यामित्वं भूतभावनियामकत्वात् ॥ ४ ॥ सततयुक्तानां भगवदुपयानं तद्दत्तबुद्धियोगात् ॥ ५ ॥ अज्ञानजतमोनाशः भगवदनुकम्पयैव–अधिकारात् ॥ ६ ॥ विभूतिज्ञानार्थं प्रार्थना ॥ ७ ॥ आनन्त्यं विभूतेः अनन्तत्वात् ॥ ८ ॥ एकांशेन जगद्रूपेण संस्थितिश्च उत्कर्षात् ॥ ९ ॥ (पृ. १०२–१०८)

॥ इति विभूतियोगः ॥

## ॥ अथ विश्वरूपदर्शनयोगः ॥

श्रवणात् दर्शनं ज्यायः सद्यः प्रतीतिकरत्वात् ॥ १ ॥ अतः दर्शनार्थं

विज्ञप्तिः ॥ २ ॥ स्वीकारः दृष्टिदानं च ॥ ३ ॥ दिव्यदृष्टिः समाधिः उपपत्तेः ॥ ४ ॥ विश्वरूपेण प्राकट्यं अहंकारदलनार्थम् ॥ ५ ॥ दर्शनात् स्तुतिः ॥ ६ ॥ ईशप्रवृत्तिजिज्ञासा संदेहात् । ७ ॥ मोहभंगः निमित्तमात्रत्वस्यभानात् ॥ ८ ॥ दौर्लभ्यं साधनाविरहात् ॥ ९ ॥ साधनोल्लेखः तन्निर्भरत्वात् दर्शनस्य ॥ १० ॥ (पृ० १०८–११५)

॥ इति विश्वरूपदर्शनयोगः ॥

## ॥ अथ भक्तियोगः ॥

द्विविधं भगवद्रूपं व्यक्ताव्यक्तभेदात् श्रुतेश्च ॥ १ ॥ अतः उपासनाऽपि द्विविधा ॥ २ ॥ तत्र दुष्करोत्तरा देहाध्याससत्वात् ॥ ३ ॥ नत्वितरा प्रत्यक्षत्वादुद्धरणदीक्षितत्वाच्च भगवतः ॥ ४ ॥ फलत्यागः उत्तमः विविधोपायानां तत्रैव पर्यवसायित्वात् ॥ ५ ॥ सिद्धभक्तलक्षणोपन्यासः साधकानां प्रेरकत्वात् आदर्शवत् साधनाविकासपिशुनत्वाच्च ॥ ६ ॥ भक्तिज्ञानयोरभेदः परिभाषाभेदमात्रभिन्नत्वात् सत्वस्य च एकरूपत्वात् ॥ ७ ॥ (पृ० ११५–१२०)

॥ इति भक्तियोगः ॥

## ॥ अथ क्षेत्रक्षेत्रज्ञविभागयोगः ॥

रूपकन्यासः विवेकमूलत्वात् भक्तेः ॥ १ ॥ शरीरं क्षेत्रं क्लेशकर्मबीजप्ररोहभूमित्वात् ॥ २ ॥ शरीरी क्षेत्रज्ञः तत्स्वामित्वात् ॥ ३ ॥ स च ब्रह्माभिन्नः शास्त्रान्वयात् उपपत्तेः अनुभूतेश्च ॥ ४ ॥ क्षेत्रविवरणम् विवेकोपकारावहत्वात् ॥ ५ ॥ ज्ञानसाधननिरूपणं तदधीनत्वात् ज्ञेयज्ञानसिद्धेः ॥ ६ ॥ क्षेत्रज्ञस्वरूपविवरणं अनुभूतेः संवादार्थम् ॥ ७ ॥ ज्ञानगम्यं हि अमृतत्वम् ॥ ८ ॥ ज्ञानादि त्रितयं न बहिः मृग्यं अन्तःसत्वात् जरठावत् ॥९॥ क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषरूपेण पुनरालोचनं अर्थस्य सूक्ष्मत्वात् परिभाषासामंजस्यविधायकत्वात् च ॥ १० ॥ तत्प्राप्त्युपायान्तरनिर्देशेऽपि न उपायानां मिथः तात्त्विकभेदः भूमिकाभेदेनैव भिन्नत्वाभासात् रुचिसंस्कारवैचित्र्याच्च ॥ ११ ॥ तत्त्वज्ञानान्मुक्तिः साधकतमत्वात् ॥ १२ ॥ सत्याः एव आविर्भावात् न मुक्तेः क्रियासाध्यत्वं स्वरूपावस्थितेरेव तत्त्वाच्च ॥ १३ ॥ (पृ० १२१–१३०)

॥ इति क्षेत्रक्षेत्रज्ञविभागयोगः ॥

## ॥ अथ गुणत्रयविभागयोगः ॥

भूयोऽपि प्रवचनप्रतिज्ञा, अर्थस्य सौक्ष्म्यात् ज्ञानदार्ढ्यस्यापेक्षितत्वात् च ॥ १ ॥ पुम्प्रकृत्योरविप्लवविवेकात् सिद्धिः ॥ २ ॥ संसारस्यानादित्वात् अकृतार्थजीवजातादृष्टापेक्षेश्वरेक्षणवशात् त्रिगुणविषमावस्थितिः संसारः ॥ ३ ॥ जीवस्य पितराविव परमात्मप्रकृती ॥ ४ ॥ बहुप्रजेव जननी बध्नाति

गुणसंगिनं जीवं गूढाकृतिः प्रकृतिः शिशुवत् ॥ ५ ॥ गुणानां स्वरूप-प्रतिपादनं विवेकोपलब्ध्यर्थम् ॥ ६ ॥ चिह्नेभ्यः गुणविज्ञानं वैराग्योपशिक्षार्थम् फलतुच्छत्वप्रदर्शनार्थं च ॥ ७ ॥ अनघं इव शिशुं जहाति जीवं प्रकृतिः प्रसन्ना ॥ ८ ॥ अविप्लुतविवेकः प्रान्तभूमिः प्रसन्नतयाः ॥ ९ ॥ पूर्ववत् त्रिगुणातीत-लक्षणदानम् ॥ १० ॥ तेन ज्ञानादित्रितयस्याभेद-सिद्धिः ॥ ११ ॥ ( पृ. १३०–१३७ ) ॥ इति गुणत्रयविभागयोगः ॥

## ॥ अथ पुरुषोत्तमयोगः ॥

अस्य शास्त्रत्वं तत्त्वस्वरूपनिर्वचनात् ॥ १ ॥ त्रीणितत्त्वानि जगज्जीवेश्वरभेदात् ॥ २ ॥ संसारो वृक्षः उच्छेद्यत्वादिसाम्यत् ॥ ३ ॥ तत्पदनिर्देश-पूर्वकः साधननिर्देशः तन्निर्भरत्वात् तत्प्राप्तेः ॥ ४ ॥ जीवभावः उपाधियोगात् ॥ ५ ॥ ज्ञानात् तद्भेदे अभेदः ॥ ६ ॥ सच्चिदानन्दात्मको हि देवः अबाधितत्वात् प्रकाशकत्वात् आत्मत्वाच्च ॥७॥ क्षराक्षरौ विकृतिप्रकृती उपपत्ते ॥ ८ ॥ पुरुषपदवाच्यत्वं भोगापवर्गसाधकत्वात् गौणं तद्भिन्नस्य मुख्यस्य प्रतिपादनात् च ॥ ९ ॥ अन्य इति चेन्न श्रुति-स्मृतियुक्तिअनुभवव्याकोपात् ॥ १० ॥ गुह्यतमत्वं तत्त्वनिरुपणात् तत्त्वस्य च कृतकृत्यतावहकत्वात् ॥११॥ ( पृ. १३७–१४५ ) ॥ इति पुरुषोत्तमयोगः ॥

## ॥ अथ देवासुरसंपद्विभागयोगः ॥

दैवासुरसंपद्विभागः हानोपादानार्थत्वात् ॥ १ ॥ प्राप्तिभेदः संपद्भेदात् ॥ २ ॥ आसुर्याः वर्जनम् श्रेयोविघातकत्वात् ॥ ३ ॥ कामादित्रितयस्य त्यागः नरकद्वारभूतत्वात् ॥४॥ शास्त्रप्रतिष्ठा नियामकत्वात् ॥५॥ ( पृ. १४५–१४९ ) ॥ इति दैवासुरसंपद्विभागयोगः ॥

## ॥ अथ श्रद्धात्रयविभागयोगः ॥

निष्ठाप्रश्नः श्रद्धायाः नियामकत्वात् ॥ १ ॥ तत्त्वं तस्याः पुरुषस्य तन्मयत्वदर्शनात् ॥ २ ॥ सात्विकादि जीवभेदः श्रद्धाभेदात् ॥ ३ ॥ आहारा-दीनां त्रैविध्यं सात्त्विकादिभेदात् ॥ ४ ॥ आहारादीनां मीमांसा निष्ठानिर्माण-कर्तृत्वात् ॥ ५ ॥ ॐ तत्सन्मीमांसा श्रेयःफलत्वात् ॥ ६ ॥ अश्रद्धाफलनिरूपणं श्रद्धोत्कर्षकरत्वात् ॥ ७ ॥ ( पृ. १५०–१५५ ) ॥ इति श्रद्धात्रयविभागयोगः ॥

## ॥ अथ संन्यासमोक्षयोगः ॥

संन्यासत्यागतत्त्वसंदेहः जिज्ञास्यत्वात् ॥ १ ॥ काम्यस्य त्यागः संन्यासः कामनात्यागात् सर्वकर्मफलन्यासः त्यागः आत्मनः आप्तकामत्वात आवापोद्वा-

परहितत्वात् वृद्धिह्रासाभावात् अनपेक्षत्वाच्च ॥ २ ॥ यज्ञादीनां अत्यागः पावनत्वात् लोकसंग्रहहेतुत्वाच्च ॥ ३ ॥ नियतानामपि दर्शनरोधात् ॥ ४ ॥ त्यागस्य त्रैविध्यं सत्वादिभेदात् ॥ ५ ॥ फलत्यागस्य शक्यत्वात् कर्मणश्चाशक्यत्वात् फलत्याग एव ॥ ६ ॥ असंगः पुरुषः केवलत्वात् अहंभावाभावाच्च ॥ ७ ॥ अत एव कर्तृत्वभोक्त्वाद्यभावः ॥ ८ ॥ ज्ञानादिसुखान्तानां त्रैविध्यम् गुणभेदात् ॥ ९ ॥ ब्राह्मणादि प्रकृतिनिर्देशः न उच्चावचभावप्रस्थापनाय सिद्धान्तहानेः ॥ १० ॥ आत्मपूजकं कर्म नैष्कर्म्यहेतुत्वात् ॥ ११ ॥ नैष्कर्म्यलाभः साधनयोगात् ॥ १२ ॥ ज्ञानभक्त्योः इतरेतरपोषकत्वं अनुभवात् ॥ १३ ॥ तल्लाभः प्रपत्तेः साधनत्वात् ॥ १४ ॥ तद्धि परमरहस्यं हिततमत्वात् जीवप्रियतमत्वादीशस्य च ॥ १५ ॥ शोकाभावः आत्मज्ञानात् श्रुतेश्च ॥ १६ ॥ अधिकारनिर्देशः तद्विहीनानां अनुपकारकत्वात् ॥ १७ ॥ शिष्यज्ञानपरीक्षार्थं भगवत्प्रश्नः श्रवणविधिप्रदर्शनार्थं च ॥ १८ ॥ फलनिर्देशात् प्रतिवचनं माहात्म्यसूचकम् ॥ १९ ॥ जयपराजययोर्निर्णयमुखेनोपसंहारः ॥ २० ॥ (पृ० १५६–१७०)

॥ इति संन्यासमोक्षयोगः ॥

## ॥ अथोपसंहाराध्यायः ॥

गीतोपनिषत् मोहमारकत्वात् ॥ १ ॥ शोकः मोहात् ॥ २ ॥ मोहविच्छित्तिः आत्मज्ञानात् श्रुतेः ॥ ३ ॥ आत्मदर्शनयोग्यता यागात् ॥ ४ ॥ एकत्वेऽपि वैविध्यं रुचिभेदात् प्रकृतिवैचित्र्यात् दृष्टिभूमिकाभेदाच्च ॥ ५ ॥ आत्मज्ञानमूलकः भक्तिप्रधानः निष्कामकर्मयोगः निष्कर्षात् ॥ ६ ॥ ऊर्ध्वमपि कर्मयोगः साहजिकत्वात् सृष्टिरहस्यत्वाच्च ॥ ७ ॥ सेवायां विनियोगः सर्वस्य शेषसृष्टिवत् ॥ ८ ॥ तत आत्मनिष्ठा ॥ ९ ॥ प्राप्तिः त्यागात् प्राप्तिः त्यागादिति ॥ १० ॥ (पृ० १७०–१७५)

॥ इत्युपसंहाराध्यायः ॥

स्वान्तःकरणतोषाय मोदाय सहधर्मिणाम्<br>
मया नलिनभट्टेन हरिप्रेरणया कृतम् ॥ १ ॥<br>
अपूर्वं दर्शनं देव्याः गीतायाः योगसंभृतम् ।<br>
भूयात् हृदयनिष्ठस्य हरेः संतोषसाधकम् ॥ २ ॥<br>
श्रवणं मननं ध्यानं दर्शनं च चतुष्टयम्-<br>
कृतं देवप्रसादेन मामकीनं न किंचन ॥ ३ ॥<br>
मामकीनो न चैवाहं मत्स्वस्य च कथैव का<br>
भगवन्तावकीनोऽस्मि प्रसीद दर्शनात् सदा ॥ ४ ॥

हरिः ॐ तत् सत्

★

## સ્વ. નટવરલાલ ભગવાનલાલ દેસાઈ

—: પુષ્પાંજલિ :—

જેના ઉદાર અને હસમુખા સ્વભાવની પ્રેરણાથી મને આજે દુ:ખમાં પણ આનન્દિત રહેવાની અને દાન કરવાની વૃત્તિ રહી છે. તેમને અર્પણ—

—સાવિત્રી નટવરલાલ દેસાઇ

# — ગીતા દર્શન —


સંસ્કૃતમાં મૂળ લેખક

**પ્રા૦ નલિન મ. ભટ્ટ**

પ્રસ્થાનત્રયી આદિના

ભાષ્યકાર

તંત્રી : ગીતા બન્ધુ

અનુવાદક

**શ્રી. માલતી ર. શ્રોફ**

એમ. એ. એમ. ઈડ.

સહતન્ત્રી : ગીતાબન્ધુ

ॐ

## – પ્રકાશકના બે બોલ –

જીવનના ઉચ્ચ પથ પર જવા ઈચ્છનારને માટે, આ ગીતાદર્શન ગ્રંથ, કેડીરૂપ છે. ૫૦૦૦ વર્ષ વહી ગયા હોવા છતાં ભગવાન્ શ્રીકૃષ્ણે ગાયેલી ગીતાનો પાર પામનાર કોઈક વિરલાઓ જ આ ધરતીને ખોળે પ્રકટ્યા છે. રમણીય અને હૃદયંગમ એવાં ગીતાજીનું મંથન કરી, નવનીતરૂપે, એનાં સૂત્રો આચાર્ય શ્રી. નલિનભાઈએ તારવી કાઢ્યાં અને એ સૂત્રો પર સ્વયં સંસ્કૃતમાં ભાષ્ય લખી, સૂત્રોની ધ્રડી ઉકેલી જગત સમક્ષ ધરી. આવો અનુપમ પ્રયત્ન આજ સુધી ભાગ્યે જ કોઈએ કર્યો હશે.

એમના હૃદયમાં ઈશ્વરે અને એમના ગુરુદેવે સ્ફુરણાદ્વારા આ દિવ્ય કામ કરાવ્યું છે, એવો અનુભવ વાંચક વર્ગને થયા વિના નહીં રહે. ગીતા, ઉપનિષદો, અને બ્રહ્મસૂત્ર જેવા ગહન, તથા ગંભીર ગ્રંથોને રસ, માધુર્ય, અને બની શકે એટલી સરળતા ભરી શૈલીથી જનતાના હાથમાં એમણે મૂક્યા છે. ગીતા ઉપર એમણે કેટલાંએ ગ્રંથો જાતજાતના દૃષ્ટિબિન્દુથી લખ્યા જ છે, એ બાદ કળશરૂપ ગીતાદર્શન ગ્રંથ ભાષ્ય સહિત સૂત્રો રૂપે પ્રાદુર્ભૂત થયો.

એક દિવસ ભારતમાં એવો હતો જ્યારે સૌ સંસ્કૃત ભાષા બોલતા, પરંતુ એ ભાષા સમાજમાંથી સરકતી જાય છે, તેથી આ ગ્રંથ સાથે ગુજરાતી અનુવાદ પણ આપ્યો છે.

આ અનુવાદનું કામ પણ માનવ ધારે છે એટલું સુગમ નથી. સંસ્કૃતના તળમાં ઉતર્યા વિના અનુવાદ કરવો લગભગ અશક્ય જ બને. મૂળ લખાણ ને સહેજ પણ અન્યાય ન થાય, તથા એનું શૈલીસ્વાસ્થ્ય ન ઘટે, એ રીતે અનુવાદ થાય તો મૂળ ગ્રંથનો ભાવ સમાજ હૃદયમાં પ્રતિબિંબિત થાય. આ કઠિન કાર્ય શ્રી. માલતીબેને રસથી કર્યું છે, એ બદલ એમને ધન્યવાદ. એઓ અભ્યાસના ખૂબ રસીયા છે, ઈશ્વિર હજી પણ એમને આગળ કાર્ય કરવા શક્તિ બક્ષે.

શ્રેય માર્ગ પર ચાલવા માટે આચાર્ય શ્રી. નલિનભાઈ સૌના પ્રેરક બન્યા છે. આથી જનતા એમની ઋણી છે. એમાંથી ઉર્ઋણ થવા પરમાત્મા સૌને પ્રેરો. કરૂણા નિધાન પરમાત્માને ચરણે એક જ પ્રાર્થના કે શ્રી. નલિનભાઈને સદા આ રીતે લોકોત્તર સેવા કરવા માટે અખૂટ, દિવ્ય શકિત પ્રદાન કરો.

આ પ્રેરણાત્મક ગ્રંથ સૌના જીવનમાં નવો ઉત્સાહ, નવી પ્રેરણા, નવી વિચાર-માળાની જ્યોત જલાવો, એટલી વિશ્વાત્મા શ્રીકૃષ્ણચંદ્રચરણે અમારી પ્રાર્થના :—

૨૪, પારિજાત.<br>૯૫, મરીન ડ્રાઈવ<br>મુંબઈ. ૨.

— ઇન્દુમતી ર. શાહ

## — અનુવાદકના બે બોલ —

પૂ. શ્રી. નલિનભાઈ ભટ્ટ રચિત ગીતાદર્શન ગ્રંથ તેના ગુજરાતી અનુવાદ સહિત જનતાની સેવામાં રજૂ કરતાં આનંદ થાય છે. આ પહેલાં પણ ગીતા સાધનભાષ્ય, સ્વાધ્યાય ગીતા, ગીતા શ્રવણ, ગીતા મનન, ગીતા ધ્યાન, ગીતા સારણી, ગીતા સમશ્લોકી, ગીતા પોકેટ સીરીઝ, વગેરે ગીતા વિષયક અનેક ગ્રંથો તથા પ્રવચનો દ્વારા પૂ શ્રી. નલિનભાઈના દીર્ઘ ચિન્તન અને તલસ્પર્શી અભ્યાસનો લાભ જનતાને મળ્યો જ છે. "ગીતાબંધુ ગ્રંથાવલિ" ના ગીતા સાહિત્યનું, આ ગ્રંથ એક ઉત્કૃષ્ટ બિંદુ છે. આત્માને લગતા શ્રવણ, મનન અને ધ્યાન, દર્શનમાં પરિણમવાં ઘટે, દર્શનમાં તેમની કૃતાર્થતા છે. તે જ પ્રમાણે સદ્‌ગ્રંથોનાં શ્રવણ, મનન, નિદિધ્યાસ તેના સારને ગ્રહણ કરવામાં કૃતાર્થ થાય. પૂ. શ્રી. નલિનભાઈએ ગીતાદર્શનના રૂપમાં, એમના વિસ્તૃત ગીતા સાહિત્યના સારને, સૂત્રમાં ગૂંથી લીધો છે. આ એમનો એક અપૂર્વ પ્રયોગ છે. સૂત્રનાં લેખન માટે ઊંડો અભ્યાસ, સત્યચિંતન તથા સારગ્રાહી મધુકર વૃત્તિ હોવી જોઈએ. એ અહીં પ્રતીત થાય છે. આ ગ્રંથમાં અન્યત્ર આપેલાં કેવળ સૂત્રો પણ સ્વધ્યાયની ગરજ સારે એવાં છે. સૂત્ર સાહિત્ય સંસ્કૃત ભાષાની બેનમૂન શોધ છે. વડને ટેટામાં સમાવવાનો એ પ્રયોગ છે. સત્યની એ કઠોર સાધના છે. એમાં કડીબધ્ધ વિચારોના સીમાચિહ્નો આપવામાં આવતા હોઈને અતિ વિસ્તૃત બનેલા સંસ્કૃત સાહિત્યને જાળવી રાખવા માટે, લગભગ દરેક જ્ઞાનની શાખામાં, એને સ્થાન મળ્યું છે. ગીતાના તત્ત્વજ્ઞાનને, અત્યાર સુધીમાં કોઈએ આ રીતે સૂત્રબદ્ધ કર્યું જાણ્યું નથી. ગીતાનું કલેવર આમ તો બહુ મોટું નથી છતાં આજના રોકેટ અને જેટના ઝડપી જમાનામાં તેને ખૂબજ સંક્ષિપ્ત કરી આપી, લેખકે જમાનાની માંગ પૂરી કરી છે. સૂત્રની તો વ્યાખ્યા જ છે :—

**अल्पाक्षरं असंदिग्धं सारवत् विश्वतोमुखम् ॥**
**अस्तोभं अनवद्यं च सूत्रं सूत्रविदो विदुः ॥**

"મિતાક્ષર, નિઃસન્દેહ, સારભર્યું, ચોમેર મુખવાળું, અપ્રતિબદ્ધ અને નિર્દોષ હોય છે સૂત્ર-એમ સૂત્રના જાણકારો કહે છે."

સૂત્રો સંક્ષિપ્ત હોઈને, એનું સ્પષ્ટીકરણ કરતું તથા સૂત્રો વચ્ચેનો સંબંધ દર્શાવતું ભાષ્ય નામનું સાહિત્યનું ક્ષેત્ર પણ સંસ્કૃત ભાષામાં ખૂબ ખેડાએલું છે. સૂત્ર "વિશ્વતો મુખ" હોઈને એનાં અનેક અર્થો નીકળે એટલે સૂત્રના લેખકને કયો અર્થ માન્ય છે એ જાણવું મુશ્કેલ પડે. પણ અહીં સૂત્રના લેખકે જ પોતે સ્વરચિત ભાષ્યથી એને વિભૂષિત કર્યાં છે. ભાષ્યની ભાષા ખૂબ સરળ, હૃદયંગમ છતાં વિદ્વદ્‌ભોગ્ય છે. તત્ત્વજ્ઞાનના ગંભીર વિષયને ખૂબ સરળતાથી સમજાવવાની લેખકને હથોટી આવી ગઈ છે—એ એમના દૃઢભૂમિ અભ્યાસ, ગાઢ ચિંતન અને

તલસ્પર્શી જ્ઞાનની દ્યોતક છે. સાધારણ સંસ્કૃતભાષા જાણનાર પણ મહાવરાથી સહેલાઈથી સમજી શકે, એવી એ ભાષા છે. પરંતુ ભાષ્યની શૈલીથી અપરિચિત ભાઈબેનોને ઉપયોગી થઈ શકે એ વિચારે ગુજરાતીમાં તેનું ભાષાન્તર આપવામાં આવ્યું છે.

ભાષ્યમાં શંકા ઉઠાવનાર એક પૂર્વપક્ષ હોય અને સમાધાન આપનાર બીજો-ઉત્તર પક્ષ અથવા સિદ્ધાન્તપક્ષ હોય. ननु = 'પરંતુ' શબ્દથી મોટે ભાગે શંકા ઉઠાવનાર પોતાનો પક્ષ રજુ કરે, પોતાના વિચારોનું દાખલાદલીલ પૂર્વક પ્રસ્થાપન કરે. ત્યાર બાદ 'एवं प्राप्ते ब्रवीति' 'आह' = "આવી શંકા થતાં કહે છે" વગેરે શબ્દો દ્વારા સમાધાન દેનાર સિદ્ધાન્ત પક્ષ, પોતાના શાસ્ત્રીય, તર્કસુસંગત, શ્રુતિ-સ્મૃતિ માન્ય વિચારોને રજૂ કરી શંકા દૂર કરે. આ ભાષ્યમાં મોટે ભાગે પૂર્વ-પક્ષની દલીલો સૂત્ર ટાંકતા પહેલાં અવતરણિકામાં રજુ કરી છે. અને સૂત્રો દ્વારા એનું સમાધાન આપ્યું છે. કવચિત સૂત્રમાં પૂર્વપક્ષ અને ઉત્તરપક્ષ એમ બન્ને આવે છે ત્યારે પૂર્વપક્ષની દલીલ બાદ "इति चेत् न"—એમ જો માનતા હો તો ના–એ બરોબર નથી"—એમ કરી સિદ્ધાન્તી સિદ્ધાન્તને રજુ કરે છે. કવ-ચિત્ સિદ્ધાન્તી પોતાનો પક્ષ રજૂ કરતો હોય ત્યાં વચ્ચે જ પૂર્વપક્ષી તેને અટકાવીને કોઈ પ્રશ્ન પૂછી પાડે છે! એને જવાબ આપીને જ સિદ્ધાન્તીએ આગળ વધવાનું હોય. આમ બે પક્ષ વચ્ચે વાદવિવાદ રૂપે ભાષ્ય ગ્રંથ લખાતા હોઈ ને, એ શૈલી ખૂબ રસિક બને છે. આટલી સમજૂતી બાદ ગૂજરાતી ભાષાન્તર વાંચવામાં તકલીફ નહીં પડે એમ લાગે છે.

ગુજરાતી ભાષાન્તરમાં ગીતાના સંસ્કૃત શ્લોકો નથી આપ્યા પણ તેનું સમશ્લોકી ભાષાન્તર જ આપ્યું છે. કારણ સંસ્કૃત ભાષ્યની સાથે સાથે જ ગુજરાતી અનુવાદ સૌ વાંચશે એવી અમારી મૂળ કલ્પના છે. સમશ્લોકી ભાષાન્તર પૂ. શ્રી નલિનભાઈના ગ્રંથમાંથી તૈયાર જ લઈ લીધું છે. બીજી શ્રુતિ-ઓનો પણ અર્થ જ આપ્યો છે.

અનુવાદમાં મૂળને વફાદાર રહેવાનો યત્ન કર્યો છે પણ મૂળ સંસ્કૃત શૈલીની પ્રવાહિતા એમાં કદાચ જોવા નહીં મળે અને એને લીધે કયાંક કનકનું કથીર થઈ ગયું હોય એમ બને. સંપૂર્ણ અનુવાદ જોઈ જવાનું કામ પૂ. શ્રી નલિનભાઈએ સહર્ષ કરી આપ્યું છે એ માટે એમનો આભાર

આ કાર્યમાં રસપૂર્વક અને સહાનુભૂતિપૂર્વક પ્રેરણા આપવા બદલ સહકાર્ય-કરો, ગ્રંથને પ્રકાશમાં લાવવામાં સહાય કરવા માટે દાતાઓ, ઝડપથી સુંદર રીતે મુદ્રણ કરી આપવા બદલ પ્રેસના કાર્યકરો વગેરે સૌનું અહીં ઋણ સ્વીકારીએ છીએ.

માલતી શ્રોફ

## – અસ્મદીયમ્ –

અમારે આ દર્શન વિષે કશું જ કહેવાનું નથી. ગીતા ક્ષીરાબ્ધિના વર્ષોના મંથન બાદ પ્રભુકૃપાએ જે નવનીત લાધ્યું છે તે જનતા જનાર્દનની સેવામાં નિવેદિત કર્યું છે. એમાં જો ક્યાંય ગંગાજળ જણાય તો તે ગુરુદેવની નિર્વ્યાજ કરુણા છે અને જગદ્‌ગુરુ ગોપાળકૃષ્ણની નિર્નિમિત્ત અનુકંપા જ છે. જે કાંઈ અનાપ્તતા લાવનારું હોય તે આ જીવનું છે. સમાધિ હોય તો ઈશપ્રસાદ છે. વિક્ષેપ હોય તો આ જીવનો જ અપરાધ છે.

ગીતા સાધન ભાષ્ય, ગીતા શ્રવણ, ગીતા મનન, ગીતા ધ્યાન, ગીતા વિચાર ધારા, ગીતા સમશ્લોકી, ગીતા પોકેટ સીરીઝ, વગેરેના કળશ રૂપ ગીતાદર્શન જનતા સમક્ષ – પ્રભુસેવામાં નિવેદિત કરવામાં નિમિત્ત બનાયું છે – પરમાત્માની એ અસીમ દયા વ્યક્ત કરવાની પૂરી તાકાત નથી. જેણે એ પ્રેરણા દીધી છે તે જ આનાથી પ્રસન્ન થાઓ.

આનો ગુજરાતી અનુવાદ શ્રી માલતીબેને કર્યો છે એ ભારે સન્તોષની વાત છે. આ અનુવાદ મૂળગ્રાહી, સ્વસ્થ અને ભાષ્યના હાર્દનો વાહક થયો છે એવી પ્રતીતિ છે. ગુજરાત પાસે આવી વિદુષી બેનો છે એ એનું ગૌરવ છે. " **शुभाशिषा संयुनज्मि** " સિવાય એમને માટે અમારાથી વધુ શું કહેવાય ?

ઉપરાંત માનવ માટે પ્રભુપ્રેરણાએ રચાએલ આ ગ્રંથ ઉધાઈનું ભોજન બનવાની અણી પર આવી જાત. પણ અમારા મિત્ર શ્રી. રજનિકાન્ત મુન્શી અને અમારા બીજા પ્રેમી ભાઈબેનોએ ઔદાર્ય દાખવી એને મુદ્રિત કરવાની સરળતા કરી આપતાં, એનો કરુણ અંત આવતાં અટકી ગયો. શ્રી. ઈન્દુબેન શાહ અને શ્રી. રમણિકભાઈ શાહ તો અમારી પ્રવૃત્તિના અગ્રેસર. એમના વિના ગીતાબંધુગ્રંથાવલિ ધપે નહીં ! આ અવસરે ગીતાબંધુના વ્યવસ્થાપકો અને સહતંત્રીઓ સહિત સૌ ભાઈબેનોને ધન્યવાદ.

આ ગ્રંથ જાણી જોઈને સંસ્કૃતમાં લખ્યો છે. તત્ત્વજ્ઞાનને પૂર્ણ રીતે વ્યક્ત કરવા માટે એ ભાષાનું સામર્થ્ય અનન્ય છે. ઉપરાંત આ મહાગ્રંથના મહાવિચારો ભારત વ્યાપી થાય. ઉપરાંત આ વિચારોનું સત્વ અનન્ત કાળ જળવાઈ રહે. ઉપરાંત સંસ્કૃત પ્રત્યેનું અમારું ઋણ કંઈક અંશે અદા થાય !–અને સૌથી મુખ્ય તો એ કે અંદરની પ્રેરણા જ એને સંસ્કૃતમાં વહેતી કરવાની થઈ.

ગીતા ગાતા ભગવાન શ્રી કૃષ્ણચન્દ્રના ચરણોમાં આ તુલસી હો.

ભવન્સ કૉલેજ.
ચોપાટી, મુંબઈ ૭
૨૮–૭–૬૨

નલિન મ. ભટ્ટ

## —: ધ્યાન :—

ગીતા ગીતતણા ગાતા, પિતા–માતા–સુહૃદ્–સખા—
ઉરશાતા–પ્રદાતા શ્રીનન્દનન્દનને નમું; ૧

ગીતા ગીતતણા શ્રોતા, દ્રષ્ટા તે વિશ્વરૂપના;
ગીતા તત્ત્વતણા ધ્યાતા, મહાત્મા પાર્થને નમું; ૨

ગીતા ગંગાતણાં નીર વહાવીને ઘરે ઘરે—
જેણે સંસારને ધોયો, નમું તે વ્યાસદેવને; ૩

જેણે ધારી, વળી ધારે, ધારશે જે ભવિષ્યમાં—
ગીતાજી હૃદયે તને નમું વ્હાલે વળી લળી; ૪

'મરા' 'રામ' બને જાપે, 'ગીતા' 'ત્યાગી' તથા થતી
આથી ત્યાગી બધું તારે ખોળે હું માત! સાંજલિ! ૫

— (ગીતાસમશ્લોકીમાંથી)

*

# — ગીતા દર્શન —

## ઉપક્રમાધ્યાય

**હૃદયાયતને રે'તા હરિને ગુરુદેવને;**
**શારદામાતને વ્યાસ મહાત્મા પાર્થને નમું ॥ ૧ ॥**
**વંદી સમસ્ત ભક્તોને, ધરીને ધ્યાન કૃષ્ણનું;**
**ગીતાદર્શન આરંભું યોગનેત્રે વિભાવિત ॥ ૨ ॥**
**ભણજો સર્વસંન્યાસી, ભણજો ગૃહમેધિઓ;**
**ભણજો બટુઓ સર્વે; ને હજો કર્મયોગીઓ. ॥ ૩ ॥**

અખિલ જગતના એકમાત્ર બંધુ ભગવાન યદુનન્દને, સારાંય જગતના ઉદ્ધારની ઈચ્છાથી, ભગવદ્ ગીતાનું ગાન કર્યું. મહાત્મા પાર્થે તેનું શ્રવણ કર્યું, મહર્ષિ વ્યાસે તેનું ગ્રથન કર્યું, સંજયે ધૃતરાષ્ટ્રને કહી, વૈશંપાયને જનમેજયને કહી, અને આમ પરંપરાએ લોકમાં પ્રચલિત થઈ. આત્માનું યોગક્ષેમ કરનારી એ ભગવતીનું શ્રવણ, મનન, નિદિધ્યાસન અને દર્શન કરવું ઘટે. અસંખ્ય લોકોએ એનું શ્રવણ કર્યું છે, ઘણાંયે એનું મનન કર્યું છે. અનેકે નિદિધ્યાસન કર્યું છે પણ કોઈ વિરલે જ એનું સમ્યક દર્શન કર્યું હશે! એ સર્વશાસ્ત્રમયી છે. આથી ભગવાનનું હાર્દ વહન કરનારી તેનું વિધિપૂર્વક શ્રવણ, મનન, ધ્યાન અને દર્શન કરી, ભગવાનના પરિતોષ માટે, ગુરુદેવની પ્રસન્નતા અર્થે, વિદ્વાનોના મનોવિનોદ કાજે, બાલબુદ્ધિના બોધ માટે, સમાનધર્મીના હર્ષખાતર, સૌના શ્રેય માટે અને આત્મદર્શનની શુદ્ધિ કાજે "દર્શન" રૂપે ગ્રથન કરીએ છીએ. શરુ કરવા ઈચ્છેલાં એ ગીતાદર્શનનું પહેલું સૂત્ર છે :—

**अथातो गीतादर्शनम् ॥ १ ॥**

**સૂત્રાર્થ—अथ** એ શબ્દ અહીં અધિકારના અર્થમાં છે. અધિકાર, આરંભ પ્રસ્તાવ-એમાં અર્થનો ભેદ નથી. **अत:** શબ્દ હેતુવાચક છે. ગીતાનું ગ્રંથરૂપે શ્રવણ, મનન અને ધ્યાન સંપાદિત થઈ ચૂક્યું છે તેથી હવે ક્રમપ્રાપ્ત **गीतादर्शनं** ગીતાદર્શન નામના સૂત્રાત્મક ગ્રંથનો પ્રારંભ થયો જાણવો.

**ભાષ્ય**—આત્માનું દર્શન કરવું ઘટે, શ્રવણુ કરવું ઘટે, મનન કરવું ઘટે, ધ્યાન ધરવું ઘટે,–એ પ્રમાણે આત્મદર્શનનું વિધાન કરતી શ્રુતિએ તેના સાધનનો ક્રમ પણ બતાવ્યોછે. શ્રવણુ–મનન–ધ્યાનથી દર્શન નીપજે. જે શ્રવણુ ન કરે, મનન ન કરે, ધ્યાન ન ધરે, તેને કદી દર્શન ન લાધે. અને જીવન-સિદ્ધિ દર્શનને અધીન છે. આથી સિદ્ધિસંપાદન કરવા ઇચ્છનારે દર્શન પ્રાપ્ત કરવા વિધિવત્ શ્રવણુ વગેરે કરવું. ગીતામાં પણુ એમજ સમજવું. કેમકે બન્નેની ચર્ચા સમાન જ છે. જેણે ગીતા સાંભળી નથી, તેનું મનન કર્યું નથી, ધ્યાન કર્યું નથી, તેને દર્શનનો અધિકાર પ્રાપ્ત થતો નથી. આથી પરમાત્માની કૃપાથી પોતાને અધિકારી માનતા ગ્રંથકાર ગીતાદર્શનનો પ્રારંભ કરવાની પ્રતિજ્ઞા કરે છે. અથ શબ્દના શ્રવણમાત્રે મંગલાચરણ થએલું માનવું ॥ ૧ ॥

પરંતુ " ગીતા " એ તો માત્ર વિશેષણ છે. વિશેષ્યને અભાવે એ નિરાધાર હોઈને નિરર્થ બને ! એવો પ્રશ્ન ન હો – માટે કહે છે: —

**गीतेत्युपनिषत् तादात्म्यात् तदर्थवहत्वात् तन्मूलत्वाच्च ॥ १ ॥**

**સૂત્રાર્થ—गीतेति** = ગીતા એ શબ્દ દ્વારા **उपनिषत्** = વેદાન્ત જેનું બીજું નામ છે એવી ઉપનિષત્ નામની વિદ્યા જાણવી. શા માટે? **तादात्म्यात्** = તત્સ્વરૂપ હોવાથી, **तदर्थवहत्वात्**=તેનો–ઉપનિષદ્‌નો અર્થ પ્રતિપાદિત કરતી હોવાથી, **च**=અને **तन्मूलत्वात्** = ઉપનિષદ્ તેનું મૂળ હોવાથી.

**ભાષ્ય**—" ગીતા " એટલા વિશેષણુ માત્રનું કથન દૂષિત નથી. કારણુ કે તેનું વિશેષ્ય પ્રસિધ્ધ છે. ઉપનિષદ્ વિશેષ્ય છે. આથી શ્રીમદ્ ભગવાને ગાયેલું જે ઉપનિષદ્ તે જ " ગીતા. " આ સંક્ષેપ લોકોના નિરતિશય આદરનો સૂચક છે. પ્રિયને લાંબે નામે કોણુ સંબોધે? ગીતા રૂપી ઉપનિષદ્, માની માફક લોકોને પ્રિય છે. આથી " મા " ની જેમ ' ગીતા ' ને પણુ ઉપનિષદ્ શબ્દ કાઢી નાંખીને " ગીતા " એટલા જ નામે કહે છે. એ દૂષણુ નથી ભૂષણુ છે.

પરંતુ " ઈશ " વગેરે શિષ્ટમાન્ય પ્રસિદ્ધ ઉપનિષદોમાં ગીતાના નામનો ય ઉલ્લેખ નથી ! તો તેના તત્ત્વનો ( તે-પણાંનો ) સ્વીકાર શી રીતે કરી શકીએ ? ભગવાને ગાઈ છે એટલું કહેવા માત્રથી એનો સ્વીકાર ન થાય !! વેદમાં કહ્યું હોય, આપ્તતમ હોય, હિતતમ હોય, કથંકાર માટે અયોગ્ય હોય, તોય બુદ્ધિમાં ન આવે એવો અર્થ સમાધાન આપનારો બનતો નથી. તત્ત્વ તરફ ઢળવાનો બુદ્ધિનો સ્વભાવ જ છે ! બુદ્ધિ, તત્ત્વની વિરોધી નથી. એને સંતોષવી ઘટે. આથી શિષ્ટોના શિષ્ટ ભગવાને ગાઈ હોવા છતાં એટલું કહેવા માત્રથી એને ઉપનિષદ્‌નું ગૌરવ ન અપાય !

આ શંકા થતાં કહીએ છીએ—સાચું. ભગવદ્દ્ગીતાનો (પ્રસિદ્ધ ઉપનિષદોમાં) નામમાત્રે પણ ઉલ્લેખ નથી છતાં તેનું ઉપનિષદ્પણું ટળી જતું નથી. અને ભગવાને ગાઈ છે—માટે જ એનું ગૌરવ પ્રતિપાદિત કરવા માગતા નથી. દાર્શનિકોને બુદ્ધિને ગુંગળાવવાનું ય ગમતું નથી એટલે અહીં અને બીજે બધે જ બુદ્ધિપૂર્વકનું જ પ્રતિપાદન કરીશું.

ગીતાનું ઉપનિષદ્-પણું સિદ્ધ કરવા માટે तादात्म्यात् એ પ્રથમ હેતુ રજુ કર્યો છે. ઉપનિષદ્નો જે આત્મા-સ્વરૂપ, તે જ સ્વરૂપ ભગવદ્ ગીતાનું પણ જાણવું. જગત્-જીવ અને ઇશ્વર એ ત્રણ તત્ત્વોના સ્વરૂપ-નિર્ણય કરવામાં ઉપનિષદ્ વિદ્યા ક્ષીણબળ બને છે. ગીતા પણ આ ત્રણ તત્ત્વોનું સમ્યક્ નિરૂપણ કરી કૃતકૃત્ય થાય છે. આમ સ્વરૂપે એક હોઈને ગીતા અને ઉપનિષદ્માં ભેદ નથી. યોગ્ય સ્થાને આ વિચારનો વિસ્તાર કરીશું.

"तदर्थवहत्वात्" એ બીજો હેતુ છે. ઉપનિષદ્નો જે હેતુ—જે પ્રયોજન, તેનું જ પ્રતિપાદન ગીતામાં કર્યું છે. બ્રહ્મવિદ્યાનો અંતિમ હેતુ મોક્ષ છે. અને ગીતા પણ મોક્ષપર્યવસાયી છે. આથી ફલની દૃષ્ટિએ પણ બન્ને એકરૂપ છે. આનું પણ યોગ્ય સ્થાને પ્રતિપાદન કરીશું.

तन्मूलत्वात् એ ત્રીજું કારણ છે. ગીતાનું મૂળ છે ઉપનિષદ્. ઉપનિષદ્ રૂપી બીજમાંથી અમૃતફળદાયી ગીતા રૂપી લતા ઉદ્ભવે છે. આમ કાર્ય અને કારણ વચ્ચે અભેદ હોવાને લીધે પણ તેમનું એકત્વ નિર્ણીત થાય છે. અને પ્રાચીન ઉક્તિ પણ છે:—

**"सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः ।**
**पार्थो वत्सः सुधीः भोक्ता दुग्धं गीतामृतं महत् ॥"**

આમ ઉપનિષદ્માં ગાયનું, ગોપાલનન્દનમાં દોહનારનું, પાર્થમાં વાછરડાંનું, બુદ્ધિશાળીઓમાં ભોક્તાપણાનું અને ગીતામાં અમૃતત્વનું આરોપણ, ગીતાનું મૂળ ઉપનિષદ્માં છે એમ બતાવે છે. ગીતાના અર્થનું પ્રતિપાદન કરનારાં ઉપનિષદ્-વાક્યનો તે તે સ્થાને ઉલ્લેખ કરીશું. આમ ત્રણ કારણો દ્વારા ગીતાનું ઉપનિષદ્પણું સિદ્ધ થયું. ॥ ૨ ॥

"**गीतादर्शनम्**" એમાંથી 'ગીતા' શબ્દનો અર્થનિર્ણય કર્યો. "**दर्शनम्**" એ શબ્દનો અર્થનિર્ણય કરવો રહે છે. કારણ એ શબ્દના અનેક અર્થ થઈ શકે છે. આથી શબ્દને લીધે થતો અર્થસંદેહ દૂર કરતાં, પોતાના શાસ્ત્રને સંમત દર્શન શબ્દનું વ્યાખ્યાન કરતાં, હેતુપૂર્વક કહે છે:—

**दर्शनमिति सम्यक्ज्ञानं अभ्युदयनिःश्रेयसप्रसूतेः प्रसिद्धेश्च ॥ ३ ॥**

**સૂત્રાર્થ**—" **दर्शनं इति** " = દર્શન એ શબ્દ દ્વારા **सम्यक् ज्ञानं** = યથાર્થ જ્ઞાન સમજવું. **अभ्युदय०** = ચોમેરથી ઉદય એટલે અભ્યુદય અને સંપૂર્ણ શ્રેય એટલે નિઃશ્રેયસ્ તે બન્નેની **प्रसूतेः** = ઉત્પત્તિ થતી હોવાથી, અને **प्रसिद्धेः** = પ્રખ્યાત હોવાથી **च** = પણ, દર્શન એટલે સમ્યક્જ્ઞાન એવો જ અર્થ કરવો ઘટે.

**ભાષ્ય**—અભ્યુદય અને નિઃશ્રેયસની પ્રાપ્તિ માટે આ પ્રવૃત્તિ છે. અને સમ્યક્ જ્ઞાનમાંથી તે બન્ને ઉત્પન્ન થાય છે. યથાર્થ જ્ઞાનવાળો વિધિ અનુસાર વર્તી શકે, અને એ રીતે વર્તતાં આ લોક અને પરલોકમાં અભ્યુદય એટલે કે ભોગ પ્રાપ્ત કરી શકે. અને જ્ઞાનને બળે જ તેમાંથી વિરાગ પામી, પુનર્જન્મ વગેરે ઉપદ્રવ વિનાનું, સામ્ય અને અતિશય વિનાનું, અક્ષય્ય, વિશુદ્ધ, સ્વરૂપાવસ્થાન રૂપી નિઃશ્રેયસ્ પ્રાપ્ત કરી શકે. આથી " દર્શન " શબ્દ દ્વારા સમ્યક્ જ્ઞાન જ સમજવું, ફક્ત ઇન્દ્રિય પ્રત્યક્ષ વગેરે નહીં.

દર્શનશબ્દ સમ્યક્જ્ઞાનનો વાચક છે એ શાસ્ત્રમાં પ્રસિદ્ધ છે. પાતંજલ દર્શન, વેદાન્તદર્શન વગેરેમાં એનો પ્રયોગ વિદ્વાનો જાણે જ છે. આથી દર્શન -શબ્દનો એ જ અર્થ લેવો. ॥ ૩ ॥

કારણકે આ શબ્દ ( દર્શન શબ્દ ) શાસ્ત્રવાચક છે તેથી—

**अतः एव तत्प्रयोजना ॥ ४ ॥**

**સૂત્રાર્થ**—**अतः** એ હેતુસૂચક પદ છે. **एव** શબ્દ નિશ્ચય બતાવનારો છે. ક્રમ ભેદને લીધે ' **प्रयोजना** ' શબ્દ બાદ તે લેવો—**तत्प्रयोजना एव** = ઉપનિષદ્ શાસ્ત્રનું જ પ્રયોજન = ફળ તે જ પ્રયોજનવાળી આ ગીતા છે એમ જાણવું.

**ભાષ્ય**—દર્શન એટલે સમ્યક્ જ્ઞાન એમ કહ્યું. આથી સમ્યક્જ્ઞાનનું જે ફળ તે ગીતાદર્શનનું પણ ફળ એટલું અનુસંધાન કરી લેવું. તો સમ્યક્ જ્ઞાનનું ફળ શું ? આ લોક, પરલોક, અને આત્મલોકમાં સંપૂર્ણ સુખની પ્રાપ્તિ એ છે સમ્યક્જ્ઞાનનું ફળ. આથી ભગવતી ગીતા ત્રિવિધ સુખની પ્રાપ્તિ રૂપી ફળ દેનારી છે. ॥ ૪ ॥

પ્રયોજનના આધારે જ અધિકારનો નિર્ણય ફળે છે. આથી અધિકારીનો નિર્દેશ કરતાં કહે છેઃ—

**दुःखत्रयस्य सर्वस्पर्शित्वात परमानन्दप्राप्तौ च**
**समेषां सहजाधि-कृतत्वात् सर्वेऽत्राधिकारिणः ॥ ५ ॥**

**સૂત્રાર્થ**—**अत्र** = ગીતા શાસ્ત્રમાં; **सर्वे** = શાસ્ત્રમાં મનુષ્યનો અધિકાર હોઈને, બ્રહ્માથી માંડી ઘાસના તણખલાં સુધી સૌનો વાચક હોવા છતાં સર્વ શબ્દનો અર્થ–સંકોચ કરવો ઘટે–સૌ મનુષ્ય; **अधिकारिणः** = અધિકારી છે.

શાથી ? **दुःखत्रयस्य** = આધ્યાત્મિક વગેરે ત્રણ પ્રકારના દુઃખ; **सर्वस्पार्शित्वात्**= સર્વ વ્યાપક હોવાને લીધે. **च** = અને **परमानन्दप्राप्तौ** = અસીમ સુખના અનુભવ માટે. **समेषां** = સર્વનો–મનુષ્યોનો, **सहजाधिकृतत्वात्** = સ્વાભાવિક અધિકાર હોવાથી.

**ભાષ્ય**—આ ગીતાશાસ્ત્રમાં સૌ મનુષ્યોનો અધિકાર જાણવો. કારણ કે સંકોચ ન્યાયયુક્ત નથી. વિશ્વની સંપત્તિમાં સૌનો સરખો અધિકાર હોય. સમ્યક્જ્ઞાન સાર્વજનિક સંપત્તિ છે. કોઈ એક જાતિ કે સંપ્રદાય, કે દેશનો એકલાનો એમાં અધિકાર ન્યાયયુક્ત નથી એટલે મનુષ્યમાત્રનો એમાં અધિકાર છે. વિચારપૂર્વક કર્મ કરે તે મનુષ્ય એવો યાસ્કાચાર્યે કહેલો મનુષ્ય શબ્દનો અર્થ અહીં લેવો.

અને વળી આધ્યાત્મિક વગેરે ત્રિવિધ દુઃખ સૌને એકસરખું સ્પર્શે છે. દુઃખત્રયનો આ નિરપવાદ સ્પર્શ પણ, ત્રિવિધદુઃખમાંથી મુક્તિના કારણરૂપ આ દર્શનમાં સૌને અધિકારી બનાવે છે. દુઃખવેદના પણ સૌને સાધારણ છે આથી મોક્ષના પણ સૌ અધિકારી છે.

વળી નિઃસીમ સુખની પ્રાપ્તિમાં પ્રાણીમાત્રનો ઈશ્વરદત્ત અધિકાર છે. ઈશ્વરના અનુગ્રહરૂપી પરમાનન્દની પ્રાપ્તિમાં કોઈનો પ્રતિષેધ કરવો એ ઈશ્વરાપરાધ છે. આથી પરમાનન્દની પ્રાપ્તિમાં મનુષ્યમાત્રનો સહજ અધિકાર છે. ઈશની ઉદારતાનો સંકોચ અવૈદિક છે ॥ ૫ ॥

આ પ્રમાણે અનુબંધ ચતુષ્ટયનો નિર્દેશ કરી પરિપૂર્ણપણે ભગવદ્ગીતારૂપી ઉપનિષદ્નું દર્શન વિહિત છે એમ હેતુપૂર્વક કહે છે—

**अकृत्स्नदर्शनात् प्रयोजनासिद्धेः अनर्थप्रसूतेश्च**
**मीमांस्येयं कात्स्न्र्येन सर्वशास्त्रमयीति ॥ ६ ॥**

**સૂત્રાર્થ—अकृत्स्नदर्शनात्** = ખંડદર્શનથી. **प्रयोजनासिद्धेः** = ફલપ્રાપ્ત થતું ન હોવાથી. **च** = તથા. **अनर्थ प्रसूतेः** = તેમાંથી અનર્થ–અનિષ્ટ ફળ–પ્રાપ્ત થતું હોવાને કારણે. **इयं** = આ. **सर्वशास्त्रमयी** = સર્વશાસ્ત્રના સારરૂપ આ ભગવતી ગીતોપનિષત્. **कात्स्न्र्येन** = સંપૂર્ણપણે–નિઃશેષપણે. **मीमांस्या** = આદરપૂર્વક વિચાર કરવા યોગ્ય છે. **इति** = " इति " શબ્દ અધ્યાયની સમાપ્તિનો સૂચક છે.

**ભાષ્ય**—ભગવતી ગીતા સર્વશાસ્ત્રમયી છે. વિધિનિષેધપરાયણ અને મોક્ષપરાયણ બધાં શાસ્ત્રો ગીતામાં સમન્વયરૂપે પ્રતિબિંબિત થએલાં છે. જેમ ફુલમાંથી મધ તેમ સર્વજ્ઞ ભગવાન યદુનન્દને શાસ્ત્રોમાંથી આ દેવોનું મધુ–અમૃત સંચિત કર્યું છે. " सर्वशास्त्रमयी गीता, सर्वदेवमयो हरिः " એવું આપ્ત પુરુષોનું

વચન છે. આવી પ્રયોજનસિદ્ધિની ઈચ્છાવાળા સૌએ આ ગીતા સંપૂર્ણપણે સાદર વિચારવી જોઈએ. ભામતી ગ્રંથમાં વાચસ્પતિમિશ્રે મીમાંસા શબ્દનો "પૂજિત વચનનો વિચાર" એવો અર્થ કર્યો છે. શાસ્ત્રના અપૂર્ણ દર્શનથી સિદ્ધિ નહીં સાંપડે; પરંતુ અનર્થ આવી પડે આથી દર્શનશાસ્ત્રનો પૂર્ણ અભ્યાસ જ હિતકર-અર્થકર છે. સિદ્ધિના લાભ માટે અને અનર્થના નિવારણ માટે દર્શનનો પૂર્ણપણે અભ્યાસ અપેક્ષિત છે. ॥ ૫ ॥

॥ इति उपक्रमाध्यायः ॥

---

## अथ विषादयोगः

અનુબન્ધ પ્રકરણનું નિરૂપણ કર્યું. હવે દર્શન પ્રધાન ગીતામીમાંસા શરુ કરવામાં આવે છે. ગીતા-ઉપનિષત્‌ના ૧૮ અધ્યાય છે. દરેક અધ્યાયના મુખ્ય વિચારને અનુરૂપ દરેકનું વિશિષ્ટ નામ તે તે "योग" ને નામે પાડવામાં આવ્યું છે. તેમાં પહેલો અધ્યાય "विषादयोग" નામે પ્રસિદ્ધ છે. "विषीदन्निदमब्रवीत्" એમ મધ્યમાં અને शोकसंविग्नमानसः" એનું ઉપસંહારમાં કહ્યું હોઈને વિષાદ એમાં મુખ્ય છે.

તો એ વિષાદ એટલે શું ? નિઃશ્વાસ વગેરે અનુભાવોથી અનુસરાતો, સત્ત્વની ક્ષીણતા રૂપી જે વ્યભિચારિભાવ તે વિષાદ. 'દશરૂપક' નામના નાટ્યશાસ્ત્રમાં તેનું લક્ષણ આપ્યું છે કેઃ—

> **प्रारब्धकार्यासिद्धादेर्विषादः सत्त्वसंक्षयः ।**
> **निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥**

અર્થાત્ પ્રારબ્ધ કાર્યની સિદ્ધિ ન થતાં, સત્ત્વના સંક્ષય રૂપ વિષાદ જન્મે છે, નિશ્વાસ ઉચ્છ્વાસ-સંતાપ-ઇતર સહાયની શોધ વગેરે એની સાથે હોય છે.

અહીં પ્રથમ અધ્યાયમાં "सीदन्ति ममगात्राणि मुखं च परिशुष्यति" અહીંથી આરંભી "भ्रमतीव च मे मनः' ત્યાં સુધીના શબ્દોમાં અર્જુનમાં વિષાદ ચિહ્નો જણાય છે. અને "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नं" અહીં સહાયની શોધ છે. આથી વિષાદ ભગવતી ગીતાનું બીજ છે.

અહીં શંકા ઉદ્‌ભવે છે કે "अशोच्यानन्वशोचस्त्वं प्रज्ञावादाँश्च भाषते" એ બીજ છે. અશોચ્યનો શોક અને પ્રજ્ઞાવાદનું ભાષણ—એમાં ગીતાનું બીજ છે એવો ગીતાના જાણકારોનો નિર્ણય છે. તો એમ શાને કહો છો કે વિષાદ જ બીજ છે ? (શંકાનું સમાધાન કરતાં કહે છે કે)—એ દોષ નથી; કારણ કે વિષાદના લક્ષણમાં હૃદયના સંતાપની પણ ગણના કરી છે.

પરંતુ "अशोच्यानन्यशोचस्त्वं" આ શ્લોકથી ગીતાનો વાસ્તવિક પ્રારંભ માનવો યોગ્ય છે; "धर्मक्षेत्रे कुरुक्षेत्रे" થી નહીં. ફોગટ ગૌરવ ન કરવું ઘટે એ માટે શંકાનું સમાધાન કરતાં કહે છે :—

**आदितः द्वितीयस्थदशमश्लोकपर्यन्त उपोद्घातः**
**गीतार्थावतारसंयोजनोपसंहारसौष्ठवलाभार्थत्वात् ॥ १ ॥**

**સૂત્રાર્થ**—**आदितः** = પ્રથમથી–"धर्मक्षेत्रे कुरुक्षेत्रे" એ શ્લોકથી **द्वितीय... पर्यन्त** = બીજા અધ્યાયના દસમાં શ્લોક સુધી. "विषीदन्तं इदं वचः એ શ્લોક સુધીના ૫૭ શ્લોકોનો સમુદાય **उपोद्धातः** = પ્રસ્તાવના રૂપ જાણવો. કેમ? **गीतार्थ०** = ગીતાનો જે અર્થ તે અર્થના અવતરણ, સંયોજન અને ઉપસંહારની સુંદરતાના લાભ ખાતર એ છે.

**ભાષ્ય**—સાચું. ગીતાનો વાસ્તવિક પ્રારંભ "अशोच्यानन्वशोचस्त्वं" એ શ્લોકથી થાય છે. પરંતુ પહેલાંનો સંદર્ભ વ્યર્થ નથી; ઘણો યોગ્ય છે. એ ઉપોદ્ઘાત રૂપે છે. અને તેમ હોઈને ત્રણ પ્રકારની સુષ્ઠુતાનો લાભ તેથી થાય છે. ગંગાની માફક ગીતાનું અવતરણ પાપ–તાપને હરનારું અને શોભન બને, શ્રદ્ધાનો જેમ સત્કર્મમાં, તેમ ગીતાનો અર્થસંયોજનમાં શોભન વિનિયોગ થાય, હરિભકિતનો જેમ પરમમાંગલ્યમાં, તેમ ગીતાનો પરમશોભન ઉપસંહાર થાય એમ વિચારી મહામુનિ વ્યાસે એના, આ ત્રિવિધ સૌષ્ઠવના લાભ માટે ઉપોદ્ઘાત સ્વરૂપ આ સંદર્ભ રચ્યો છે. આથી આ આરંભ વ્યર્થ નહીં પણ અતીવ ઉપયોગી છે. ॥ ૧ ॥

ભલે તેમ હો, સત્ત્વનો ક્ષય થતાં મોહનો પ્રવેશ થાય. પરંતુ અહીં મોહની સિદ્ધિ થતી નથી. પરંતુ કરુણાનો આવેશ છે. અને કરુણાની વૃત્તિ તો સાત્ત્વિક છે. મોહ અને કારુણ્ય વચ્ચે મોટું અંતર છે. મોહ તો દર્શનનું આવરક છે; જ્યારે કારુણ્ય દર્શનનું આવિષ્કરણ કરનારું છે. આથી દર્શનાવરક મોહ અને તેનું ઉદ્‌ઘાટક કારુણ્ય–એ બેને સમાન કોટિમાં મૂકવાં ન્યાયયુકત નથી. કરુણાથી ઉભરાતા, રથમાં બેસી ગએલા, શસ્ત્રસંન્યાસ કરેલા, હાથ જોડી બેઠેલા, આંસુ સહિત વિલાપ કરતા, અર્જુનનું દર્શન સમસ્ત માંગલ્યનું–સંસ્કારિતાનું–શિષ્ટતાનું સૂચક છે. આથી એમાં સત્ત્વનો ક્ષય નથી, સત્ત્વનો ઉત્કર્ષ છે. સત્ત્વોદ્રેકની મૂર્તિ સમા અર્જુનને મોહવિદ્ધ ચીતરવો એ અનુચિત છે; એટલુંજ નહીં પણ એમાં ન્યાયનિષ્ઠાનો સમૂળગો ઉચ્છેદ છે. અને વળી હિંસાને શાસ્ત્રમાં પાપ કહ્યું હોઈને અને અહિંસાનું પરમધર્મ તરીકે વિધાન કર્યું હોઈને, હિંસાવિહાર પ્રાકૃત માણસનો પણ ધર્મ નથી તો પછી ભગવાનનો સંપર્ક જેને લાધ્યો છે એવા શિષ્ટતમ, માંગલ્યની સીમા સમા, મહાત્મા ગુડાકેશની તો વાત જ શી? આથી અર્જુનનો પરિતાપથી વીંધાએલો

વિષાદ, મોહમૂલક નથી પરંતુ સત્ત્વોકર્ષમાંથી ઉત્પન્ન થએલો છે, નિંદ્ય નથી, પ્રશંસનીય છે. ત્યજવા જેવો નથી, સ્વીકાર કરવા જેવો છે. તિરસ્કારયોગ્ય નથી, અભિનંદનીય છે. આવી શંકા પ્રાપ્ત થતાં સૂત્રકાર કહે છે :—

**मोहसिद्धिः परकृपाप्रवेशात् ॥ २ ॥**

**સૂત્રાર્થ—मोहसिद्धिः** = મોહની સિદ્ધિ—પ્રસ્થાપન. **परकृपाप्रवेशात्** = પર=પરાયી=અસ્વાભાવિક કરુણા=કાર્પણ્ય જેનું બીજું નામ છે એવી દયાના **प्रवेशात्** = અતિશય વ્યાપી વળવાથી થાય છે એમ. **ज्ञायते** = જાણવું એટલો શેષ સમજવો.

**ભાષ્ય—**અસ્વાભાવિક કરુણાના પ્રવેશને લીધે અર્જુનનો મોહ સિદ્ધ થાય છે. કારણ કે " **कृपया परयाविष्टः** " અહીં " **परा** " એ શબ્દ ચિન્ત્ય છે. તેનો '**परमा**' એવો અર્થ અહીં ન થઈ શકે કારણ કે તે સંદર્ભનો વિઘાતક છે. શબ્દના અનેક અર્થ થતા હોય તોય જ્યાં જે અર્થનું ગ્રહણ ન્યાયયુક્ત હોય તે જ અર્થ ત્યાં લેવાય. સંદર્ભનું આલોચન કરતાં " **परा** " શબ્દ અસ્વાભાવિક એવો અર્થ પુરસ્કૃત કરે છે. કેવી રીતે ?–એમ જો પ્રશ્ન કરતા હો તો જવાબ છે કે એ જ સંદર્ભ છે. ધર્મજનક કુરુક્ષેત્રમાં, યુદ્ધની ઇચ્છાવાળા પાંડવો અને કૌરવો ભેગા થાય છે. બન્ને પક્ષે સંગ્રામની ભૂમિકા પૂર્ણપણે તૈયાર થઈ છે. યુદ્ધના આરંભનું સૂચન કરતો શંખધ્વનિ પણ થયો. ગાંડીવ ધનુર્ધારી અર્જુનનો ઉત્સાહ પણ અદમ્ય છે. બે સૈન્યની મધ્યમાં રથ સ્થાપવા, શાસકસ્વરે ભગવાનને તે હુકમ પણ કરે છે. ઘોડાની લગામ ધરીને, રથને સ્થાપીને, ભગવાન દેવકીનન્દન તેને બન્ને સેનાનું યથાવિધિ દર્શન પણ કરાવે છે. ત્યારબાદ બન્ને પક્ષમાં ઉભેલા સ્વજનોને જોઈને અર્જુન ભગ્નહૃદય બન્યો–અને એનામાં વિષાદ પ્રવેશ્યો. આજ સંગ્રામમાં ત્ર્યંબકતોષક વીર્યવાળા વીર્યમૂર્તિ અર્જુનનું ક્ષાત્રતેજ કેમ અસ્ત પામ્યું એ પ્રશ્ન છે. પ્રાણીઓ તરફ અનુકંપાથી અનુકંપિત થઈને કંઈ એ યુદ્ધ ત્યજવાની ઇચ્છાવાળો ન્હોતો બન્યો. અહિંસા પરમ ધર્મ છે એવી શ્રદ્ધાને લીધે પણ અકસ્માત્ આ વિષમ પળે એને વિરાગ આવ્યો નહોતો. ઉંદરને જોઈને બિલાડી નિર્વૈર બને નહીં ! કરુણા–મનોહર અર્જુન સ્ત્રૈણભાવને આલિંગે છે એમ પણ નથી. આંસુ પ્રેરનારી કરુણા નિર્બળતાને આવરતી નથી; કે વિષાદના ચિહ્નોય ધારણ કરતી નથી. કરુણા એટલે કે પારકાનાં દુઃખ દૂર કરવાની કરવાની ઇચ્છા તો સ્વરૂપને યોગ્ય પરદુઃખ ભંજક કર્મમાં જીવને પ્રેરે છે, રુદનમાં નહીં, ભૂમિ પર આળોટવામાં કે નિર્વીર્ય વિલાપ કરવામાં નહીં. આથી આ પરિસ્થિતિ અર્જુનના મોહની જ કોઈ દુરાસદ છટા પ્રકટ કરે છે. સ્વજન સિવાય જો બીજું કોઈ સામે ઉપસ્થિત હોત તો અર્જુનના હૃદયમાં સ્હેજે દયા ઉદ્ભવી

ન હોત. નિમિત્ત મળતાં સહજિક સ્વભાવ, બ્હાર કે અંદર પ્રકટ થાય જ. ક્ષત્રિય-પ્રવર અર્જુનની યુદ્ધવૃત્તિ સહજ હતી. તે જો બીજાનાં દર્શનથી સળગી ઊઠતી હોય, અને સ્વજનોને જોતાં શાંત થતી હોય તેનું કારણ આસક્તિ નામનો મોહ જ છે; પરદુઃખ ભંજન કરુણા કે પરમ ધર્મરૂપ અહિંસા નહીં. પારકા અપરાધીને દંડ દેનારો અને એટલા જ અપરાધવાળા પોતાના પુત્રની ઉપર દયા કરનારો ન્યાયાધીશ, વિશ્વાસપાત્ર ન જ ગણાય. શેઠિયાના દીકરાએ કુતરાને માર્યો હોય તો તેટલા વજનના સોનાના કૂતરાના દાનનું વિધાન કરનાર પુરોહિત, પોતાના દીકરાએ કૂતરાને માર્યો છે એવું સિદ્ધ થતાં જો તેટલા વજનના રૂના કૂતરાના દાનનો શાસ્ત્રમાંથી નિષ્કર્ષ કાઢે તો તે આદરણીય ન બને. અને મોહની કોઈ એવી કામરૂપિણી શક્તિ હોય છે કે જે કહેવાતા પંડિતોને પણ ભ્રમિત કરે છે. અને ત્યારે તેઓ પંડિત દેખાતા છતાં, પ્રજ્ઞાવાદથી પોતાના મોહને છૂપાવતા જણાય છે. મોહવિદ્ધ, તર્ક સુસંબદ્ધ, ચર્ચાની પ્રવીણતાથી સત્યને ઢાંકે છે. પરંતુ સોળે શણગાર સજેલી ને લગ્નની વેદીમાં બેઠેલી હોય તોય પિશાચી સુંદર ન લાગે. ડહાપણ ભરેલા હોવા છતાં, સુવચન હોવા છતાં અર્જુનના બોલ, કાર્પણ્યને કરુણા તરીકે, મોહને પ્રબોધ તરીકે, વિષાદને પ્રસાદ તરીકે, અધર્મને ધર્મરૂપે, આસક્તિને પ્રેમરૂપે, પાપને પુણ્ય તરીકે સિદ્ધ કરવા સમર્થ નથી. આથી સ્વજનાસક્તિરૂપી સુંદર દેખાતા મોહના લેપથી રંગાએલી અર્જુનની દષ્ટિ તત્ત્વનિષ્ઠ કે હિતાવહ કે પોષવા જેવી નથી. ૨

ભલે મોહ સિદ્ધ થતો, તેથી શું? તો કહે છે—

**मोहात् कर्तव्यभ्रेषोपस्थितिः ॥ ३ ॥**

**સૂત્રાર્થ—મોહત્** = વિપર્યયથી, ચિત્તભ્રમથી **कर्तव्यभ्रेषोपस्थितिः** = કરવાને યોગ્ય કર્મનો **भ्रेष** = અનવસ્થાન – કાર્ય ન કરવાની ઉપસ્થિતિ = સંનિધિ પ્રાપ્ત થાય છે.

**ભાષ્ય**—મોહને લીધે કાર્પણ્ય અને તેને લીધે કર્મની વિધિની ચ્યુતિ આવે. અને એ તો અનિષ્ટ છે. કર્તવ્યવ્યાપ્ત છે આખું જગત. અને કર્તવ્યની ચ્યુતિ પુરુષાર્થની ઘાતક છે. વિધિપૂર્વક કર્તવ્ય કરવામાં મનુષ્યનું મનુષ્યત્વ છે. કર્તવ્ય પર અવલંબે છે જીવનયાત્રા. તેમાં જો કર્તવ્યને અવકાશ જ ન હોય તો તેનું તત્ત્વ જ માર્યું જાય. અને યાત્રા તો પાવન હોય. આથી મોહજન્ય કર્તવ્યભ્રેષ વિવેકીએ દૂરથી જ ત્યજવો રહ્યો. ૩

પરંતુ હિંસામાંથી નિવૃત્ત થતો અને શસ્ત્રસંન્યાસને ભેટતો અર્જુન તો શાંતિદૂત હોઈને અભિનંદનીય છે. કારણ કે તે પ્રાણીમાત્રને હિતાવહ અહિંસાનું

પ્રતિષ્ઠાપન કરે છે. આથી ઉત્તમોત્તમ કર્મ કરનારાને પ્રતિષેધ કેમ કરવામાં આવે છે? ઔચિત્ય તો વિવેકનું હૃદય છે. આવી શંકા પ્રાપ્ત થતાં કહે છે કે :—

**पापोपचयादि हिंसान्तोक्तिव्याजेन शस्त्रसंन्यासोनुचितः मोहत्राणात् ॥ ४ ॥**

**सूत्रार्थ—पापो...व्याजेन** = અધર્મ સંચય વગેરેથી માંડીને વધ સુધીના વચનોને બહાને **शस्त्रसंन्यासः** = આયુધનો ત્યાગ **अनुचितः** = અયોગ્ય છે. કેમ? **मोहत्राणात्=मोह** = વિપર્યયનો **त्राणात्** = આ હેતુઓથી બચાવ કરવામાં આવ્યો છે માટે.

**ભાષ્ય**—હિંસામાંથી નિવૃત્ત થતો, શસ્ત્રનો ત્યાગ કરતો ફક્ત અર્જુન જ નહીં, મનુષ્યમાત્ર અભિનન્દનીય છે. અહિંસાનું પ્રતિષ્ઠાપન પણ સૌને માટે સ્તુત્ય જ છે, એ નિર્વિવાદ છે. પરંતુ અમે નથી તો હિંસાની પ્રશંસા કરતા, કે હિતાવહ શસ્ત્ર-સંન્યાસની નિન્દા કરતા, કે સ્વપ્ને પણ અહિંસાનો ત્યાગ કરવાનું વિચારતા. અમે ફક્ત એટલું કરવા માંગીએ છીએ કે અર્જુનનો તાત્કાલિક શસ્ત્રસંન્યાસ ઉચિત નહોતો. પ્રાજ્ઞવચનને બહાને મોહને છૂપાવતો અર્જુન વિવેકનો વધ કરે છે—પોષણ નહીં.

આ છે ભાવ. ગીતાનો ઉપક્રમ પાપના સંચયની પુષ્ટિ માટે, કે હિંસાના અનુમોદન માટે, કે શસ્ત્રવિહાર ન્યાયયુક્ત છે એવું બતાવવા માટે નથી. પરંતુ કુશળ લોકોને માટે પણ દુર્જય મોહના વધ માટે છે. લગ્નના શણગાર સજેલી, સુંદર રૂપ ધારણ કરેલી શૂર્પણખા મૂળમાં રાક્ષસી હતી. એ રામે ઓળખી. રામે એને પકડી પાડી એટલે એણે છદ્મરૂપ છોડ્યું, પોતાનું વિકૃત રૂપ પ્રકટ કર્યું અને તેને યોગ્ય દંડ મળ્યો. અર્જુનના મોહ દૂષિત, આપાત-રમણીય વચન, અબુધને છેતરી શકે, પ્રબુદ્ધને નહીં. પ્રબુદ્ધ તો રામ જેવો બને, આથી મોહનું રક્ષણ કરવા ઇચ્છતો અર્જુન અને તેના પક્ષપાતી અભિનન્દનીય નથી. ॥ ૪ ॥

પરંતુ સ્વજન વધ એ મોહ છે, નહીં કે સ્વજનનું રક્ષણ. સ્વજન વધને ધર્મ માનનાર તો આતતાયી ગણાય! અને આતતાયીને તો દંડવો ઘટે. આથી સ્વજનની રક્ષામાં પરાયણ એવા અર્જુનનું સજ્જનોએ અનુસરણ કરવું જોઈએ, સ્વજનના વધ કરવામાં પરાયણનું નહીં. આ શંકા થતાં કહે છે :—

**स्वजनासक्तः विपर्ययः ततः शोकसंवेगात् कर्तव्यभ्रेषः ॥ ५ ॥**

**सूत्रार्थ—स्वजनासक्तेः** = આત્મીય જનોમાં અતિ આસક્તિને લીધે **मोहः** = વિપર્યય ઉત્પન્ન થાય. **ततः** = તેમાંથી–તે મોહમાંથી જન્મેલા =

ह्याकारि। सरलमपि समृद्धं, सुकुमारमपि प्रौढं प्रतिभासम्पन्नञ्च भाष्यं सूत्रार्थ विशदीकरणे गंगांभः इवोपयुक्ततमं मन्महे। पदलालित्य–प्रासानुप्रासार्थान्तरन्यास–पूर्णोपमादिभिःकाव्यगुणमण्डिता, सुसंबद्धाऽर्थगांभीर्यपूर्णा चैतषां वाग्विचारधारेति प्रमोमुद्यते चेतः। ऐदंयुगीनोऽयं ब्रह्मर्षिरिति चेद्ब्रूमहे न स्यादनौचित्यभीतिः। प्रणालिकयाऽपि प्रस्थानत्रयीं स्वतन्त्रेण भाष्येणालंकुर्वाणे आचार्यत्वं स्वयमेवाप्नोति। तथापि चेदस्मिन् वर्तमाने युग इमे भारतसंघप्रमुखमहोदयैः संमान्याभिः "महामहोपाध्यायाद्युपाधिभिः पद्मविभूषाणादिभिर्वोपाधिभिः वा संमानिताः स्युरर्चिता स्याद् भगवती सरस्वतीति निःशंकं संगिरामहे। गीताभाष्यं चेदं सर्वजनीनभोग्यतां नातिक्रमते। सर्वोऽपि स्वप्रतिभानुसारं भाष्यादस्माद् रहस्यं प्राप्ता। असकृदभ्यासाच्चास्य भाष्यस्यात्मोन्नत्यध्वा जिज्ञासोः उद्घाटितो भविता। अच्युतपदप्राप्तिश्च ध्रुवा सेत्स्यति इढेयस्माकं प्रतिपत्तिः। शीघ्रं स्यादस्य द्वितीयावृत्तिप्रसंगः इति। अम्बुनि नलिनदलवत् संसारे वर्तमानैराचार्यश्रीनलिनभट्टैर्जनताजनार्दनचरणयोः समर्पितं गीतासाधनभाष्यपुष्पं इति भृशं प्रशस्यमानः संयुनज्मि शुभाशिषा यद्" दीर्घायुरेधि, प्रेयसा च श्रेयसा च सुसंपन्नो भूया इति।

३–८–६२ } भवदीयः
बलसाड } दीक्षितोपनामक प्रभाशंकरात्मज **रामचन्द्र शर्मा**।

श्रीमद्भिः वेदान्तविद्वरैः भट्टोपाह्वैः नलिनशर्मभिः कृतं गीतादर्शनम् सभाष्यं गीर्वाणवाण्यां ग्रन्थरूपेण निबद्धम् विदुषां सत्कारभाजनं भवितुम् अर्हति।

विदितचरमिदं तत्त्वज्ञानां तत्त्वजिज्ञासूनां च यद् श्रीमन्तो नलिनशर्माणः स्वकीयैः गुर्जरभाषामयैः गीतोपनिषदादिशास्त्रविवेचनैः प्रवचनैश्च प्रसिद्धिमुपगताः विशेषतः गुर्जरदेशे। इदं चैषां गीर्वाणगिरोपनिबद्धं गीतादर्शनं भारतदेशे समस्ते एषां प्रख्यातये कल्पिष्यते।

इदं गीतादर्शनं वीक्षमाणस्य मे स्मृतिपथमवतरति अनेकवर्षपूर्वं श्रीमत्परमहंसपरिव्राजकाचार्यैः श्रीत्रिविक्रमतीर्थस्वामिभिः विरचितम्, पितृव्येण मे श्रीकल्याणरायेण च राजकोटनगरे मुद्राप्य प्रकटितम्, सूत्रात्मकं गीताममर्मानुशासनम्। एतत्तु नासीद् भाष्यपरिष्कृतम्, श्रीनलिनशर्मकृतं गीतादर्शनमिदं पुनः सभाष्यम्, इति वर्तते विशेषः। तत्त्वनिरूपणे तु विशेषः भवत्येव भूयान्।

संप्रति संस्कृतभाषायाः भूयिष्ठमस्तंगमनसमयेऽपि तस्यां भाषायां गहनशास्त्रविमर्शने प्रमाणीकृतप्रावीण्याः श्रीनलिनशर्मसदृशाः विद्वांसः स्वीयेन गीर्वाण वाणीमयेन महसा प्रकाशन्ते इति ज्ञानवतः कस्य चित्तं प्रमोदनिर्भरं न भविष्यति। एभिश्च गीतादर्शनसारसंदोहरूपः "आत्मज्ञानमूलकः भक्तिप्रधानः निष्कामकर्मयोगः" इति अन्तिमः योगत्रयसमन्वयकृद् निर्णयः प्रतिष्ठापित इति दृष्टवतः कस्य मनः परमां तृप्तिं नानुभविष्यति।

संस्कृतवाणीविशारदानां सूक्ष्मदर्शिनी दृष्टिः ग्रन्थेऽस्मिन् शब्दवाक्यस्वरूपविषये स्खलनानि कतिचित् निभालयिष्यति; परंत्वेषां यथार्थदर्शिनी धिषणा स्खलनान्येतानि

त्वरासहजानवधानजनूंषि मुद्रादानवदुर्विलसितानि सन्तीत्यपि अवधारयिष्यति, इति श्रद्दधानः सप्रणयं सत्करोमि गीतादर्शनमिदम्

विद्वज्जनविधेयोऽहम्
**रामप्रसादः बक्षी**

ॐ

अस्माकं सन्मित्रैः प्रा० नलिनभट्ट महोदयैः गीतादर्शनाख्या स्वीया कृतिरस्मभ्यं वितीर्णा। इतः प्रागपि + एतेषामन्यग्रन्थप्राप्त्या उपकृताः स्म।

गीतोपनिषद् ब्रह्मसूत्रयोगसूत्रादिष्वार्षग्रन्थेष्वेभिर्यल्लिखितम् तत् सकृदवलोकनायापि दीर्घतमसमयापेक्षा स्यात् तथापि यथावकाशमेभिर्लिखितानां ग्रन्थानामंशतोऽवलोकनं कृतं। पठनादयमभिप्रायः समजनि यद् गीता तु तैः पीतैव। तलस्पर्शी खल्वेषां गीताभ्यासः। किञ्च संस्कृतभाषायां भाष्यादि प्रणयनेऽपीमे सिद्धहस्ता दरीदृश्यन्ते क्षणमपि स्त्यानदुष्टं न स्यादितीमेऽनिर्विण्णेन चेतसा सततं यथाप्रकाशं लिखन्त एव निभाल्यन्ते। संस्कृतभाषाप्रभुत्वमप्येषां प्रशस्यम्। सरलं संस्कृतमाश्रित्य सामान्य जनताहृदयं स्प्रष्टुं कौशल्यमपि साहजिकमेतेषां सविधे। मूल्यानि तावदस्मिन्युगे परिवर्तितानि। तद्ध्यायतामेषामैदंयुगीनपाठकचेतश्चमत्कारजननशैली कलाकौशल्यं चानन्यं भाति।

व्यासपीठमधिष्ठाय भागवतस्य वा गीताया वेतरेषां वाऽऽर्षग्रंथानां लोकसमक्षं प्रवचनं कुर्वन्त इमे तथाविधं रसमुत्पादयन्ति यथा श्रोतारो नैव तृप्यन्ति। ध्येयलग्नत्वं प्रयत्नसातत्यं चानन्यदृश्यं वर्तत एतेषु, निष्ठाऽपि सात्त्विकी। गीतार्थे सदैव किमपि कर्तव्यमेवेत्येषां प्रतिज्ञा तावदनुकरणीयाऽस्ति। दीर्घायुर्भव प्रतिदिनमेतादृशस्य साहित्यस्य विपुलप्रकाशनाय शक्तिं च दद्यात्प्रभुः इति प्रार्थयति—

डॉ. ए. एस. गोपाणि
भवन्स कॉलेज, मुम्बई. ७.
११–७–६२.

अमरगौभक्तः
**अमृतलाल गोपाणिः**

ॐ

भगवता श्रीकृष्णपरमात्मनोपदिष्टस्य गीताप्रस्थानस्य बहूनि सन्ति भाष्याणि लोके संस्कृतभाषायामितरासु च भाषासु। संप्रदायभेदान्मतिभेदाच्च भाष्यभेदः। संस्कृतभाषायां विद्यमानानि भाष्याण्येव संस्कारोपेतानि। सर्वेऽपि भाष्यकारा गीतायाः प्रतिश्लोकस्य तात्पर्यं गद्यरूपेण सविस्तरं लिखितवन्तः। अनया रीत्यैव शांकररामानुजीयादीनि भाष्याणि दृश्यन्ते।

अस्मिन् ग्रंथे तु गीतोपन्यासोऽन्यादृशः। महाजनो येन गतः स पन्थाः इति न्यायेन वैदिकदर्शनषट्कस्यप्रकारमनुसृत्य इमे ग्रन्थकर्तारः श्री नलिनभट्टार्याः गीताशास्त्रान्तर्गतविषयाणि सूत्ररूपेण निर्माय प्रतिपादयन्ति। "अथातो गीतादर्शनम्" इति आदिमं सूत्रम्। "मोहसिद्धिः परकृपा प्रवेशात्" इत्यन्यद्। "नास्ति आत्मा

अप्रमेयत्वात् इति चेन्नास्ति ततः एव" इति च इतरत्। इत्थमुपक्रमोपसंहारयोर्मध्ये सूत्रलक्षणषट्कोपेतैरर्थगर्भपरिमलान्वितैरीषत् न्यूनशतद्वयसूत्रकुसुमैः ज्ञानपुरस्सरभक्त्याऽर्पितैषा माला भगवतो गीताचार्यस्य कण्ठं भूषयति। जिज्ञासूनां मनांस्याल्हादयति च।

केषांचित् सूत्रकाराणां संप्रदायमनुसृत्य ग्रंथकर्तारः स्वनिर्मितानां सूत्राणामर्थं पूर्वपक्षखण्डनसिद्धान्तस्थापनात्मकंभाष्यं च स्वयमेव लिखितवन्तः। अत एतत् भाष्यं बालानामपि सुखबोधं भवति। अपि च सूत्रैकैकस्य श्रुतिमूलत्वं भगवद्वचनानुसारित्वं च तत्तद् प्रकरणे प्रदर्शितम्। विदुषां तोषमावहति भाष्यमिदम्। "अवताररहस्यं" "कर्तृत्वेऽपि अकर्तृत्वं" कर्मयोगस्य वैशिष्टयम् इत्यादीनि द्वित्रीणि प्रकरणान्यत्रोदाह्रीयन्ते। नूतनरीत्या निर्मित एष ग्रंथोऽमितं श्लाघनीय एव। किं बहुना--

गावः सर्वाणि भाष्याणि दोग्धाऽर्यो नलिनः सुधीः
स्वधीर्वत्सः सुहृद्भोक्ता दुग्धं सूत्रामृतं महत् ॥

हेड ऑफ फिलोसोफी डीपार्टमेन्ट
भवन्स कॉलेज
४-७-६२ } पाश्चापरेशः शंकरनारायणः।

ॐ

प्राध्यापकैः श्री. नलिनभट्टैर्विरचितानि श्रीमद्भगवद्गीता सूत्राणि पठित्वा स्मारिता वयं पुण्यश्लोकान् व्यासादीन्। भारतीयानां प्रायः सर्वेषां शास्त्राणां बीजम् सूत्रवाङ्मये सुरक्षितं वर्तते। विषयस्य संग्रहेण बोधाय शाश्वतिकाय स्मरणाय च सूत्राण्यनुत्तमम् साधनं भवति। अत एव सहस्रेभ्यो वर्षेभ्यः सूत्रसाहित्यस्यानितरसाधारणी भवति प्रतिष्ठा।

श्रीभट्टमहाशयैः गुर्जरगिरा सांख्ययोगगीतोपनिषद्भागवतादीनि सुव्याख्यातानि गुर्जरभाषाज्ञानां प्राचीनशास्त्रावगमश्च सुकरः संपादितः। सारल्येन सुस्पष्टतया चैतान्य नितरसाधारणानीति नाविदितं तत्परिचयवताम्।

इतः पूर्वमेव श्री भट्टैः शिक्षाशास्त्रमाश्रित्य विरचितानि सूत्राणि संस्कृतवाण्या। तानि च तज्ज्ञेषु समादरं प्राप्तानीति विश्वस्यते। सूत्रनिर्माणे भाषायां दृढीयानधिकारो विषयस्य सूक्ष्मः परिचयः प्रतिपादने च निरतिशयं पाटवमपेक्ष्यन्ते।

स्वल्पाक्षरमसंदिग्धं सारवत् विश्वतोमुखम् ॥
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥

इति च भवति सूत्रलक्षणम्। श्रीमतां भट्ट महाशयानां श्रीमद्भगवद्गीतासूत्रेषु लक्षणमिदमविकलं संवदतीति परमधन्यवादार्हास्ते। पदावली सुस्पष्टा चेतोहारिणीति च वर्धयते उपादेयतां रचनायाः। प्राचीनार्वाचीनवाङ्मयविद एते इति प्राचीनविद्यावतां नूतनशिक्षासंपन्नानाञ्च ज्ञानाभिवृद्धये प्रकल्पत इयं रचनेति निश्चीयते। स्वोपज्ञभाष्येण चात्र सूत्रार्थो विशदीकृतो वर्तते। भाष्यं किल सूत्रप्रतिपाद्यं निरुच्य तत्र संभावितं विवादविषयं पक्षप्रतिपक्षोपस्थापनेन स्पष्टयति। भाष्यं विना सूत्रगतिर्न सम्यगवगन्तुं

शक्यते सूत्रकार एवात्र भाष्यकर्ताऽतः प्रामाणिक एवोपलभ्यते । भाष्यस्यास्य प्रतिपादन-शैली सरला संलापमयीव वर्तते । सरलस्य ललितस्य च संस्कृतस्य दृष्टान्तभूतेयमिति श्लाघनं न निरास्पदं स्यात् । गीतार्थं विषयतः संकलितं दिदृक्षूणां कृते सत्यमियमत्युपकारिणी कृतिर्भवति ।

तत्त्वनिष्ठः संस्कृतप्रेमी जनगणः कृतिमिमामभिनन्द्यास्या विसृमराय प्रचाराय च प्रयत्य, विद्वच्छ्रेष्ठानामेषामनर्घं श्रमं सफलीकरिष्यतीत्याशास्यते ।

भारतीय विद्याभवनम् }
बम्बई; २७।७।६२ }

शुभाकांक्षी,
**भाईशंकर पुरोहितः**

॥ श्री ॥

## ॥ भगवते श्रीकृष्णाय नमः ॥

अर्जुनेन निमित्तेन येन गीतासुधाऽर्पिता ॥
जगदुध्धरणार्थाय श्रीकृष्णं तं नमाम्यहम् ॥

" गीता सुगीता कर्तव्या किमन्यैः शास्त्रसंग्रहैः " इति वचनेन ज्ञायते यद्भगवतो-जगदुत्पत्तिस्थितिलयकर्तुः परमात्मनः श्रीकृष्णस्य मुखपद्मान्निर्गतायामस्यां गीतायां सर्वशास्त्राणां संदोहो वर्तते यतो यदि केवलं गीतेव विशुद्धान्तःकरणप्रविष्टा तदा सैव निःश्रेयसकरीत्यत्र न कथनीयम् ॥

गीतादेव्याः प्रभावः कीदृश इत्येतद्विषये न कोऽप्यनभिज्ञः ॥ सर्वतत्त्वमयी गीता देवी ग्रामे ग्रामे गृहे गृहे चैवं देशान्तरेऽपि स्वस्वरूपेण जनानाह्लादयन्ती प्रकाशते । इयमेवास्या विशिष्टता । अतो जनैः सहृदयं यद्यस्या उपासना क्रियेत तर्हि जीवनस्य लौकिकानन्दादन्यं कमप्यनिर्वचनीयमलौकिकमानन्दं तेऽनुभवेयुरित्यत्र न संदेहः कथं वा कल्पवल्लीव स्वेष्टप्रदात्रीयं भगवती ॥

अस्याः परमतत्त्वामृतं पाययन्तोऽनेकग्रन्था यत्रकुत्रापि विविधभाषासु दरीदृश्यन्ते चास्या उपर्यनेकाष्टीका भाष्यादिकं च संजातमिति सुप्रसिद्धमेव तथाप्यधिकारिविशेष-जिज्ञासूनां जिज्ञासातृप्त्यर्थम् " अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभ-मनवद्यं च सूत्रं सूत्रविदो विदुः ॥ " इति सूत्रव्याख्यानुसारेण प्राध्यापकैः श्रीमद्भिः "नलिनमणिशंकरभट्ट" इत्येतै गीतातत्त्वं सूत्रेषु निबध्य तदुपरि सूत्रार्थं भाष्यञ्च स्वयमेव विरच्य गीतातत्त्वामृतपिपासूनांकृते गीर्वाणगिरायामेव " गीतादर्शनम् " नामानं ग्रन्थं लिखित्वा मुद्रापयित्वा च तेषां परमोपकारः कृत इत्यत्र न संदेहः ॥

गीताविषयका बहवो ग्रन्था एभिर्लिखित्वा प्रकटीकृता येन गीतेतीमे चेमे गीतेत्यभेदभावेन गीतातत्त्वार्थदर्शकमपूर्वज्ञानमेभिर्यथोपपन्नं प्रकटीकृतं ज्ञायते ॥ तथाप्ययं " गीतादर्शनम् " ग्रन्थो नूतनप्रणालिकासृष्ट इति प्रतिभाति ॥ ग्रन्थेऽस्मिन् ग्रन्थकारैः स्वहृदयस्थितगीतातत्त्वबिम्बं प्रतिबिम्बितमिव लक्ष्यते च तथा कृत्वा तद्वाचकानां हृदयेष्वप्यवतारयितुं प्रयत्नः कृतस्तदेव ग्रन्थकर्तॄणां ग्रन्थस्य च वैशिष्ट्यमिति मन्ये ॥

ग्रन्थेऽस्मिन् " संहितैकपदे नित्या नित्याधातूपसर्गयोः ॥ नित्या समासे वाक्ये तु सा विपक्षामपेक्षते " इति नियमानुसारेण सामान्य संस्कृतज्ञानामपि वाचनविषये सौकर्यार्थं

संधिविवक्षा स्वीकृतेति दृष्टिपथं समायाति । अतोऽयं ग्रन्थो वाचकानां रुचिकरः परमाद्-रणीयो भविष्यतीति कथने न काऽप्यनुपपत्तिः ॥

यद्यपि क्वचित् क्वचिद् व्याकरणं लेखकमहोदयकृपाकटाक्षवञ्चितमिव विभाति च तथा लौकिकसूत्रेष्विव सूत्रेषु सूत्रत्वमप्रतिपादयन्ती संधिविवक्षाऽपिविद्वद्बुद्धा न भवेत्तथाऽपि "एको हि दोषो गुणसंनिधाने निमज्जतीन्दोः किरणेष्विवाङ्कः" इति महाकविकालि-दासस्योक्त्यनुसारेण विद्वांसो ग्रन्थगौरवं दृष्ट्वा ग्रन्थस्य तत्त्वमेव प्राधान्येन परिपश्यन्तो ग्रन्थमिममादरपथं नेष्यन्तीत्यत्र न शंकास्पदम् ॥

ग्रन्थस्यास्य गौरवविषये विशेषेण लेखनीयमनुचितं यतस्तत्तु विदुषामेव स्वायत्ती कृतमतस्त एव स्वयमस्य वैशिष्ट्यं ज्ञास्यन्ति लोके प्रतिपादयिष्यन्ति च ॥

अस्य ग्रन्थस्य गुर्जरभाषायामनुवादो विदुषीवरिष्ठाभिः "श्री मालतीब्हेन र. श्रोफ" इत्येताभिः सद्भावनात्मकः कृतोऽस्ति । अयमनुवादस्त्वनुवाद एव । ग्रन्थस्य प्रतिपङ्क्ति शब्दानुशब्दमनुसृत्य मूलविषयकतत्त्वार्थविच्छेदो यथा न भवेत्तथा वाचकानां कृते वाचने सुकरो यथास्यात्तथा मृदुभाषायामवतारितः । अनुवादेऽपीयं विशिष्टता संस्कृतभाषानभिज्ञैरपि ग्रन्थस्यास्य तत्त्वजिज्ञासुभिरवश्यमेवायमनुवादो वाचनीय इति यदि सभारं सूच्यते तर्हितन्नानुपपन्नमिति भाति ॥ अनुवादकरण एता धन्यवादमर्हन्ति नात्रविशेषकथनीयम् ।

एवं लेखकमहोदयानां गीतातत्त्वप्रचारकर्मणि "श्री. इन्दुमती र. शेठ" इत्येता अपि येनकेन प्रकारेण सहायिका भूत्वा स्वकर्तव्यतया परोपकारसरणिमनुमन्यमानाः प्रयतन्त इत्येता अपि यशोभागभुञ्जाना इति सुवच एव ॥

अन्ततो लेखकमहोदयैः "श्री नलीनभाई भट्ट" इत्येभिर्विरचितोऽयं ग्रन्थो विदुषां तथा गीताज्ञानजिज्ञासूनां कृते परमोपकारको भूयाश्च परमात्मनः श्रीकृष्णस्य परमकृपया ग्रन्थान्तरलेखने ते शक्तिमन्तो भवेयुस्तथा च तत्सहायिका भगिन्योऽपि स्वकर्तव्यतामनुसरन्त्यः शक्तिशालिन्यः स्युरित्याशासे ॥

भगवत्कृपाभिलाषी

**पंड्योपाह्व-धीरजरामात्मज तुलजाशङ्करशास्त्री**

ॐ

प्राध्यापकैः श्री नलिन भट्टैः संपादितो गीतासूत्रभाष्याभिधो ग्रन्थो भागशोऽवालो-कि मया । सोऽयं प्रयास इतरैरनादृत एतैरिदं प्रथमतयाऽवलम्बितः श्लाघास्पदः । नैके सारिष्ठाविषया अत्र समुपलभ्यन्ते । मुद्रापकाणामनवधानेन कार्यवैयग्र्येण वा अत्र तत्र दृश्यमाना अशुद्धयो विश्वसिमि द्वितीय परिष्करणे परिहृता भवेयुरिति ।

ग्रन्थस्यास्य सर्वतोमुखं प्रचारं कामयमानः

संस्कृत महाविद्यालय<br>भारतीय विद्याभवन; मुंबई. ७. } **ति. अ. वे. दीक्षितः**

---

गीतादि भाष्यकर्तृभ्यो–नरेंद्र शास्त्रिणामुदा
नलिन भट्ट विद्वद्भ्यो–दीयते स्वाभिनन्दनम् ॥१॥

श्री भगवता कृष्णेन विग्रहकाले–अर्जुनोपरि–अनुग्रहं कृत्वा, भगवती गीताद्वारा–आत्मबोधन्दत्वा,–अर्जुनो युद्धे–कर्तव्यशीलः कृतः। एतादृशो गीतायाः गहनविषयो भुवि प्रकाशितश्च। अतो यथा–जलेन वृक्षसिञ्चनम्–अन्नेन देह पोषणम्–वस्त्रेण लज्जारक्षणं भवेत् तथैव गीता सूत्रद्वारा–जनानाम् मनसोनियमनं सुलभम्भवेत् सुखेन प्रबोधः च स्यादितिहेतोः संपूर्णगीतायाः तलस्पर्श्यभ्यासः सर्वेषां कृते सुलभो नास्तीति मत्वा स्वकीय संशोधनदृष्ट्या गीतायाः संपूर्णम्मननं कृत्वा रसप्रचूर लेखसामग्रिभिः सभाष्य गीतायाः सूत्रात्मकभाषायां रचनां विधाय समस्त विश्वजनसुकरज्ञानदायिभ्यो नलिनभट्ट शास्त्रिभ्यः सहर्षम् अनेके धन्यवादाः सन्तु।

गीतासूत्रादि लेखं समीक्ष्य तुष्टो हृष्टोऽनुमोदकश्च ॥

२३/२५ लाडवाडी सामे
सी. पी. टेन्क,
मुम्बई–४.

**शास्त्री नरेंद्रशर्मा दवे**

---

ॐ

...श्री नलिन म. भट्ट गीताके अच्छे विद्यार्थी हैं उनको मैं सालोंसे पहचानता हूँ। संस्कृतके वे अच्छे पंडित हैं। उनका साहित्य पढकर मैं खुश होता हूँ। और अच्छे ग्रंथोंसे प्रेरणा भी पाता हूँ।......

पंडितजी ऐसा परिश्रम उठा रहे हैं उसलिये उनको धन्यवाद.

रविशंकर महाराज
वल्लभ विद्यालय
बोचासण ( जि. खेडा )

**रविशंकर व्यास**

---

* * * श्री. पं. नलिन भट्टजीका गीतादर्शन ( संस्कृतभाष्य सहित ) देखकर बडी प्रसन्नता हुई। गीतापर उनका विचार मैंने कई बार सुना था और इसमें उनके सूत्र देखें और उनका भाष्य भी देखा। यह इतना हृदयंगम तथा संतोष देनेवाला हुआ है कि उसकी प्रशंसा केवल शब्दोंसे नहीं हो सकती।

श्री. पं. नलिन भट्टजी का जीवन गीता रसास्वादके साथ इतना मिला है कि उसमें दूरान्वय हो नहीं सकता। श्री. पं. नलिन भट्टजी का प्रत्येक सूत्र सचमुच जब मैं पढने लगा तो मुझे इतना प्रेम हुआ कि मैं उस प्रेमानन्द का क्या वर्णन करूँ। मेरा निश्चय है कि जो समझकर पढेगा उसका हृदय आनन्द से ऐसा ही भर जायगा।

परमेश्वर पं. नलिन भट्टको ऐसे पूर्ण आनन्दमें सदा रखे यही मेरी इच्छा है।

भवदीय
**श्रीपाद सातवळेकर**

---

ॐ

भारतीय वाङ्‌मयमें परम्परागत प्राचीन एवं अर्वाचीन शास्त्रोंमें श्री भगवत् गीता के शब्द शब्दमें—श्लोक तथा 'उवाच' में जो सिद्धान्त शिक्षा और संस्कृति व्याप्त है वह अपूर्व है, अनन्य है।

गीता-अमृत-सिन्धु के बिन्दु बिन्दु में जो तत्त्व महत्वपूर्ण हैं उनका अध्ययन, मनन, चिन्तन करनेके अनन्तर पूज्यपाद आचार्योंने, विद्वानोंने जो अनेक भाष्य, टिप्पणी, आलोचना आदि के ग्रन्थ लिखे हैं वे आध्यात्मिक और नैतिक साहित्यमें उनकी अनुपम देन है।

संस्कृतमें एक अभिनव कृति "गीतादर्शनम्" के अवलोकनका सुअवसर मिला है। इस दर्शन के लेखक है प्रस्थानत्रयीके भाष्यकार एवं संस्कृत और गुजरातीमें उच्च कोटिके ७० ग्रन्थोंको लिखकर प्रकाशित करनेवाले भारतीय विद्याभवन कालेज के संस्कृतके प्राध्यापक श्री नलिनजी म. भट्ट। सरल सुबोध शैलीमें रचित यह "गीतादर्शन" तो भारतके विश्वविद्यालयों में आध्यात्मिक परिक्षाओंके लिये योग्य है। भारतीय संस्कृति के प्रचारके लिये ऐसे ही ग्रन्थोंकी आवश्यकता है।

हमें विश्वास है कि 'गीतादर्शन' को विद्वत्समाज और गीताप्रेमी शिक्षित सज्जन अवश्य अपनायेंगे।

श्री राधारमणमंदिर
वृन्दावन

**आचार्य अनन्तलाल गोस्वामी**

---

* * * આ ગ્રંથમાં ગીતાના શ્લોકોના પદ્યમાં અનુવાદ આપ્યો છે અને સરળ ભાષામાં તેની સમજ આપવામાં આવી છે. જિજ્ઞાસુ વાચકને આ ભાષ્ય બોધપ્રદ થાય એવું છે. પરંતુ આ ગ્રંથ શ્લોકે શ્લોકના ભાષ્ય રૂપે લખાએલો હોઈ મોટે ભાગે વિદ્દદ્ ભોગ્ય જ બની રહે છે. જ્ઞાનેશ્વરી, શ્રી કિશોરીલાલ મશરૂવાળાનું ગીતામન્થન કે ગાંધીજીનો અનાસકિત યોગ ગીતાને રોજે રોજના જીવન વ્યવહારમાં ઉતારવાને લખાએલા ગ્રંથો છે. કોઈપણ કક્ષાના માણસ માટે જીવન કેવી રીતે જીવવું તેનું માર્ગદર્શન ગીતામાંથી મળવું જોઈએ. * * * એમ કરવા માટે ગીતાને વેદાન્તીઓના જીવનના વાતાવરણમાથી ઉંચકીને દૈનિક જીવન વ્યાપાર પાર પાડતાં ખેડૂત, મજૂર, વ્યાપારીને સ્પર્શનારી બનાવવી પડે.

**મોરારજી દેસાઈ.**

---

* * * * આ ગ્રંથની સૂત્રાત્મક રચના ઘણી મનોહર છે અને અપૂર્વ છે. અન્ય દર્શનોની માફક ગીતાદર્શનનાં સૂત્રોની જે અપેક્ષા હતી તે પ્રા. નલિનભાઈએ પૂર્ણ કરી સંસ્કૃત દર્શન સાહિત્યમાં મહત્વનો વધારો કર્યો

છે. સૂત્રો કંઠસ્થ કરવાથી સમસ્ત ગીતાનું તાત્પર્ય હસ્તામલક જેવું બની જાય. અને કીર્તનકારો અને પ્રવચનકારોને બહુ ઉપકારક થઈ પડે. સરળ સૂત્રાર્થ અને પછી ભાષ્ય આપવાથી વિષયનું સ્પષ્ટતાથી પ્રતિપાદન થઈ શક્યું છે. ભાષ્ય વિદ્વત્તાથી પૂર્ણ છે. આવો સુંદર ગ્રંથ રચવા માટે પ્રા. નલિનભાઈને ધન્યવાદ.

'ગીતાદર્શન' એ સંસ્કૃત ગ્રંથનો શ્રી. માલતીબ્હેને કરેલો અનુવાદ છે. અનુવાદ સારો છે અને સંસ્કૃત ન જાણનારા વર્ગ માટે બહુ ઉપયોગી છે. અનુવાદકને અભિનન્દન.

હેડ ઑફ ધ ઓરીએન્ટલ ઇન્સ્ટીટ્યુટ
એમ. એસ. યુનિવર્સિટી ઑફ બરોડા.

જી. એચ. ભટ્ટ.

---

પ્રાધ્યાપક શ્રી. નલિન ભટ્ટ ઉપનિષદોનાં તથા ભગવદ્‌ગીતાનાં "સાધન-ભાષ્યોના પ્રણેતા તરીકે પ્રસિદ્ધ છે, અને પ્રશિષ્ટ શૈલીના વ્યાખ્યાનકાર તરીકે સુવિદિત છે.

એમના એ ભાષ્યોએ અને વ્યાખ્યાનોએ એમના સંસ્કૃત ભાષામાં સૂક્ષ્મ અર્થગ્રહણના નૈપુણ્યની પ્રતીતિ કરાવી છે હવે સંસ્કૃતમાં રચેલા આ સભાષ્ય–સૂત્રાત્મક ગીતાદર્શનથી તેઓ એ ભાષા ઉપરના પોતાના પ્રભુત્વની વિશેષ પ્રતીતિ આપે છે, અને એમને પ્રાસાદિક તથા ગૌરવવંતી ગીર્વાણગિરાના પ્રયોજક તરીકે પ્રશંસાના અધિકારી બનાવે છે. એ દેવવાણીની ગ્રન્થરચનાપર્યાપ્ત ઉપાસના ગુજરાતમાં હજી જીવન્ત છે એનું સુંદર પ્રમાણ આપતો આ ગીતાદર્શન ગ્રન્થ ગુજરાતીઓ માટે ગૌરવનું અને ગર્વનું કારણ બનશે.

આ ગ્રન્થમાં એમણે કરેલું ગીતાના હાર્દભૂત તત્ત્વનું દર્શન પણ પ્રશસ્ય છે. ગીતાનું હાર્દ "આત્મજ્ઞાનમૂલક, ભક્તિપ્રધાન, નિષ્કામકર્મ યોગ છે." એવું એમનું દર્શન અને પ્રતિપાદન ગીતાની ઇહલોકમાં અને પરલોકમાં ઉપકારકતા સ્થાપે છે અને એના તત્ત્વજ્ઞાનની, બુદ્ધિસંપત્તિને હૃદયભાવનાને તથા શરીર પ્રવૃત્તિને એક-લક્ષ્યનિષ્ઠ કરનારી, વ્યાપક શ્રેયસ્કરતા સિદ્ધ કરે છે. યોગત્રયનો આ સમન્વય જેટલો શાસ્ત્રસમર્થિત છે તેટલો જ આધુનિક સમાજનો અનુગ્રાહક છે.

શ્રી નલિન ભટ્ટનું સંસ્કૃત ભાષા ઉપરનું પ્રભુત્વ સુવિદિત છે. એ પ્રભુત્વ છતાં, એ પ્રભુત્વથી અસંગત એવાં ભાષાસ્ખલન આ ગ્રન્થમાં કવચિત્ દેખાય તો તેથી આ મેધાવી મીમાંસકની ભાષાશુદ્ધિ માટેના સામર્થ્યને તથા આગ્રહને બાધ આવતો નથી. એ ક્ષતિઓ ત્વરાજનિત અનવધાન દોષ કવચિત્ હશે, પણ બહુધા મુદ્રણ–સ્ખલન છે એ તો સંસ્કૃતભાષાવિદો સ્વયમેવ જોઈ શકશે.

स्फुटता न पदैरपाकृता, न च न स्वीकृतमर्थगौरवम् એ ભારવિવચન જેને

લાગુ પડી શકે છે એવા આ ગીતાદર્શનનો હું સહ્રદયભાવે સત્કાર કરું છું, અને જનતા સત્કાર કરશે એવી આશા સેવું છું

સાંતાક્રુઝ, મુબઈ ૫૪. } રામપ્રસાદ પ્રે. બક્ષી

---

* * * ભાઈ શ્રી નલિન ભટ્ટનું ગીતાદર્શન મૂળ સંસ્કૃતમાં અને પછી ગુજરાતીમાં એક અભિનવ પ્રસ્થાન છે. એનાં સૂત્રો ગીતાના મૂલભૂત વિચારોને હસ્તામલક જેવા બનાવે છે અને એનું ભાષ્ય એ એવા અર્થોને વિશદ કરે છે. * * * ગીતા એક દર્શન પણ છે એવો જે એક મત છે તેને અનુસરીને, એના દર્શનભાગના વસ્તુને સૂત્રબદ્ધ કરી, મૂકવાનો આ પ્રયત્ન પ્રશસ્ય છે. ગીતાનો દર્શન વિષયક વિચાર, આથી એક સાથે સળંગ વાચક પાસે આવી જાય તે લાભ છે. ભાષ્ય શૈલીમાં જે સમજૂતી અને ચર્ચા આવ્યાં છે તે પણ વ્યુત્પન્ન છે અને મૂળ સૂત્રને વિશદ કરી સમજાવવામાં ઉપયોગી છે. * * આવો ગ્રન્થ લખવો તે જાતે જ બહુ હિમ્મતભર્યું કામ છે. તેમાં એમને આટલી સરસ સફળતા મળી છે તે જોઈને આનન્દ.

આવો ગ્રન્થ જરૂર અવકાર્ય નીવડશે.

ગંગાજળા વિદ્યાપીઠ, અલીઆબાડા }
જામનગર સૌરાષ્ટ્ર. } ડોલરભાઈ માકંડ

---

## परिशिष्ट

# शुद्धिपत्रकम्

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ७ | निरिवल | निखिल |
| ३ | २८ | अर्थसंदेह | अर्थसंदेहं |
| ४ | १५ | तदेवार्थः | स एवार्थः |
| ६ | १९ | अष्टादशाध्यवात्मिका | अष्टादशाध्यायात्मिका |
| ७ | २७ | स्व्रात् | स्यात् |
| ७ | ३० | तदुद्धारकस्य | तदुद्धाटकस्य |
| ८ | ८ | प्राप्तभगत्संपर्कस्य | प्राप्तभगवत्संपर्कस्य |
| ९ | १४ | निगृह्यन् | निगृह्णान् |
| ९ | | अनुगृह्यन् | अनुगृह्णन् |
| ९ | २३ | करुणात्येन | करुणात्वेन |
| १० | १८ | स्तूमः | स्तुमः |
| | २९ | मोहरिरक्षुः | मोहरिरक्षिषुः |
| ११ | २ | निग्रह्यो | निगृह्यो |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२ | २ | कुर्वन्ती | कुर्वती |
| १३ | ९ | खलुं | खलु |
| १४ | २९ | इत्यारंभ्य | इत्यारभ्य |
| १५ | ४ | कपोलकल्पित्रमेव | कपोलकल्पितमेव |
| १८ | १६ | स्परप्रकाशकत्वं | स्वपरप्रकाशत्वं |
| | ३० | जनाधिषाः | जनाधिपाः |
| १९ | १७ | आक्षिप्यमाणा | आक्षिपन्ती |
| २१ | १० | चिद्रुपमिति | चिद्रूपमिति |
| २१ | २२ | संसारावस्यायां | संसारावस्थायां |
| २२ | ५ | अनुमिनोषि | अनुमिमीषे |
| २३ | २२ | तं | तत् |
| २६ | २ | यकुत्रापि | यत्रकुत्रापि |
| २७ | २९ | वाङ्विलास | वाग्विलास |
| २८ | ६ | गीतोपनिदः | गीतोपनिषदः |
| २९ | १३ | कर्ययोगं | कर्मयोगं |
| २९ | १९ | कल्रनात् | कल्पनात् |
| २९ | २७ | व्यमिश्रेणेव | व्यामिश्रेणेव |
| ३१ | १३ | प्रतिकूल | प्रतिकूलं |
| ३२ | ४ | निञ्क्रियता | निष्क्रियता |
| | ८ | समन्वीमानं | समन्वीयमानं |
| | २३ | स्वप्रस्वदेबिन्दू० | स्वप्रस्वेदबिन्दू० |
| ३३ | १३ | यथार्थ्येन | याथार्थ्येन |
| | १७ | यद् यद् | यद् यत् |
| ३५ | १ | कतिपयस्य | कतिपयानां |
| | ११ | कच्चुकीव | कञ्चुकीव |
| | २६ | सर्व...प्रतिभाणामपि | प्रतिभानामपि |
| ३६ | २३ | तीव्रदाहकरसः | तीव्र...रस— |
| ३७ | २७ | आद्य- | आद्यो- |
| | ३० | सभादधन् | समादधन् |
| ३८ | १ | कर्त्तृत्वं | कर्तृत्वं |
| | | कर्त्तुः | कर्तुः |
| | ४ | कर्त्ता | कर्ता |
| | ६ | कुर्वन्ती | कुर्वती |
| | १३ | रात्रिंदिवा | रात्रिंदिवं |
| ३९ | १ | कर्मयोगो | कर्मयोगी |
| | ९ | हृषीकेशेण | हृषीकेशेन |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४० | ५ | प्रलपसि | प्रलपति |
| | १५ | इच्छन्नपि | इच्छतोऽपि |
| ४१ | २ | विद्धयैनं | विद्धयेनं |
| ४३ | ५ | श्रद्दधीमहे | श्रद्दधीमहि |
| | १६ | अवतारः | अवतार– |
| | १८ | अवतारवाद– | अवतारवादः |
| ४४ | २७ | कोऽयमवातारो | कोऽयमवतारो |
| ४५ | ३० | क्षमानां | क्षमाणां |
| ४६ | २ | – तनूना | – तनुना |
| ४८ | २९ | ज्ञनिः | हानिः |
| ४९ | १ | गमनारूढस्य | कर्मयोगमनारूढस्य |
| ४९ | ४ | इत्यर्थ | इत्यर्थः |
| ५० | ९ | पनीपद्यते | संपनिपद्यते |
| | २० | दृश्यमाणे | दृश्यमाने |
| | २३ | दृश्यमाणमपि | दृश्यमानमपि |
| ५१ | १७ | इश्वरभक्ति | ईश्वरभक्ति |
| ५३ | ११ | सूत्रार्थः–– | सूत्रार्थः–आत्मवतः |
| ५३ | १९ | रणयति | रणति |
| ५५ | १९ | अवर्जनीयाणां | अवर्जनीयानां |
| | २० | सभवति | संभवति |
| ५७ | १० | निवापाञ्जल्युउचितः | निवापाञ्जल्युचितः |
| | ८ | विलीनाति | विलिनाति |
| ५८ | ११ | कतृत्वादिकं | कर्तृत्वादिकं |
| ६१ | २७ | दर्शनं | दर्शनं |
| ६३ | २१ | ध्मायन्ति | धमन्ति |
| ६४ | १६ | अरुरुक्षोः | आरुरुक्षोः |
| | २३ | व्याचिरख्यासुना | व्याचिख्यासुना |
| ६५ | २५ | अनिर्यिणण्णेन | अनिर्विण्णेन |
| ६७ | ९ | योत्रस्य | योगस्य |
| ६८ | १५ | वैराग्या० | वैराग्या० |
| | २३ | समापि | समाधिः |
| | २६ | खदं | खेदं |
| | २९ | तस्मात् | तस्माद् |
| ६९ | २ | सुदुष्करम् | सुदुष्करम् |
| | ३ | दृठम् | दृढम् |
| ७० | ४ | शिष्य० | शिष्य० |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ७१ | ११ | सयषु | सर्वेषु |
| | १८ | तस्मायोगी | तस्माद्योगी |
| ७२ | २९ | यादशं | यादृशं |
| ७२ | २९ | तादृशेणैव | तादृशेनैव |
| ७३ | १ | तादशं | तादृशं |
| | २० | भूताति | भूतानि |
| | २६ | सर्वस्वापित्वं | सर्वव्यापित्वं |
| ७४ | २४ | ईशितव्यस्थ | ईशितव्यस्य |
| ७५ | १७ | सच्चिदानन्दात्मिके | सच्चिदानन्दात्मके |
| | १९ | तत्रव | तत्रैव |
| ७७ | ८ | प्रपतेः | प्रपत्तेः |
| ७७ | १७ | अश्रुते | अश्नुते |
| ७८ | ८ | सत्त्वसत्त्वशुद्धिं | सत्त्वशुद्धिं |
| ७८ | १२ | मायामैतां | मायामेतां |
| ७८ | १९ | दृश्यन्ते | दृश्यन्ते |
| ७९ | २० | जिज्ञासुरर्थीर्थी | जिज्ञासुरर्थार्थी |
| ७९ | २४ | आर्तादिपु | आर्तादिषु |
| ८० | १५ | प्रिया | प्रियो |
| ८० | १८ | तादशं | तादृशस्य |
| ८० | १९ | ज्ञानानिष्ठायाः | ज्ञाननिष्ठायाः |
| ८० | २८ | दुष्करत्वात् | दुष्करत्वात् |
| ८१ | ६ | सहस्रशः | सहस्रशः |
| | ८ | सवज्ञत्वात् | सर्वज्ञत्वात् |
| ८७ | ७ | पुराब | पुराण |
| | २० | नानुवन्ति | नाप्नुवन्ति |
| ९० | ५ | शास्त्रीयः | शास्त्रीयः |
| ९१ | १७ | पूर्वज्ञानं | पूर्णज्ञानं |
| ९२ | २४ | महिमाज्ञानस्यमूलकं | महिमाज्ञानमूलकं |
| ९३ | ३ | —नैर्धृण्य० | —नैर्घृण्य० |
| | १४ | सत्वं | सत्यं |
| ९५ | ७ | पारमार्थ्येण | पारमार्थ्येन |
| ९६ | २९ | दशविक्षु | दशदिक्षु |
| | ४१ | अखंडदृष्टिः | अखंडदृष्टिः |
| ९८ | ९ | गतगतं | गतागतं |
| | २१ | अनन्याश्रिन्त० | अनन्यांश्रिन्त० |

| पृष्ठ | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०० | १ | पुण्यं | पुष्पं |
| | ४ | समर्षणं | समर्पणं |
| १०२ | १९ | यध्धि | यद्धि |
| १०५ | ४ | सर्ववशित्वं | सर्ववशित्वं |
| १०६ | ९ | करणया | करुणायाः |
| | २२ | अनुगृहणाति | अनुगृह्णाति |
| | २२ | सर्वभ्यो | सर्वेभ्यो |
| ११४ | ७ | सद्धयति | सिद्धयति |
| ११६ | ८ | भाम्यति | भ्राम्यति |
| ११७ | ९ | चित्रसत्वं | चित्तसत्वं |
| ११९ | १६ | प्रेरकानि | प्रेरकाणि |
| १२१ | ३ | परमात्मनं | परमात्मानं |
| १२७ | ८ | लक्ष्यं | लभ्यं |
| | २६ | ज्ञानवृद्धाणां | ज्ञानवृद्धानां |
| १२८ | ११ | प्रकुतिजान | प्रकृतिजान् |
| १३५ | १९ | आह्मस्तम्बान्तेषु | आब्रह्मस्तम्बान्तेषु |
| १४० | ४ | पदमध्ययं | पदमव्ययं |
| १४१ | ६ | उपाधिनां | उपाधीनां |
| १४२ | २५ | अनुक्त्रमेण | अनुक्रमेण |
| १४३ | १० | नद्भिन्नस्य | तद्भिन्नस्य |
| १४४ | २८ | शास्त्ररूपस्य | शास्त्ररूपस्य |
| १४७ | १४ | रहस्य | देवस्य |
| १५० | २९ | अपरपर्यायाः | अपरपर्यायायाः |
| १५४ | २२ | निर्देशेण | निर्देशेन |
| १५८ | ११ | यज्ञादिनां | यज्ञादीनां |
| १६० | १ | शंक्य | शक्यं |
| १६० | २२ | कर्माभिः | कर्मभिः |
| १६६ | ९ | ज्ञानस्येव | ज्ञानस्यैव |
| १६६ | १५ | ज्ञान | ज्ञानं |
| १६६ | २४ | प्रपत्तः | प्रपत्तेः |
| १६७ | २५ | तेष | तेषां |
| १६७ | १ | निष्क्रयतायाः | निष्क्रियतायां |
| १७४ | ९ | अवोचाम | अवाचि |

॥ शेषास्तु स्वयं शोध्याः ॥

## ॥ गीतादर्शनम् ॥

वंदे हृदयसद्मस्थं हरिं देवं गुरुं तथा।
व्यासं सरस्वतीं देवीं महात्मानं तथाऽर्जुनम् ॥
सर्वान् भागवतान् नत्वा ध्यात्वा च यदुनन्दनम्
गीताया दर्शनं कुर्वे योगनेत्रविभावितम् ॥
पठन्तु साधवः सर्वे पठन्तु गृहमेधिनः
पठन्तु बटवः सर्वे भवन्तु कर्मयोगिनः ॥

गीता भगवती गीता निखिल-जगद्-उद्दिधीर्षुणा भगवता यदुनन्दनेन अखिलजगदेकबन्धुना। सा च श्रुता महात्मना पार्थेन, उपनिबद्धा भारते महर्षिणा व्यासेन, कथिता संजयेन धृतराष्ट्राय, वैशम्पायनेन च जनमेजयाय, उपसृता चैवं लोके परंपरया। आत्मनः योगक्षेमं वितन्वाना सेयं भगवती श्रोतव्या, मन्तव्या, निदिध्यासितव्या द्रष्टव्या च। अद्य यावत् असंख्यैः श्रुता अपि, बहुभिः मता अपि, अनेकैः निदिध्यासिता अपि विरलैः एव सम्यक् दृष्टा। यतः सर्वशास्त्रमयीयम्। तामेतां भगवद् हार्दवाहिनीं विधिवदातोषं श्रुत्वा, मत्वा, ध्यात्वा, दृष्ट्वा च भगवतः परितोषाय, गुरुदेवप्रसादाय, विदुषां मनोमोदाय, बालानां बोधाय, समानधर्मिणां हर्षाय, समेषां श्रेयसे, स्वात्मनश्च दर्शनवैशारद्याय अत्र दर्शनरूपेण ग्रथ्नीमः। तस्यैतस्य अपूर्वस्य गीतादर्शनस्य प्रारिप्सितस्य इदं आदिमं सूत्रम्—

### अथातो गीतादर्शनम् ॥ १ ॥

सूत्रार्थः—अथ इति अयमत्र अधिकारार्थः। अधिकारः आरंभः प्रस्तावः इति अनर्थान्तरम्। अतः शब्दः हेतुवाचकः। यतः गीतायाः ग्रन्थरूपेण श्रवणं, मननं, ध्यानं च सम्पादितं अतः अधुना क्रमप्राप्तं गीतादर्शनं = गीतादर्शनाख्यं शास्त्रं सूत्रस्थं प्रारब्धं वेदितव्यम् इत्यर्थः

भाष्यम्—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यः मन्तव्यः निदिध्यासितव्यः" इत्यत्र आत्मनः दर्शनं विदधत्या श्रुत्या, तत् साधनक्रमोऽपि निर्दिष्टः। दर्शनं हि श्रवण–मनन–ध्यानलब्धजन्म। न हि यो न शृणोति, न मनुते, न ध्यायति स जातुचिद् दर्शनं लभते। दर्शनाधीना च जीवनसिद्धिः। अतः सिद्धिसंपिपादयिषुणा अवश्यं दर्शनलाभार्थं श्रवणादिकं विधिवत् संपाद्यम्। एवं गीतासु अपि वेद्यम्। समानचर्चत्वात्। येन हि गीता न श्रुता, न मता, न ध्याता तस्य दर्शनाधिकारः एव न संपद्यते। अतः श्रीशकृपया स्वात्मानं प्राप्ताधिकारं मन्वानः ग्रन्थकारः गीतादर्शनस्य प्रारंभमत्र प्रतिजानीते। श्रुतमात्राच्चाथशब्दात् मांगल्यलाभोऽवसेयः॥ १॥

ननु गीतेति विशेषणमात्रम् तच्च विशेष्याभावे निरवलम्बं सत् निरर्थं स्यात्। तन्मा भूदित्याह—

" गीतेत्युपनिषत् तादात्म्यात् तदर्थवहत्वात् तन्मूलत्वाच्च ॥ २॥

सूत्रार्थः—गीतेति = गीता इति अनेन शब्देन उपनिषत् = वेदान्तापरपर्याया उपनिषन्नाम्नी विद्या वेदितव्या। कुतः? तादात्म्यात् = तत् स्वरूपत्वात्, तदर्थवहत्वात् = तस्याः उपनिषदः योऽर्थः तस्य अर्थस्यैव प्रतिपादकत्वात् च = तथा तन्मूलत्वात् = उपनिषद्–योनित्वात् इत्यर्थः॥ १॥

भाष्यम्—गीतेति विशेषणमात्रेण व्यवहारस्तु न दोषावहः। विशेष्यस्य प्रसिद्धत्वात्। विशेष्या हि अत्र उपनिषत्। अतः श्रीमता भगवता गीता या उपनिषत् सा एव गीतेत्युच्यते। संक्षेपस्तु लोकस्य निरतिशयादरभावव्यञ्जकः। को हि नाम प्रियं दैर्घ्येण संबोधयेत्? प्रिया च भगवती गीतोपनिषत् मातृवत् लोकस्य। अतः मातरमिव गीतां निष्कासितोपनिषद्शब्दां गीतेति इयदेव ब्रूते। नेदं दूषणं अपि तु भूषणम्।

ननु प्रसिद्धासु ईशादि उपनिषत्सु शिष्टमान्यासु भगवद् गीतोपनिषदः नाममात्रेणाप्युल्लेखो न दृश्यते। तत् कथं तस्याः तत्त्वं स्वीकुर्मः? न च भगवता गीता इत्येतन्मात्रेण स्वीकार्या। आनुश्रविकोऽप्यर्थः आप्ततमोऽपि, हिततमोऽपि, कथंकारायोग्योऽपि यावद् बुद्धिं नारोहति तावत् न समाधानावहो भवति। अपि च तत्त्वपक्षपातो हि धियां स्वभावः। अतः तत्त्वाविरोधिनी बुद्धिः। सा च परितोष्या। अतः भग-

वता, शिष्टानामपि शिष्टेन गीता अपि न तन्मात्रेण उपनिषद्-गौरवं अर्हति । एवं प्राप्ते ब्रूमः । सत्यम् । भगवद् गीतायाः अभिधानमात्रेणापि उद्‌घोषोऽपि न श्रूयते तथापि तस्याः उपनिषत्त्वं न व्यभिचरति । नापि भगवता गीता इत्यनेनैव तस्याः गौरवं प्रतिपाद्यते ॥ न वा दार्शनिकानां बुद्धिरुन्धने अपि अभिरुचिः अतः अत्रान्यत्र सर्वत्र सर्वं बुद्धिपूर्वकमेव प्रतिपादयिष्यते ।

गीतायाः उपनिषत्त्वे "तादात्म्यात्" इति प्रथमो हेतुः उपन्यस्तः। उपनिषदां यः आत्मा-स्वरूपं तदेव स्वरूपं भगवत्याः गीतायाः इति बोध्यम् । जगज्जीवेश्वराख्यानां त्रयाणां तत्वानां स्वरूपनिर्णये क्षीणबला उपनिषत् विद्या । गीता अपि भगवती इममेव तत्त्वत्रयं सम्यक् निरूप्य कृतकृत्या भवति। आत्मनः च एकत्वात् गीतोपनिषदोर्न भेदः । विस्तरस्तु अत्रत्यः यथास्थानं प्रदर्शयिष्यते ।

तदर्थवहत्वादिति द्वितीयो हेतुः । उपनिषदां योऽर्थः प्रयोजनं तस्यैव प्रतिपादनं गीतासु दृश्यते । मोक्षावसाना हि ब्रह्मविद्या । गीताऽपि मोक्षपर्यवसायिनी । अतः फलदृष्ट्यापि द्वयोः एकरूपत्वम् । एतद् अपि यथावसरं प्रतिपादयिष्यामः ।

तन्मूलत्वादिति तृतीयो हेतुः । उपनिषन्मूला हि गीता । बीजरूपायाः उपनिषदः प्रभवति अमृतफला गीतावल्लरी । अतः कार्यकारणयोः अभेदादपि तयोः एकत्वं अवसेयम् । तथा हि प्राचीनानां उक्तिः—

सर्वोपनिषदो गावः दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीः भोक्ता दुग्धं गीतामृतं महत् ॥"

इति । उपनिषत्सु गोत्वं, गोपालनन्दने दोग्धृत्वं, पार्थे वत्सत्वं, सुधियि भोक्तृत्वं, गीतासु अमृतत्वं चारोप्यमाणं गीतायाः उपनिषन्मूलत्वं एव निगमयति। गीतार्थप्रतिपादकानि च उपनिषद् वाक्यानि अपि यथास्थानं उद्धरिष्यामः। एवं हेतुत्रयेण गीतायाः उपनिषत्त्वं सिद्धम् ॥ १ ॥

'गीतादर्शनं' इत्यत्र गीताशब्दार्थो निर्णीतः । दर्शनं इति अस्यार्थ निर्णेतव्यः । अनेकार्थत्वात् अस्य शब्दस्य । अतः शब्दनिमित्तं अर्थसंदेह अपनयन् स्वतंत्राभिमतदर्शनशब्दं व्याचिख्यासुः सहेतुकं आह—

दर्शनमिति सम्यक्ज्ञानं, अभ्युदयनिःश्रेयसप्रसूतेः प्रसिद्धेश्च ॥ ३ ॥

सूत्रार्थः— दर्शनं इति–दर्शनं इति अनेन पदेन सम्यक् ज्ञानं = यथार्थं ज्ञानं वेदितव्यम् । अभ्युदयः–अभितः उदयः अभ्युदयः, नितरां श्रेयः निःश्रेयः । तयोः अभ्युदयनिःश्रेयसोः प्रसूतिः–प्रसवः तस्मात्, प्रसिद्धेः = प्रथितेः च = अपि दर्शनस्य सम्यक् ज्ञानं इत्ययमेवार्थो ग्राह्यः इति ॥ ३ ॥

भाष्यम्–अभ्युदयनिःश्रेयसप्राप्त्यर्थं हि इयं प्रवृत्तिः। सम्यक् ज्ञानमूला च तयोः प्रसूतिः । सम्यक् जानानो हि यथाविधि वर्तते वर्तमानश्च अस्मिन् लोके परस्मिँश्च ध्रुवं अभ्युदयं भोगापरपर्यायं लभते । ततश्च ज्ञानबलादेव विरज्य स्वरूपावस्थितिरूपं नितरां श्रेयः पुनर्जन्माद्युपद्रवशून्यं निरस्तसाम्यातिशयं, अक्षय्यं विशुद्धं च विन्दते । अतः दर्शनं इति अनेन सम्यक् ज्ञानमेवात्र बोध्यं न केवलं ऐन्द्रियकं प्रत्यक्षादिकम् ।

दर्शनशब्दः सम्यक्ज्ञानवाचकः इति हि प्रथितं शास्त्रेषु । 'पातञ्जलदर्शनम्' "वेदान्तदर्शनम्" इत्यादिप्रयोगेषु विदितचरमेव विदुषाम् एतत् । अतः दर्शनशब्देनात्र तदेवार्थः ग्राह्यः इति ॥ ३ ॥

यतः अयं शब्दः शास्त्रवाचकः

"अत एव तत्प्रयोजना" ॥ ४ ॥

सूत्रार्थः—अतः इति हेतुसूचकं पदम् । अवधारणार्थो एवकारः भिन्नक्रमश्च । प्रयोजनानन्तरं वेदितव्यः । तत्प्रयोजना एव = शास्त्रस्य उपनिषदः यत् प्रयोजनं–फलं तेनैव प्रयोजनेन इयं गीता प्रयोजनवतीति ज्ञेयमित्यर्थः ॥ ४ ॥

भाष्यम्—दर्शनं हि सम्यक्ज्ञानं इति उक्तम् । अतः सम्यक्ज्ञानस्य यत् फलं तदेव गीतायाः अपि फलं इति अनुसंधेयम् । किंफलं तर्हि सम्यक् ज्ञानम् । इहलोके परस्मिन् लोके, आत्मलोके च संपूर्णसुखावाप्तिः फलं सम्यक्ज्ञानस्य । अतः त्रिविधसुखप्राप्तिफला भगवती गीता इति ध्येयम् ॥ ४ ॥

प्रयोजनबलेनैव अधिकारनिर्णयो विपच्यते । अतः अधिकारिणं निर्णयन्नाह ।—

दुःखत्रयस्य सर्वस्पर्शित्वात् परमानन्दप्राप्तौ च समेषां सहजा-
धिकृतत्वात् सर्वेऽत्राधिकारिणः ॥ ५ ॥

सूत्रार्थः—अत्र = गीताशास्त्रे सर्वे=मनुष्याधिकारत्वात् शास्त्राणां आब्रह्मस्तम्बान्तवाचकस्यापि सर्वशब्दस्य मनुष्यमात्रे संकोचो वेदितव्यः—सर्वे मनुष्याः अधिकारिणः = अधिकारवन्तः । कुतः ? दुःखत्रयस्य = आध्यात्मिकादित्रिविधदुःखस्य सर्वस्पर्शित्वात् = सर्वव्यापकत्वात् च = तथा परमानन्दप्राप्तौ = काष्ठारहितसुखवेदने समेषां = सर्वेषां मनुपुत्राणां सहजाधिकृतत्वात् =स्वाभाविकाधिकारात् इत्यर्थः ।

भाष्यम्—अस्मिन् गीताशास्त्रे सर्वे एव मनुष्याः अधिकारिणः वेदितव्याः । संकोचस्य अन्याय्यत्वात् । विश्वसंपत्तौ हि समेषां अधिकारः समः । सम्यक् ज्ञानं हि सर्वजनीना संपत्तिः । कस्याश्चिद् एकस्याः जातेः वा संप्रदायस्य वा देशस्य वा न तत्र केवलः एकलः वा अधिकारः न्याययुक्तः अतः मनुष्यमात्रः अत्र अधिकृतः । यो मत्वा कर्माणि सीव्यति स मनुष्यः इति यास्कोक्तः अर्थः मनुष्यस्यात्र ग्राह्यः ।

अपि च दुःखत्रयं तावदाध्यात्मिकादिकं समं एव सर्वेषां स्पृशति । दुःखत्रयस्यायं निरपवादः स्पर्शोऽपि सर्वान् एव दुःखत्रयविमोचनहेतुभूते दर्शनेऽस्मिन् अधिकरोति । समाना हि दुःखवेदना विश्वेषां अतः ततः मोक्षे अपि सर्वे एव अधिकारिणो भवन्ति ।

किञ्च प्राणभृन्मात्रस्य अस्ति ईश्वरदत्तोधिकारः काष्ठाविधुरस्य सुखस्य प्राप्तौ । ईश्वरानुग्रहस्वरूपे परमानन्दलाभे कस्यचिदपि प्रतिषेधस्तु ईशापराधः । अतः सहजोऽयं मनुष्यमात्रस्य परमानन्दलाभे अधिकारः । अतः ईशौदार्यस्य संकोचः अवैधः ॥ ५ ॥

अेवं अनुबन्धचतुष्टयं सूचयित्वा कात्स्न्येंन अस्याः भगवद्गीतोपनिषदः दर्शनं विधेयं इति सहेतुकमाह :—

अकृत्स्नदर्शनात् प्रयोजनासिद्धेः अनर्थप्रसूतेश्च मीमांस्येयं
कात्स्न्येंन सर्वशास्त्रमयीति ॥ ६ ॥

सूत्रार्थः—अकृत्स्नदर्शनात् = खण्डदर्शनात् प्रयोजनासिद्धेः = फलाभावात् च = तथा अनर्थप्रसूतेः= ततः अनर्थस्य-अनिष्टफलस्य प्रसवात् हेतोः इयं = एषा सर्वशास्त्रमयी = निखिलनिगमागमसारभूता भगवती

गीतोपनिषत् कार्त्स्न्येन = संपूर्णतया अशेषेण मीमांस्या = सादरं विचारणीया इति = इति शब्दो हि अध्यायपरिसमाप्तिसूचकः इति ।

भाष्यम्—भगवती गीता हि सर्वशास्त्रमयी वर्तते । सर्वाणि एव शास्त्राणि विधिनिषेधपराणि मोक्षपराणि च समन्वयरूपेण गीतायां प्रतिबिंबितानि । पुष्पेभ्यः मधु इव शास्त्रेभ्यः इदं देवानां मधु सञ्चितं सर्वज्ञेन भगवता यदुनन्दनेन । "सर्वशास्त्रमयी गीता सर्वदेवमयो हरिः" इति च आप्तानां उक्तिः । अतः प्रयोजनलिप्सुना सर्वेण इयं गीता संपूर्णतया सादरं विचारणीया । पूजितवचनविचारो हि मीमांसा-शब्दः इति भामत्यां वाचस्पतिमिश्राः । शास्त्राणां अकृत्स्नदर्शनात् न सिद्धिर्भवति, अपि तु अनर्थः प्रसूयते । अतः दर्शनशास्त्रस्य अभ्यासः अखंडः एव हितावहः अर्थकरः च । सिद्धेः लाभार्थं अनर्थस्य च निवारणार्थं, कार्त्स्न्येन दर्शनाभ्यासः अपेक्षितः इति ॥ ५ ॥

इति श्रीमन्निखिलशास्त्रनिष्णात परमहंस परिव्राजकाचार्य हरिप्रसादवैदिकमुनिशिष्य भट्टोपाह्व मणिशंकरात्मज नलिनशर्मप्रणीते गीतादर्शने अनुबंधचतुष्टयप्रपंचो नाम प्रथमोध्यायः स्वीयेनैव भाष्येण भूषितः ॥

## ॥ अथ विषादयोगः ॥

निरूपितं तावदनुबन्धप्रकरणम् । अथ प्रस्तूयते गीता-मीमांसा, दर्शनप्रधाना । अष्टादशाध्यबात्मिका तावद् गीतोपनिषत् । प्रत्येकस्य च अध्यायस्य विशिष्टं नाम, तत् तत् योगरूपेण अध्यायविशेषस्य प्रधान विचारानुरूपं दरीदृश्यते । तत्र प्रथमोऽध्यायः विषादयोगनाम्ना प्रसिद्धः 'विषीदन्निदमब्रवीत्' इति मध्ये व्याहारात् "शोकसंविग्नमानसः" इति उपसंहारदर्शनाच्च विषादो हि प्रधानः ।

ननु कोऽयं विषादो नाम ? विषादो हि सत्त्वसंक्षयात्मको व्यभिचारिभावः निश्वासाद्यनुभावानुसृतः । तथा च उक्तं दशरूपकाभिधे नाट्यशास्त्रे तस्य लक्षणं—

> प्रारब्धकार्यासिद्ध्यादेर्विषादः सत्वसंक्षयः ॥
> निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् । इति ।

अत्रापि प्रथमाध्याये दृश्यन्ते विषादलिंगानि अर्जुने "सीदन्ति मम गात्राणि मुखं च परिशुष्यति" इत्यारभ्य भ्रमतीव च मे मनः इत्यन्तानि ।

शिष्यस्तेहं शाधि मां त्वां प्रपन्नमिति च सहायान्वेषणादीनि । अतः विषादबीजा भगवती गीता ।

" ननु अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे, इति बीजं " इति अशोच्यस्य शोके प्रज्ञावादस्य च भाषणे गीतायाः बीजं इति हि गीताविदां परामर्शः । तत् कथं उच्यते विषादो हि बीजं इति ? नायं दोषः । विषादलक्षणे हृत्तापस्यापि उक्तत्वात् ।

ननु " अशोच्यानन्वशोचस्त्वं " इत्यस्मात् श्लोकात् वास्तविकः प्रारंभः गीतायाः युज्यते । न " धर्मक्षेत्रे कुरुक्षेत्रे इत्यादितः । मा भूत् अपार्थं गौरवमिति अतः समादधन्नाह:—

## आदितःद्वितीयस्थ दशमश्लोकपर्यन्तं उपोद्घातः गीतार्थावतारसंयोजनोपसंहारसौष्ठवलाभार्थत्वात् ॥ १ ॥

सूत्रार्थः—आदितः=प्रथमतः=धर्मक्षेत्रे कुरुक्षेत्रे इति श्लोकतः द्वितीय...पर्यन्तं=द्वितीयाध्यायस्य दशमश्लोकपर्यन्तं—विषीदन्तं इदं वचः इत्यन्तं= सप्तपञ्चाशत् श्लोकात्मकः संदर्भः इति यावत् । उपोद्घातः=प्रस्तावनारूपो विज्ञेयः । कुतः ? गीतार्था०=गीतायाः यः अर्थः तस्य अर्थस्य अवतारसौष्ठवलाभार्थत्वात्, संयोजनसौष्ठवलाभार्थत्वात, उपसंहारसौष्ठवलाभार्थत्वाच्च इत्यर्थः ।

भाष्यम्—सत्यं गीतायाः वास्तविकः प्रारंभः " अशोच्यानन्वशोचस्त्वं " इत्यस्मात् श्लोकादेव भवति । तथापि अग्रिमः संदर्भः न व्यर्थः प्रत्युत अतीवोपयुक्तः । उपोद्घातस्वरूपी हि सः । तत्स्वरूपी हि सन् सौष्ठवलाभत्रयं आवहति । गंगाया इव गीतायाः अवतरणं पापतापहरणं सुशोभनं भूयात्, सत्कर्मणि इव श्रद्धायाः अर्थसंयोजने गीतायाः सुशोभनो विनियोगो भवेत्, परममांगल्ये इव हरिभक्तेः गीतायाः परमशोभनः उपसंहारः स्यादिति कृत्वा महामुनिना व्यासेन अस्य सौष्ठवत्रयस्य लाभार्थं उपोद्घातस्वरूपः अयं संदर्भः प्राणायि । अतः न व्यर्थः अपितु अतीवोपपन्नः अयमारंभः ॥ १ ॥

स्यादेतत् । सत्त्वसंक्षये सति मोहप्रवेशः स्यात् । इह तु न मोहसिद्धिः । अपि तु कृपावेशः । कृपावृत्तिस्तु सत्वात्मिका । मोहस्य च कारुण्यस्य च महदन्तरम् । मोहस्तु दर्शनापिधानम् । कारुण्यं च दर्शनाविष्करणम् । अतः दर्शनावरकस्य मोहस्य तदुद्धारकस्य च कारुण्यस्य

समानकोट्यधिरोहणं न न्याय्यम् । कारुण्यपरिप्लुतस्यार्जुनस्य । रथोपस्थोपविष्टं, संन्यस्तसमस्तशास्त्रं प्रांजल्यवस्थितं साश्रुविलपंतं, दर्शनं समस्तमांगल्यस्य संस्कारितायाः, शिष्टत्वस्य च व्यंजकं भाति । अतः नात्र सत्वसंक्षयः अपि तु सत्वोत्कर्षः । उद्रिक्तसत्त्वमूर्तेः अर्जुनस्य मोहविद्धत्वेन चित्रणं न केवलं अनुचितं अपितु न्यायनिष्ठायाः समूलोच्छेदकरम् । अपि च न खलु हिंसाविहारो जातुचिद् प्राकृतस्यापि धर्मः पापत्वेन तस्याः आम्नानात्, अहिंसायाश्च परमधर्मत्वेन विधानात् । किमु वक्तव्यं प्राप्तभगवत्संपर्कस्य, शिष्टत्वावधेः मांगल्यसीम्नः महात्मनः गुडाकेशस्य ? अतः अर्जुनस्य परितापानुविद्धो विषादः न मोहमूलः अपि तु सत्त्वोत्कर्षप्रभूतः, न निन्द्यः अपि तु प्रशस्यः, न हेयः अपि तु उपादेयः, न तिरस्करणीयः अपि तु अभिनन्दनीयः । एवं प्राप्ते ब्रवीति सूत्रकारः—

॥ मोहसिद्धिः परकृपाप्रवेशात् ॥ २ ॥

सूत्रार्थः—मोहसिद्धिः=मोहस्य सिद्धिः–प्रस्थापना परकृपा–प्रवेशात्–परायाः=अस्वाभाविक्यायाः कृपायाः=कार्पण्यापरपर्यायाः दयायाः प्रवेशात्=प्रकर्षेण व्यापनात् भवति ज्ञायते इति शेषः इत्यर्थः ॥ २ ॥

भाष्यम्—परकृपाप्रवेशादेव अर्जुनस्य मोहः सिद्धयति । तथाहि "कृपया परयाविष्टः" इत्यत्रस्थः 'परा' इति शब्दः चिन्त्यः । तस्य "परमा" इति अर्थः अत्र न भवति । संदर्भविघातकत्वात् । अनेकार्थत्वेऽपि शब्दानां यत्र यस्यार्थस्य ग्रहणं न्याय्यं स एव ग्राह्यः । संदर्भालोचनं तु 'परा' इत्यस्य अस्वाभाविकी इत्यर्थं पुरस्करोति । कथमिति चेदयं हि संदर्भः । धर्मजनके कुरुक्षेत्रे युयुत्सवः पाण्डवाः कौरवाश्च समवेता अभूवन् । संग्रामस्य पूर्वभूमिका च उभयोः पक्षयोः परिपूर्णा अभूत् । शंखवादनमपि आहवारंभसूचकं संजातम् । उत्साहोऽपि गांडीवधनुर्धारिणः अर्जुनस्य अदम्यः दृश्यते । शास्ति चासौ भगवन्तं उभयोः सैन्ययोः उत्संगे रथस्थापनाय शासकस्वरेण । स्थापितरथः धृतहयरश्मिः भगवान् देवकीनन्दनः तं उभयोः चम्वोर्दर्शनमपि यथाविधिकारितवान् । ततः च उभयत्रस्थितस्वजनदर्शनात् भग्नं हृदयं तावत् अर्जुनस्य अनुप्रविष्टश्च विषादः । अस्मिन्नेव संग्रामे त्र्यम्बकतोषकविक्रमस्य, वीर्यमूर्तेः अर्जुनस्य कथं क्षात्रतेजः अस्तंगतमासीद् इति भवति प्रश्नः । न खलु भूतानुकंपानुकंपितः सन् असौ युद्धं तित्यजिषति । न वा अहिंसा

परमो धर्मः इत्यास्थयापि तस्य अकस्मादेव एवंविधे विषमे क्षणे विरतिः उपपन्ना। न खलु मूषकदर्शनात् विगतवैरो भवति मार्जारः। न वा करुणा-मनोहरः अर्जुनः स्त्रैणमाश्लिष्यति। अश्रूणि प्रेरयन्त्यपि करुणा तावत् न नैर्बल्यं आवहति । न वा विषादलिंगानि बिभर्ति। परदुःख प्रहाणेच्छा हि करुणा। स्वरूपानुरूपे कर्मणि परदुःखप्रहाणात्मके जीवं प्रेरयति न केवलं रोदने, भूमौ वा लुठने, निर्वीर्ये वा विलपने। अतः इयं परिस्थितिः अर्जुनस्थमोहस्यैव कामपि दुरासदां अभिख्यां ख्यापयति। यदि च स्वजनादृते कस्याप्यन्यस्य अग्रे उपस्थितिः अभविष्यत्, नाभविष्यत् स्तोका अपि दया अर्जुनस्य हृदये। साहजिको हि धर्मः निमित्ते सति भवत्येव आविष्कृतः अन्तः वा बहिः वा । सहजा च युद्धवृत्तिः अर्जुनस्य क्षत्रियप्रवरस्य। सा चेत् अन्यदर्शनात् समिद्धा, स्वजनावलोकनेन च निर्वापिता भवेत् नूनं तत्र कारणं मोहः एव आसक्त्याख्यः न परदुःखभंजना करुणा वा परमधर्मरूपा अहिंसा वा। न खलु अपराधिनः परान् निगृह्णन्, समापराधग्रस्तं च स्वपुत्रं अनुगृह्णन् न्यायमूर्तिः विश्वस्यो भवति । न वा श्रेष्ठिपुत्रकृतश्वमरणे सुवर्णसारमेयस्य तत्तुल्यं दानं विदधन् पुरोहितः स्वात्मजसाधितश्वनिधने सिद्धे सति तत्तुल्यं तूलनिर्मितं कुक्करदानं शास्त्रेभ्यः निष्कर्षयन् समादरणीयो भवति। अपि च अस्ति मोहस्य कापि तादृशी कामरूपिणी शक्तिः यया पंडितंमन्या अपि बंभ्रम्यन्ते। तदा च पंडितरूपा अपि प्रज्ञावादपुरस्सरं स्वमोहं निन्हुवाना दृश्यन्ते। तर्कनिबन्धनचर्चाकौशल्येन मोहविद्धेन न सत्यं अपिधीयते। न खलु शृंगारशोडशीं आदधाना अपि, परिणयवेदीं अध्यस्तापि पिशाची कमनीया भवति । अर्जुनस्य प्रज्ञावादपिनद्धाः अपि, सूक्तयः अपि, कार्पण्यं करुणात्वेन, मोहं प्रबोधत्वेन, विषादं प्रसादत्वेन, अधर्मं धर्मत्वेन, आसक्तिं प्रेमत्वेन, पापं च पुण्यत्वेन साधयितुं न शक्नुवन्ति। अतः स्वजनासक्तिरूपेण सुचारुभासिना मोहलेपेन दिग्धैव अर्जुनस्य दृष्टिः न तत्त्वनिष्ठा वा हितावहा वा लालनीया वा भवति ॥ २॥

ननु सिध्यतु मोहः। किन्तेन आयातम् ? तत्राह-

मोहात् कर्तव्यभ्रेषोपस्थितिः ॥ ३ ॥

सूत्रार्थः—मोहात् = विपर्ययात् = वैचित्यात्; कर्तव्यभ्रेषोपस्थितिः = कर्तुं योग्यस्य कर्तव्यस्य कर्मणः यो भ्रेषः = अनवस्थितिः, तस्य कार्याकरणस्य उपस्थितिः = संन्निधिः आयाति इत्यर्थः।

भाष्यम्—मोहात् कार्पण्यं ततः च इतिकर्तव्यतायाः भ्रेषः । स च अनिष्टः । कर्तव्यव्याप्तं हि समस्तं जीवितम् । कर्तव्यस्य च्युतिस्तु पुरुषार्थघातिनी । यावद् हि करोति कार्यं विधिपूर्वकं तावदेव मनुष्यस्य मनुष्यत्वम् । कर्तव्यनिर्भरा च जीवनयात्रा । सा चेत् कर्तव्यनिरवकाशा स्याद् अपिगच्छेत् तस्याः तत्त्वम् । यात्रा हि पावनी भवति । अतः कर्तव्यभ्रेषः मोहजनिमा विवेकिभिः दूरतः एव हेयः इत्यर्थः ॥ ३ ॥

ननु हिंसायाः निवर्तमानः शस्त्रसंन्यासं च आश्लिष्यमाणः अर्जुनः शान्तिदूतत्वेन अभिनन्द्यः, सर्वभूतहितावहायाः अहिंसायाः प्रतिष्ठापकत्वात् । अतः उचितोत्तमं कुर्वन् कथमयं प्रतिषिध्यते । औचित्यं हि विवेकस्य हृदयम् । एवं प्राप्ते आह—

पापोपचयादिर्हिंसान्तोक्तिव्याजेन शस्त्रसंन्यासोनुचितः
मोहत्राणात् ॥ ४ ॥

सूत्रार्थः—पापो०...व्याजेन= अधर्मसंचयादिवधान्तवचनच्छद्मना, शस्त्रसंन्यासः=आयुधविसर्ग अनुचितः=अयोग्यः । कुतः । मोहत्राणात्= मोहस्य विपर्ययस्य, त्राणात्=एभिः हेतुभिः रक्षणात् इत्यर्थः ॥ ४ ॥

भाष्यम्—हिंसायाः निवर्तमानः शस्त्रसंन्यासं च कुर्वाणः न केवलं अर्जुनः अपि तु मनुष्यमात्रः अभिनन्द्यः । अहिंसाप्रतिष्ठापनमपि सर्वजनीनं स्तुत्यमेव । न तत्र विवादावसरः । न वयं हिंसां स्तूमः शस्त्रसंन्यासं वा हितावहं निन्दामः अहिंसां वा हातुं स्वप्नेऽपि चिन्तयामः । वयं तु एतावदेव वच्मः यत् नासीत् औचित्यपूर्णः तात्कालिकः अर्जुनस्य शस्त्रसंन्यासः । प्राज्ञोक्तिच्छद्मना मोहगोपनं कुर्वाणः अर्जुनः विवेकवधं करोति न विवेकपुष्टिम् ।

अयमर्थः । न खलु गीतोपक्रमः पापसंचयपुष्ट्यर्थं हिंसायाः अनुमोदनार्थं वा, शस्त्रविहारस्य न्याय्यत्वप्रतिपादनार्थं वा । अपितु मोहस्य कुशलैरपि दुरासदस्य वधाय । परिणयवेषधारिणीं कान्तरूपवाहिनीं शूर्पणखां तावद् रामभद्र एव अभिजानाति राक्षसीरूपाम् । रामेणैव गृह्यमाणा सा च्छद्मरूपं जहौ, आविष्चकार नैजं विकृतं रूपम्, अवाप च उचितं दण्डम् । आपातरमणीया अपि मोहदूषिताः अर्जुनस्य उक्तयः वञ्चयेत् अबुद्धं न प्राप्तबोधम् । प्राप्तबोधस्तु रामायते । अतः मोहरिरक्षुः अर्जुनः तत्पक्षपाती च न अभिनन्द्यौ भवतः इत्यर्थः ॥ ४ ॥

ननु स्वजनवधो हि मोहः न स्वजनत्राणम् । स्वजनवधे धर्मं पश्यन् हि न आततायित्वं व्यतिक्रमते । आततायी च निग्रह्यो भवति । अतः स्वजनत्राणपरायणः अर्जुनः सद्भिः अनुसर्तव्यः न स्वजनवधविधानपरायणः । एवं प्राप्ते ब्रवीति—

स्वजनासक्तेः विपर्ययः ततः शोकसंवेगात् कर्तव्यभ्रेषः ॥ ५ ॥

सूत्रार्थ—स्वजनासक्तेः= आत्मीयप्रसंगात्, मोहः= विपर्ययः उद्भूतः ततः=तस्मात् = मोहात् लब्धजन्मनः शोकावेगात् = प्रियवियोगकल्पना जन्यसंतापातिवेगात्, कर्तव्यभ्रेषः=कार्यस्य धर्मरूपस्य भ्रेषः = च्युतिः इत्यर्थः ॥

भाष्यम्—बुधोऽपि कथं मुधा भ्रान्तोऽसि ? न हि अत्र स्वजनवधो विधीयते अपि तु मोहस्य मारणम् । मोहावरणं हि शोकजनकं भवत् कर्तव्यभ्रेषकरं संजातम् । तत् च स्वजनविषयो मोहः । सर्वो हि पुत्रे स्निह्यति न तस्य दूषणे इत्यर्थः ।

अपि च सत्यानृतयोः सत्यमेव स्वीकार्यं भवति न अनृतम् । सत्य प्रतिष्ठिता हि लोकस्य स्थितिः श्रेयःसंपत्तिश्च । सत्यसमृद्धिकरो हि स्वजनस्नेहः स्यात् स्वीकारयोग्यः न सत्यव्यृद्धिकरो मोहमूलकः इत्यर्थः ॥ ५ ॥

अध्यायं उपसंहरन्नाह—

विषादबीजा प्रसादफला हि गीताकल्पलतेति ॥ ६ ॥

सूत्रार्थ—विषादबीजा = सत्वसंक्षयस्वरूपविषादमूला अपि प्रसादफला = प्रसन्नतत्त्वज्ञानपर्यवसाना हि = यस्मात् तस्मात् गीता कल्पलता = गीतोपनिषद्रूपा इयं कल्पलता = वास्तवा चतुर्विधपुरुषार्थदोग्ध्री कल्पवल्लरी प्रौढप्रज्ञैः निरंतरं संसेव्या इत्यर्थः ।

भाष्यम्—कल्पलता हि कपोलकल्पिता इयं तु वस्तुभूता गीताख्या कल्पलता । चतुर्विधपुरुषार्थफलत्वात् । को हि स्यात् पुरुषस्य अर्थः यं भगवती गीता न परिपूरयेत् ? अतः सर्वपुरुषार्थसाधिनी इयं विषादनिःसृता प्रसादसंगमनी च सर्वैरेव प्रौढप्रज्ञावद्भिः निरंतरं संसेव्या इति अनुनयः शास्त्रकारस्य इत्यर्थः ॥ ६ ॥

॥ इति विषादयोगः ॥

## ॥ अथ सांख्ययोगः ॥

अेवं प्रथमाध्याये मोहात् जंजन्यमाना आत्मच्छलनाचातुरी अर्जुनं शोकसंविग्नमानसं कुर्वन्ती, शस्त्रं च त्याजयन्ती रथोपस्थे च उपवेशयन्ती, धैर्यवीर्यमूर्तिं गाण्डीवधन्वानं च रोदयन्ती विजेजीयमाना दरीदृश्यते। अन्यैः सूक्ष्मदर्शिभिः अपि अगृह्यमाणा इयं आत्म वंचना, भगवता सर्वान्तर्यामिणा, सर्वसाक्षिभूतेन दृष्टा समूलं गृहीता च। अतः स्वसख्युः मोहच्छायया पंगूकृतपराक्रमस्य अधः पतनं असहमानः यदुवाच यदुनन्दनः, तस्य रहस्यं स्फोरयन् आह—

### स्वभावोत्तेजनार्था भगवदुक्तिः ॥ १ ॥

सूत्रार्थः– स्वभावोत्तेजनार्था=स्वस्य भावः स्वभावः—सहजः भावः जन्मना जातः भावः–क्षात्रधर्मः इति यावत्, तस्य उत्तेजनार्था=समिन्धनार्था, भगवदुक्तिः=भगवतः उक्तिः "कुतस्त्वादि" ...... "परंतप" पर्यन्ता विज्ञेया इत्यर्थः ॥ १ ॥

भाष्यम्—प्रबलतरवृत्त्यन्तरेण आक्रान्तस्वभावः हि एवंविधेषु कोमलेषु प्रसंगेषु भवति लुप्ततेजस्कः, भवति च पुनः समिद्धः दोधूयमानः आप्तोक्त्या, भस्मच्छन्नः हव्यवाहनः इव मातरिश्वना। तस्मात् भगवदुक्तिः मोहच्छन्नार्जुनस्वभावस्य समिन्धनार्था विज्ञेया।

ननु काऽसौ उक्तिः ? उच्यते—
कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्
अनार्यजुष्टं अस्वर्ग्यं अकीर्तिकरमर्जुन !
क्लैब्यं मास्म गमः पार्थ ! नैतत्त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ इति ॥

अयमर्थः। कुतस्त्वां अर्जुनं क्षात्रधर्मं इव मूर्तिमन्तं, आर्यप्रवरं, सदेहप्राप्तस्वर्गं, यशोधवलं, इदं कश्मलं नितान्तानवसरे ग्रसितवत् इति अज्ञेयमेतत् विस्मयावहम्। पृथापुत्र ! नपुंसकत्वं मा गाः। त्वयि वीरशिरोमणौ एतत् न शोभते। अतः तुच्छं मनोनैर्बल्यं विहाय उत्तिष्ठ। त्वं तु परंतपः असि न परतप्यः इति ॥ १ ॥

ननु एवं आप्ततमेन भगवता उद्बोधितोऽपि अर्जुनः कथंकारं न जहाति। किम्मूलोऽयं कथंकारः यो भगवद्वचनादपि नोत्खातः ? समादधाति—

पूज्यपूजाव्यतिक्रमात्, रुधिराक्तभोगापेक्षया भैक्ष्यस्य च प्रशस्यत्वाभासात् अर्जुनस्य कथंकारः ॥ २ ॥

सूत्रार्थः—पूज्यपूजा०=पूजायोग्याः पूज्याः भीष्मद्रोणादयः तेषां पूजायाः-अर्चनायाः व्यतिक्रमात्=उल्लंघनात् अशास्त्रीयात् च =तथा च रुधिराक्त०= शोणितप्रसक्तसुखतत्साधनतुलनया भैक्ष्यस्य = भिक्षालभ्यस्य अन्नस्य शास्त्रीयस्य प्रशास्यत्वाभासात् = प्रशंसनीयत्वप्रतीतेः। अर्जुनस्य=पार्थस्य, कथंकारः=स्वपक्षस्थापनोत्सुकः परपक्षनिग्रहात्मको विरोधपुरस्कारकः प्रश्नः इत्यर्थः ॥ २ ॥

भाष्यम्ः—न खलु श्रवणमात्रेण आप्तोक्त्या स्थानभ्रष्टो भवति मोहः श्रवणानन्तरं मननादिकस्यापि विधानात्। मोहो हि प्रबोधेन साक्षात्कारात्मकेन निवर्तते, न प्रबोधाभासेन, विरोधाभावात्। भगवदुक्त्यात्र स्वभावोत्तेजनमात्रं विधीयते न मोहस्य नाशः। अतः उद्बोधितोऽपि चेदर्जुनः व्यामोहं न जहाति नासौ ईश्वरापराधः। व्यामोहश्चासीत् अर्जुनस्य पूज्यपूजाव्यातिक्रमणकल्पनात्, असृगक्तभोगापेक्षया भैक्ष्यान्नस्य प्रशास्यतरत्वाभासात्। पूज्यपूजाव्यतिक्रमो हि शास्त्रं उल्लंघयति, भैक्ष्यमपि च एवंविधे प्रसंगे शास्त्रसंमतं आभाति, हिंसाऽहिंसयोः अहिंसायाः एव प्रतिष्ठितत्वात्। अतः शास्त्रीयाचारस्य व्याजेन मोहदूषितोऽपि अर्जुनस्य कथंकारः सत्य एव भाति, ज्ञानशोभनः इव प्रतीयते। तथापि न भाति इति भवति, न प्रतीयते इति प्रमाणेन प्रतितिष्ठति इत्यर्थः ॥ २ ॥

अपि च कृत्वापि कथंकारं न कर्तव्यं निश्चेतुं अलंभवति अर्जुनः। कथंकारश्चेत् ऋतसंपृक्तोऽभविष्यत् नाभविष्यत् तस्य दोलायमाना चेतोवृत्तिः, भवति च। अतः कथंकारस्य अनौचित्यं व्यञ्जयन्नाह—

शोकसंतप्तत्वात् कर्तव्यानवधारणमपि ॥ ३ ॥

सूत्रार्थः—शोकसंतप्तत्वात् = शोकेन प्रियवियोगकल्पनोद्भूतेन संतापेन संदग्धत्वात्, कर्तव्यानवधारणम् = कर्तव्यस्य तत्क्षणप्राप्तस्य कार्यस्य-स्वधर्मस्य अनवधारणं-अग्रहणम् अपि सूचयति कथंकारस्य अनौचित्यं इत्यर्थः।

भाष्यम्—कथंकारोऽपि क्लैब्यमेव व्यनक्ति। कुतः? शोकसंतापस्य सद्भावात् ततः च कर्तव्यस्य अनवधारणात् कथंकारं कुर्वाणो

हि चेत् आत्मनः कथंकारे अभ्रान्तः अभविष्यत् नाकरिष्यत् शोकम्। न वा शोकं जुषन्नपि कर्तव्यावधारणे शैथिल्यं अभजिष्यत्। शोचति अर्जुनः भजति च शैथिल्यं कर्तव्यनिर्णये। अतः शास्त्रीयत्वभ्रमावहोऽपि अनुचितः अस्य कथंकारः इत्यर्थः ॥ ३ ॥

पुनरपि कथंकारस्य मोहविद्धत्वं साधयन्नाह—

## कार्पण्यात् भगवत्प्रपत्तिश्च ॥ ४ ॥

सूत्रार्थः—च = तथा कार्पण्यात् = कृपणस्य भावः कार्पण्यं तस्मात् कार्पण्यात् भगवत्प्रपत्तिः = षडैश्वर्यसंपन्नस्य भगवतः प्रपत्तिः = सर्वभावेन शरणं, तया प्रपत्या अपि कथंकारस्य मोहविद्धत्वं सिद्ध्यति इत्यर्थः ॥ ४ ॥

भाष्यम्—द्रव्यसत्वेऽपि आत्मसुखार्थमपि काकणिकामात्रमपि व्ययितुं असन्नद्धो हि कृपणो भवति। आत्मसुखलाभार्थमपि, तत्साधक-विवेकोपकरणसत्त्वेऽपि तद्व्यये अव्याप्रियमाणो हि अध्यात्मकृपणः। तस्य भावः कार्पण्यं मोहापरनामधेयम्। तेन कार्पण्येन आक्रम्यमाणः अर्जुनः भगवत्प्रपन्नो भवति। कार्पण्यग्रस्तः भगवच्छरणं च ऋच्छन् अर्जुनो हि स्वकथंकारस्य निरवलंबत्वं अन्तःसारशून्यत्वं च स्वयमेव व्यनक्ति। अतः मोहगाथैव इयं अर्जुनस्य आत्मच्छलनप्रवीणा इति स्पष्टम्। विस्तरभयात् अनुक्ताः अर्जुनोक्तयः मनीषिभिः स्वयमेव ऊह्याः इति अलं पल्लवितेन ॥

॥ इति उपोद्घातः ॥

एवं संक्षीणसत्त्वः अर्जुनः कार्पण्यात् अनवधृतात्म कर्तव्यः भगवन्तं प्रपेदे। तरुणकरुणावरुणालयो हि भगवान् स्वसखायं समीक्ष्य सीदन्तं तं तस्माद् मोहसागरात् समुद्दधार आत्मज्ञानवितरणेन। आत्मज्ञानं हि मोहमारणं भवत् शोकार्णवशोषणं भवति। "तरति शोकमात्मवित्" इति श्रुतेः। शोको हि मोहसमुद्भवः यावन्मोहो न म्रियते तावत्तदवस्थः एव तिष्ठति। यथागदं च अगदं विधेयम्। आसीच्च रोगः मोहमयः ज्ञानात्मकेनैव औषधेन निवर्तनीयः विरोधात्। तमः प्रकाशयोरिव अस्ति विरोधः ज्ञानाज्ञानयोरपि। अज्ञानं तत्कार्यं च ज्ञानेनैव विरोधिना तिरोधीयते। अतः अशोच्यानन्वशोचस्त्वं इत्यारभ्य भगवता अर्जुनस्य मोहतूले एव ज्ञानाग्निः निधाप्यते।

स्यादेतत् । आत्मज्ञाननिवर्त्यः मोहस्तदनुजः शोकश्च । अविदित्वा आत्मानं न तत् संभवति । वेदनं च आत्मनः वस्तुत्वे सिद्ध्यति न अवस्तुत्वे । आत्मा चासिद्धः । अतः जनन्यभावे सुतवत् आत्मनः अभावे मोहाभावः ततः च शोकाभावः इति एतत् कपोलकल्पिवमेव इति पूर्वपक्षं उत्थापयन् समादधानः ब्रवीति—

नास्ति आत्मा अप्रमेयत्वादिति चेन्नास्ति ततः एव ॥ ५ ॥

सूत्रार्थः—अप्रमेयत्वात्=प्रमातुं अशक्यत्वात्=प्रमाणानां अगोचरत्वात् आत्मा=आत्मवस्तु नास्ति=न सिद्ध्यति न विज्ञायते इति चेत्= एवं चेत् मन्यसे न = न साधु कथ्यते । नैवं मन्तव्यम् । कुतः ? अस्ति = आत्मवस्तु अस्ति-भवति ततः एव=अप्रमेयत्वादेव हेतोः इत्यर्थः ।

भाष्यम्—यदस्ति तत् प्रमाणेन गृह्यते । नेदं आत्मवस्तु प्रमाणेन केनचित् गृह्यते । अतः सप्तमरसवत् नास्ति आत्मवस्तु । तथाहि नायमात्मा प्रत्यक्षेण गृह्यते । रूपाद्यभावात् । नानुमानगोचरो भवति संबंधस्याग्रहणात् । नापि शब्दस्य विषयः जातिमत्वाद्यभावात् । प्रमाणान्तराणां च एष्वेव सिद्धत्वात् अप्रमेयः एवात्मा । अप्रमेयश्च सन् न विद्यते-विद्यतेः अभावाच्च तस्य ज्ञानं अशक्यं । ततश्च आत्मनः अविद्यमानस्य ज्ञानं ततः मोहनिवृत्तिः ततश्च शोकाभावः इत्यहो भ्रमविलसितमेतत् । अतः मूलशाखान्यायेन असमंजसमेवायमभ्युपगमः । एवं प्राप्ते ब्रूते । नायं दोषः । अस्ति आत्मा अप्रमेयत्वादेव । आत्मनः अप्रमेयत्वं अस्माकं भूषणं न दूषणम् । तथाहि अप्रमाणगोचरः एव अयमस्माकं आत्मा । प्रमेयमात्रस्य जडत्वात् । यद् हि प्रमेयं तत्सर्वं जडं एव भवति । चेतनं च आत्मवस्तु । चेतनं च प्रमाणाविषयमेव । चेतनस्य चेतनान्तरेण गृह्यमाणत्वे अनवस्थादोषः । ग्राह्यस्य च अचेतनत्वमेव प्रसज्येत तथा च अग्राह्यमेव चेतनं इति अकामेनापि स्वीकार्यं भविष्यति । प्रमाणानामपि आत्मत्वेन नहि आत्मा प्रमाणग्राह्यो भवति ।

ननु सप्तमरसवत् अविद्यमानः एव आत्मा प्रमाणैः अग्राह्यः कथं न स्यात् ? अलं अप्रमेयस्य साधनेन । एवं हि सर्वोऽपि प्रमाणप्रमेयव्यवहारः क्षुब्धः भवेत् लोपं च इयात् ? मैवं ब्रूयाः । सप्तमरसस्तु अविद्यमानःसन् न प्रमाणप्रमेयो भवति । आत्मा तु विद्यमानः प्रमाणानामयोग्यत्वात् न प्रमेयो भवति । अस्ति तावत् प्रमाणानामपि मर्यादा । न च अप्रमेयत्वं आत्मनः स्वभावं भवत् पर्यनुयोज्यं भवति । विद्यमान-

मपि वस्तु अतिदूरादिभिर्हेतुभिः अग्राह्यं भवति। तथा च तंत्रान्तरे उक्तम्।—

अतिदूरात् सामीप्यात् इन्द्रियघातात् मनोनवस्थानात्
सौक्ष्म्यात् व्यवधानात् अभिभवात् समानाभिहाराच्च ॥

इति। सौक्ष्म्याच्चास्य आत्मतत्त्वस्य अनुपलब्धिः न अभावात्। इतरेऽपि हेतवः यथासंभवं योज्याः।

तस्मात् सद् आत्मतत्त्वं प्रमाणानां अयोग्यत्वात् न गृह्यते न अभावादिति जोषमास्व इति सर्वं चतुरस्रम् ॥ ५ ॥

एवं आत्मनः मुख्यं अप्रमेयत्वं सुसाधयित्वा सूक्ष्मतमस्य तस्य अस्तित्वं प्रतिपादयन्नाह—

अस्ति संघातपरार्थत्वात् ॥ ६ ॥

सूत्रार्थः- आत्मेति पूर्वसूत्रादनुकृष्यते सर्वत्र। अस्ति=विद्यते आत्मा। कुतः संघातपरार्थत्वात्=स्वतः परस्य य अर्थःभोगापवर्गाख्यः तस्य अर्थस्य साधकत्वात् इत्यर्थः

भाष्यम्—संघातो हि परार्थो भवत् आत्मनः अतिरिक्तस्य तत्त्वान्तरस्य समर्पको भवति। न हि संघातो स्वार्थं भवति। देहादिनामपि संघातत्त्वेन स्वतः परस्य-भिन्नस्य अतिरिक्तस्य आत्मनः अस्तित्वसूचको भवति। देहादिसंघातेन यः सूच्यते स एव आत्मा अतः अस्ति आत्मा ॥ ६ ॥

द्वितीयं हेतुं पुरस्करोति—

त्रिगुणादिविपर्ययात् ॥ ७ ॥

सूत्रार्थः—अस्ति आत्मा इति पदद्वयं अनुवर्तते। त्रिगुणादि विपर्ययात् = त्रयाणां गुणानां सत्वरजस्तमसां तेषां त्रिगुणादीनां—आदिपदेन अविवेकित्वादयो धर्माः संगृह्यन्ते तेषां विपर्ययात् = व्यावर्तनात् अपि असंहतः आत्मा सिद्ध्यति ॥ ७ ॥

भाष्यम्—आत्मा हि असंहतः। त्रिगुणादयो हि धर्माः तावत् संहतत्वेन व्याप्ताः। तत् संहतत्वं च परे व्यावर्तमानं त्रैगुण्यादिकं अपि व्यावर्तयति। तस्माद् व्यावर्तनात् त्रिगुणादीनां अस्ति आत्मा असंहतः इति सिद्ध्यति ॥ ७ ॥

अस्ति आत्मा कुतः ?

अधिष्ठानात् ॥ ८ ॥

सूत्रार्थः—अस्ति आत्मा इति पदद्वयं अनुकृष्यम् । अधिष्ठानात् = अधिष्ठानात् हेतोः अपि अस्ति आत्मा अत्रिगुणः इत्यर्थः ॥ ८ ॥

भाष्यम्—त्रिगुणानां अधिष्ठीयमानत्वात् हेतोः अपि त्रैगुण्यादन्यं आत्मानं जानीमः । तथा हि यत् यत् सुखदुःखमोहात्मकं तत्सर्वं ततः भिन्नेन केनचिदधिष्ठितं यथा रथादिकं सारथ्यादिना, सुखदुःखमोहात्मकं हि सर्वं बुद्ध्यादिकं । तस्मात् तदपि परेण अधिष्ठातव्यम् । यः परः सः एवास्माकं आत्मा त्रैगुण्येन अस्पृष्टः इत्यर्थः ॥ ८ ॥

अपरं हेतुमाह—

भोक्तृभावात् ॥ ९ ॥

सूत्रार्थः—अस्ति आत्मा इति अनुसंधेयम् । भोक्तृभावात्=भोक्तुः भावः भोक्तृभावः तस्मादपि आत्मा अस्ति इति ज्ञेयम् ।

भाष्यम्:—भोग्यं हि सुखदुःखादिकम् । तच्च सर्वानुभवसिद्धम् । तच्च भोग्यं न स्वार्थं भवितुमर्हति । न हि सुखं सुखेनैव दुःखं वा दुःखेनैव भोग्यं भवति । सुखेन अनुकूलनीयः दुःखेन प्रतिकूलनीयः च सुखदुःखाभ्यां अन्यः एव भवितुमर्हति । स्वात्मनि वृत्तिविरोधात् । अतः यः असुखाद्यात्मा सुखेन वा दुःखेन वा अनुकूलनीयो वा प्रतिकूलनीयो वाऽस्ति स एव आत्मेत्यर्थः ॥ ९ ॥

अपरं हेतुं परिगणयन्नाह—

कैवल्यार्थं प्रवृत्तेश्च ॥ १० ॥

सूत्रार्थः–अस्ति आत्मेति पदद्वयं अनुवर्तते । कैवल्यार्थं=मोक्षार्थं प्रवृत्तेः शास्त्राणां, सुखेप्सूनां दुःखभीरूणां च व्यापृतेः च=अपि आत्मा अस्ति इति सिद्ध्यति ॥ १० ॥

भाष्यम्:—शास्त्राणां साक्षात्कृतधर्माणां महर्षीणां च दृश्यते प्रवृत्तिः कैवल्यार्थम् । सापि आत्मास्तित्वं प्रत्याययति । स्वरूपावस्थिति रूपं हि कैवल्यं सुखैकनिलयं सत् न बुद्ध्यादीनां पदार्थानां संभवति । ते हि दुःखाद्यात्मकाः । तथाभूताश्च न स्वभावात् वियोजयितुं शक्यन्ते ।

शक्ये हि विनियोज्यः पुरुषः न अशक्ये । आत्मा च अतदात्मा । अतः दुःखत्रयात् आत्मनः स्वरूपभूतसुखराशेः शक्यः वियोगः । अतदर्थं व्याप्रियमाणाः दृष्टिसंपन्नाः, शास्त्राणि च पुरुषास्तित्वं प्रतिपादयन्ति इत्यर्थः । भवति च कारिका तन्त्रान्तरे सर्वस्यास्य अर्थस्य प्रतिपादिका यथा—

॥ संघातपरार्थत्वात् त्रिगुणादिविपर्ययात् अधिष्ठानात् ।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च इति ॥ १० ॥

एवं आत्मनः अस्तित्वं प्रतिपाद्य अथ तस्य स्वरूपं विवृण्वन् आह—

सच्चिदानन्दस्वरूपः श्रुतिस्मृतियुक्तिअनुभवेभ्यः च ॥ ११ ॥

सूत्रार्थः— आत्मेति पदं अनुकृष्यम् । आत्मा सच्चिदानन्द स्वरूपः = सत्स्वरूपः चित्स्वरूपः आनन्दस्वरूपः अस्ति कुतः ? श्रुति० = श्रुत्यादि अनुभवान्तेभ्यः हेतुभ्यः इत्यर्थः ॥ ११ ॥

भाष्यम्:— प्रसिद्धास्तित्वस्य आत्मनः किं स्वरूपं ? इति जिज्ञासायां सूत्रेण उत्तरमाह । सच्चिदानन्दस्वरूपो हि अयमात्मा । सत्त्वात् त्रिकालाबाधितत्वं एकरूपत्वं अनात्मत्वेन गृहीतात् देहादेः भिन्नत्वं, चित्वात् स्वपरप्रकाशकत्वं अनन्यप्रकाश्यत्वं, आनन्दस्वरूपत्वाच्च नित्यनिरतिशयनिरुपाधिकसुखवत्त्वं दुःखासंभिन्नत्वं च स्वयमेवायाति ।

ननु सच्चिदानन्दस्वरूपी हि आत्मा इति प्रमाणैः प्रतिपाद्यं न वचसैव केवलेन । अप्रामाणिकी हि चर्चा दुनोति चेतांसि शिष्टानाम् । अतःअर्पणीयं प्रमाणजातम् । अर्पयामः । सच्चित्सुखस्वरूपो हि देवः इति हि श्रुतयः तदनुसारिण्यः स्मृतयश्च ऐकमत्येन उद्घोषयन्ति । युक्तयः अपि इममेवार्थं साधयन्ति । अनुभवश्च तस्य तथात्वं ब्रुवन् शंकामात्रं निरवकाशं करोति । तथा हि श्रुतिवचनानि आत्मनः त्रैकालिकसत्त्वप्रतिपादकानि—" सदेव सोम्य ! इदमग्रे आसीत् " " आत्मा वा इदमेक एव अग्रे आसीत् " " अेकमेवाद्वितीयम् " " तदेतद्ब्रह्म अपूर्वं अनपरं अनन्तरं अबाह्यम् " " तत्त्वमसि " " अयमात्मा ब्रह्म " " अजो नित्यः शाश्वतोऽयं पुराणः " " स एवाद्य सउश्वः " " अस्तीत्येवोपलब्धव्यः " " अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा " इत्यादीनि सहस्रशः विद्यन्ते । स्मृतिरपि श्रुतिमन्वाह— " न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः परम् ॥ "

" तथा देहान्तर प्राप्तिः " " नाभावो विद्यते सतः " " विनाशमव्यय स्यास्य न कश्चित् कर्तुमर्हति " " न जायते म्रियते वा कदाचित् " " नित्यः सर्वगतः स्थाणुः अचलोऽयं सनातनः " इत्यादीनि ।

एवमेव आत्मनः चित्त्वप्रतिपादकानि श्रुतिस्मृतिवाक्यानि अपि दृश्यन्ते सहस्रशः । तथा हि– " तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति " " ज्ञः कालकालो गुणी सर्वविद् यः " " प्राणोह्येषः सर्वभूतैर्विभाति " यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि " " अमृतं यद्विभाति " इत्यादीनि । विस्तरभयात् अधिकावतरणात् विरम्यते । " ईक्षतेर्नाशब्दम् " " गौणश्चेन्नात्मशब्दात् " इत्यादिषु स्मृति–वाक्येषु अपि आत्मनः चेतनत्वं एव सुसाधितं दृष्टव्यम् ।

आनन्दमयत्वं अपि आत्मनः श्रुतिस्मृतिसिद्धमेव विज्ञेयम् । तथा हि "आनन्दो ब्रह्म" "रसो वै सः" "आनन्दरूपं अमृतं यद् विभाति" इत्याद्यनेकानि श्रुतिवाक्यानि, आनन्दमयोऽभ्यासात् इत्यादीनि च वेदान्तसूत्रवाक्यजालानि स्मृत्यात्मकानि अत्र अनुसंधेयानि । तस्मात् सिद्धं आत्मनः सच्चिदानन्दात्मकत्वं श्रुतिभ्यः स्मृतिभ्यः च ।

ननु श्रुतिस्मृतिसिद्धं अपि आत्मनः तत्त्वं न बुद्धिमारोहति यावत् युक्त्या न प्रतिपादितं भवति । श्रुतिस्मृतिसंमतं अपि निर्णयं आक्षिप्य-माणा बुद्धिः युक्त्यैव समाधानं भजते । समाहिता च बुद्धिः श्रुतिस्मृति–कृतनिर्णयं स्वीकुर्वाणा आत्मतत्वज्ञाने साचिव्यं कुरुते । अतः युक्त्या अपि आत्मनः सच्चिदानन्दत्वं प्रतिपाद्यं भवति तद्धि मंडनं भगवत्याः विमलायाः बुद्धेः शिवानुरतायाः उमायाः किसलयमिव स्वरूपपेशलायाः । सत्यं । युक्त्याऽपि आत्मनः तत्त्वं प्रतिपादयिष्यामः ।

इदं तावत् युक्तिसोपानस्य आदिमं चरणम् । क्षणेऽस्मिन् वयं स्मः न वा स्मः ? स्मः इत्येव न्याय्यम् अनुभवस्य अनपलापात् । अयमहमस्मि इति सर्वेषां अनुभवः ।

भवन्तो वयं सशरीरा वा अशरीरा वा ? आद्यो विकल्पः एव योग्यः शरीरस्य प्रत्यक्षत्वात् ।

सशरीराणामस्माकमिदं शरीरं सबीजं वा निर्बीजं वा ? सबीजमेव कार्यत्वात् शरीरस्य । न हि कारणविधुरं कार्यं संभवति ।

किं तद् बीजं यस्मात् शरीरं अंकुरायते पल्लवायते फलायते च ? पंचभूतकालकर्मादिबहुबीजानां उपस्थितौ अपि कर्मणः एव मुख्यं शरीर-

जनकत्वं स्वीकार्यं भवति। कर्मसत्त्वे हि तेषां साचिव्यदर्शनात् तदसत्त्वे च उपस्थितानामपि तेषां कार्यादर्शनात्। अतः कर्मैव शरीरबीजम्।

शरीरबीजं हि कर्म स्वकीयं वा परकीयं वा युज्यते ? स्वकीयं एव इति वक्तव्यं भवति। अन्यदीयकर्मणा अन्यस्य फललाभे जनककर्मणा अस्माकं अपि विदेहमुक्तिःस्यात्। न च भवति। अतः स्वकीयकर्मणैव स्वकीयं शरीरं इति अकामेनाप्यभ्युपगन्तव्यम्।

अस्य शरीरस्य विद्यमानस्य आरंभकं कर्म कस्मिन् जन्मनि कृतं स्यात् ? अस्मिन् वा पूर्वस्मिन् वा ? पूर्वस्मिन् इति एव वक्तुं योग्यम्। अस्मिन् जन्मनि कृतात् कर्मणः एतत् शरीरं न संभवति पूर्वभावित्वाभावात्। कारणं हि कार्यात् पूर्वभावि भवितुं अर्हति। कारणं हि कर्म। कार्यं च शरीरम्। न खलु कार्यादनुजायमानं कारणं तस्य कार्यस्य कारणं भवितुमर्हति। तस्मात् अस्य शरीरस्य आरंभकं कर्म न अनेनैव शरीरेण विहितम्। अपि तु पूर्वस्मिन्नेव जन्मनि।

एवं पूर्वजन्मनः अनिच्छयाऽपि स्वीकारः अनिवार्यः। तस्मिन् सिद्धे एतत् भवति। पूर्वजन्मनि कर्मणां करणकाले वयं आस्म न वा आस्म ? आस्म एव इति मन्तव्यम्। अभावे कर्म एव अशक्यम्। कर्म च अस्ति। अतः अस्माकं भावोऽपि सिध्यत्येव।

अस्माकं भावे सिद्धे तदानीं शरीरस्य अस्तित्वं आसीत् न वा आसीत् ? आसीदेव तदभावे कर्मकरणं अशक्यम्।

तत् शरीरस्य सद्भावो पूर्वजन्मकर्मणा तस्य च तत्पूर्वजन्मकृतकर्मणा इत्येवं शरीरकर्मणोः प्रवाहरूपेण अनादित्वं सिद्धं भवति। ततश्च आत्मनः स्वरूपेणैव भूतवर्तमानयोः अस्तित्वं अबाधितम्।

भाविनि अपि काले समानश्चर्चः। क्रियमाणं हि कर्म न क्षीयते ऋते भोगात्। ऋते भोक्तारं भोगस्य आनर्थक्यं च प्रसज्यते। विश्वव्यवस्था च एवं अनिर्वचनीया सेत्स्यति। अतः भाविनि अपि अनयोः शरीरकर्मणोः अन्तः नास्ति। तस्मात् कालत्रयेऽपि आत्मनः सत्त्वं एकरूपत्वं च अबाधितं तिष्ठति।

ननु भविष्यत्कालेऽपि चेत् शरीरकर्मणोः प्रवाहस्य अनन्तत्वं प्रसज्येत आत्मनः नित्यबन्धः। स च अनिष्टः। नायं दोषः। शरीरकर्मणोः अनादित्वेऽपि अन्तवत्त्वस्य संभवात्। न हि अस्माभिः अनन्तत्वं अविशिष्टं स्वीक्रियते। किं तर्हि ? विशिष्टम्। अयं हि विशेषः।

तत्त्वज्ञानेन क्षीणतां याति कर्म। क्षीणे च तस्मिन् तत्फलभूतस्य शरीरस्यापि अनुत्पादः। यावन्न भवति तत्त्वज्ञानं तावत् तिष्ठत्येव शरीरकर्मणोः अयं प्रवाहः अव्याहतः। तत्त्वज्ञाने सति दुःखहेतुभूतयोः सबीजकर्मशरीरयोः अभावात् दुःखाभावः। ततश्च स्वरूपानन्दः अद्ययावत् तिरोभूतः आविर्भवति तिमिरच्छन्नः इव सूर्यप्रकाशः घनापाये। तस्मात् सिद्धं आत्मनः त्रिकालाबाधितं सत्त्वं इत्यर्थः॥

एवं आत्मतत्त्वं सद् इति युक्त्या अवगम्यते। तत्सत् आत्मतत्त्वं एव चित् इति अपि प्राप्यते। स्वपरप्रकाशकं सत् यदनन्यप्रकाश्यं तत् चित् इति हि चिदः लक्षणम्। तच्च आत्मनि दृश्यते। अतः आत्मतत्त्वं चिद्रुपमिति सिद्ध्यति। कथमिति चेत् शृणु। सूचिभेद्ये निबिडान्धकारे अपि आत्मतत्त्वं अन्य-अनपेक्षं सत् स्वयमेव प्रकाशते। अंधकारं अपि प्रकाशयति। स्वस्मिन्नारोपितं शरीरबाल्यादिकं तत् व्यापारान् च परानपेक्षं सत् स्वयमेव सम्यक् जानाति। अतः आत्मा चित्स्वरूपः इति गम्यते।

ननु अल्पज्ञो जीवात्मा, सर्वस्य सर्वदा सर्वपदार्थज्ञानाभावात्। किं तेन?। ब्रवीमि। चेदल्पज्ञोऽयं तस्य सर्वपदार्थावभासकत्वस्य हानिः। प्रसज्येत ततश्च तस्य चित्त्वसंकोचो भवति। नायं दोषः। यतः सर्वोऽपि प्रपंचः अस्माभिरेव विभज्य ज्ञायते। न च प्रपंचोऽस्मान् जानाति। बाह्याभ्यन्तरभेदभिन्नः निखिलोऽपि प्रपंचः "इमानि भूतानि, इदं ब्रह्माण्डं इयं गौः, अयमश्वः, इदं कारणशरीरं, इदं लिंगशरीरम्, इदं दुःखं, इदं-सुखं, अयं बंधः अयं मोक्षः" इति प्रमाणपूर्वकं विभज्य अस्माभिरेव ज्ञायते। न तु द्विविधोऽपि प्रपंचः अस्मान् वेत्ति। अतः संसारावस्थायां युगपत् सर्वावभासकत्व-अभावेऽपि क्रमशः सर्वस्यैव आन्तरबाह्यपदार्थ-स्य अवभासनं आत्मना क्रियते एव। अतः चिल्लक्षणस्य सद्भावात् अस्ति आत्मा चिद्रूपः।

एवं सच्चित्स्वरूपं आत्मनः तत्त्वं आनन्दरूपमस्ति इत्यपि विज्ञेयम्। कुतः। आनन्दलक्षणस्य आत्मनि सद्भावात्। किं तावत् आनन्दलक्षणम्। आनन्दो हि सुखं नित्यं निरुपाधिकं निरतिशयं च। एतद्विशेषणत्रिक समन्वितं सुखं एव आत्मानन्दस्य लक्षणम्।

ननु तादृशं सुखं कुत्रापि न दृश्यते। दृश्यते! कुत्र?। सुषुप्तौ। सुषुप्त्यानन्दे हि इदं सुखलक्षणं समन्वेति। ननु सुषुप्तौ तु दुःखनिवृत्ति रेव अनुभूयते। न। सुप्तोत्थितस्य अनुभवानपलापात्। सुप्तोत्थितो

हि एतावत् सुखमहं अस्वाप्सम् इति स्मरति। स्मरणाच्च अनुभवानुमानम्। अतः सुषुप्तौ सर्वेषां अयं आनन्दानुभवः निरपवादः अस्ति ततश्च सिद्ध्यति आत्मनः आनन्दरूपत्वम्।

ननु सुषुप्तिः तु अवस्थामात्रम्। सुषुप्त्यानन्देन कथं आत्मानन्दं अनुमिनोषि ? सत्यम् सुषुप्तिस्तु अवस्थामात्रम्। परं च तत्र आत्मानन्दस्य प्रतिबिम्बंः अनुभूयते। बिंबे वर्तमानं हि प्रतिबिंबे आयाति। अतः बिंबभूतः आत्मैव अभावप्रत्ययालंबनां निद्रावृत्तिं जानानः आनन्दरूपः इति जानीहि।

ननु एवं चेत् निद्रानन्दे अस्य सुखलक्षणस्य समन्वयो प्रदर्शनीयः। प्रदर्श्यते। नास्ति तावत् निद्रावस्थायां कोऽपि उपाधिः। न सम्राड् अपि तत्र किंचिदपि नेतुं शक्नोति। उपाध्यभावेऽपि सुखमस्ति। अतः तत्र निरुपाधिकः आनन्दः अस्ति। नापि निद्रासुखे तारतम्यं दृश्यते। एकस्य अधिकं अन्यस्य च अल्पं इति न ज्ञायते। इतरानन्दानां तु तारतम्यं श्रूयते मनुष्यानन्दमारभ्य ब्रह्मणः आनन्दपर्यन्ताः शतोत्तराः एकादशानन्दाः तावत् श्रुतौ जेगीयन्ते। अतः हिरण्यगर्भानन्दसीम्नां आनन्दानां तारतम्यं निश्चीयते। आत्मानन्दस्तु सर्वोत्तरः निरवधिकः अतः एव निरतिशयः। स एव सुषुप्तौ दृश्यमाणः तस्य निरतिशयत्वं साधयति। तत्सुखमेव पुनः नित्यं अजन्यत्वात्। यद् हि जन्यते तत् विनश्यति। विनश्यत् च अनित्यत्वं आवहति। सुषुप्तिसुखं तु निष्कारणं सत् न जन्यते। अजायमानं च नित्यम्। ततश्च अविनाशि। न केवलं सुषुप्तौ एव तत् सुखमस्ति, जाग्रत्स्वप्नयोरपि तत् तथाविधमेवास्ति। वृत्तिविशेषैः आवृतं सत् न अनुभूयते। तस्मात् सच्चिदानन्दरूपः अयं आत्मा इति युक्त्याऽपि सिद्धं भवति। सच्चिदानन्दस्वरूपस्य आत्मनः अखण्डार्थत्वं अपि त्रिविधपरिच्छेदशून्यत्वेन विज्ञेयम् इति अलं पल्लवितेन।

एवंविधस्य आत्मनः अनुभवस्तु साधनाधीनः। यः साधनां शास्त्रोपदिष्टां गुरुमुखीं च करोति तस्य आत्मकृपया भवत्येवायं अनुभवः। अनतिवदनीयं हि साधनामाहात्म्यम्। अनुभवं समीहमानो हि साधनातत्परो भवेदित्यर्थः॥ ११॥

ननु एवं सच्चिदानन्दात्मकस्य आत्मनः प्रसाधने किमायातं ? प्रदर्शयन्नाह—

## आत्मा हि स्वरूपं सर्वेषाम् ॥ १२ ॥

सूत्रार्थः—हि= एवार्थो हिकारः अवधारणार्थः। सर्वेषां= आब्रह्मस्तम्बपर्यन्तानां समेषां भूतानां स्वरूपं= नैजं रूपं आत्मा एव= उक्तलक्षणः आत्मा एव न त्वनात्मा इत्यर्थः।

भाष्यम्:—आत्मानात्मनोः संकरस्वरूपे हि निखिलभूतवर्गे दृश्यमाणे सति, किं नैजं रूपं आत्मा वा अनात्मा वा इति च संदेहे जायमाने आत्मैव सच्चिदानन्दात्मकः स्वस्य रूपं न त्वनात्मा अनृतजडदुःखरूपः इति सिद्धं भवति। स्वरूपं हि अनारोपितं अबाधितं असंदिग्धं भवितुमर्हति। तादृक् च रूपं नः सर्वेषां आत्मैव। अतः सच्चिदानन्दरूपाः सर्वे वयं अनात्मभावेनाक्रम्यमाणाः अहोरात्रं वयं सुखिनः वयं दुःखिनः वयं मूढा इति आक्रोशन्तः तिष्ठामः। तमिमं प्रलापं त्रिगुणसन्निपातलक्षणं हित्वा स्वरूपज्ञानेन स्वस्थाः भवेम द्वैतजन्यकोलाहलेऽपि अद्वैतनिष्ठां शांति निरंतरां अवगाहयेम इत्यायातम् इति ॥ ११ ॥

ननु अन्यदेव प्रकृतम् अन्यदेव च चर्चितम्! शोकसंतप्तस्य भगवत्प्रपन्नस्य च अर्जुनस्य सच्चिदानन्दात्मकस्य आत्मनः प्रतिपादनेन को लाभः? एवं प्राप्ते ब्रवीति—

## सर्वथा सर्वो हि अशोच्यः आत्मत्वादेव ॥ १३ ॥

सूत्रार्थ :—सर्वथा = सर्वेण प्रकारेण सर्वो हि = प्राणभृत् वर्गमात्रः एव अशोच्यः = शोचितुं अयोग्यः। कुतः आत्मत्वादेव = स्वरूपत्वादेव इति अर्थः ॥ १३ ॥

भाष्यम् :—अनुचितोऽयं आक्षेपः यद् अन्यदेव प्रकृतं अन्यदेव च चर्चितम् इति। कथं शोकमूलं अजानानः तं उत्खातयितुं प्रवृत्तोऽपि उत्खनिष्यति? शोकमूलं हि आत्मनः अज्ञानम्। लब्धात्मज्ञानस्तु नैव शोचति। आत्मानं जानानस्तावत् निःशंकं वेत्ति यद् अशोच्यः एव अयं संसारः। किं तावत् शोकस्वरूपम्? शोको हि तापः प्रियवियोगजन्मा, तत्कल्पनजन्मा वा। प्रियतमो हि आनन्दात्मकः अस्माकं आत्मैव। उच्छिष्टैव अन्यत्र दृश्यमाना प्रियत्वकल्पना। तस्य च आत्मनः प्रियतमरूपस्य स्वात्मना नैव वियोगो भवति। न खलु आत्मनः आत्मना वियोगो भवति। वियोगे हि स्वरूपमेव न भवति। अपि च सति हि संयोगे वियोगः कल्प्यते। द्विनिष्ठश्च संयोगो भवति। एकश्च आत्मा।

स तु हानोपादानरहितः । अतः आत्मना आत्मनः संयोगवियोगौ न स्तः। अतः प्रियवियोगमूलः शोकः मूलरहितः एव एवं सिद्ध्यति । नात्रार्जुनस्य अपवादः । अर्जुनस्य शोकोऽपि भीष्मादीनां वियोगकल्पनयैव संजातः अस्ति । अतः निरर्थकं विलपन् विषीदन् च अर्जुनः अनुकंप्यो भवति भगवद्दशानाम् । एवं आत्मदृष्ट्या शोकः निरवलंबः ॥ १३ ॥

एवं आत्मदृष्ट्या शोकं निराकृत्य देहदृष्ट्याऽपि तस्य अनुचितत्वं प्रस्थापयन् आह—

## एवं एव देहादयोऽपि ॥ १४ ॥

सूत्रार्थः-एवं एव=यथा आत्मा तथैव देहादयोऽपि=देहादिप्रकृत्यन्ताः सर्वेऽपि पदार्थाः अशोच्याः सन्ति इत्यर्थः ।

भाष्यम्—यथा आत्मत्वादेव आत्मा अशोच्यः। एवमेव देहादिनिखिलोऽपि अनात्माऽपि अशोच्यः एव सिद्ध्यति । यस्तु आत्मा न भवति तस्य अनात्मनः वियोगस्तु भवत्येव न ईश्वरोऽपि तं रक्षितुं पारयति । न हि स्वभावं अतिक्रम्य भावो वर्तितुं अर्हति । नाशः-अदर्शनं-लोपः-वियोगः तु स्वभावः देहादीनां निखिलानां पदार्थानां आत्मवर्जितानाम् । प्रियत्वं च तेषां प्रतीयमानं आत्मनैव वितीर्णम् तेभ्यः चन्द्रमसे इव सौम्यत्वं सूर्येण । अतः मोहमूलकं तेषां प्रियतमत्वं चेत् शोकजनकं अंगीक्रियते निरर्थं स्यात् तत्त्वज्ञानम् मोहोच्छेदकरम् । अतः अनात्मत्वादेव अनात्मा अशोच्यः । आत्मनां अनात्मनः संयोगेन उत्तिष्ठति शोकसागरः संसारः । तस्य चेद् अनात्मनः विप्रयोगः स्यात् स्वाभाविकः, न नश्चिच्छन्नं किमपि प्रत्युत मंगलतमोऽसौ अवसरः मन्तव्यः । अतः आत्मदृष्ट्या वा देहदृष्ट्या वा यया कयाऽपि अपरया वा दृष्ट्या असमंजसः एव शोकः मोहप्रभवः इत्यर्थः ॥ १४ ॥

एवं आत्मा अविनश्वरस्वभावाद् वियोगाभावात् आनन्दस्वरूपत्वाच्च अशोच्यः । अनात्मा च विनश्वरस्वभावात् सदातनसंयोगविधुरत्वात् दुःखात्मकत्वाच्च अशोच्यः । मिथुनीभावः च तयोः अविवेकजन्मा सर्वानर्थस्यमूलम् । "अशोच्यानन्वशोचस्त्वं" इत्यारभ्य "तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि," इत्यन्तः संदर्भः इममेवार्थं आह ।

एवं आधारभूतं मूलतत्त्वं अभिधाय ततः विपच्यमानं दर्शनं स्फोटयन्नाह—

## आत्मानात्मनोः अविप्लवविवेकात् वर्तनसिद्धिः ॥ १५ ॥

सूत्रार्थः—आत्मा० = स्वरूपपररूपयोः अविप्लवविवेकात्= विपर्ययसंशयाविद्धात् विवेकज्ञानात् वर्तनसिद्धिः = यावदायुः जीवने वर्तनस्य सिद्धिः भवितुमर्हति इत्यर्थः ॥ १५ ॥

तत्त्वज्ञानं हि वर्तनस्य मूलम् । तच्च आत्माऽनात्मनोः सुदृढविवेकनिर्भरम् । अविप्लवं हि विवेकज्ञानं सम्यक्ज्ञानापरपर्यायं विमलयति वर्तनम् । वर्तनव्याप्तं च जीवनम् । अतः वर्तनव्याप्ते हि जीवने तत्त्वज्ञानस्य माहात्म्यं अनतिवदनीयम् । अविप्लवत्वं हि विपर्याससंशयराहित्यम् । व्युत्थानेऽपि समाधिं अर्पयत् अविप्लवं विवेकज्ञानं अनिवार्यं सम्यक् वर्तनाय इत्यर्थः ॥ १५ ॥

एवं तत्वज्ञानाश्रयं वर्तनं उक्त्वा तस्य फलं विवृणुते—

## ततो दृष्टिद्वैविध्यम् ॥ १६ ॥

सूत्रार्थः—ततः = तत्त्वज्ञानात् दृष्टिद्वैविध्यम्=दृष्टेः=जीवनवर्तनस्य दर्शनस्य द्विविधत्वं फलति इत्यर्थः ।

भाष्यम्—अविप्लुततत्त्वज्ञानमूला हि जीवने द्विविधा दृष्टिः गीतागातुः उद्दिष्टा । तत्र प्रथमा सांख्यबुद्धिः द्वितीया च योगबुद्धिः । सांख्यबुद्धिः योगबुद्धिः इत्यत्र बुद्धिशब्दस्य दृष्टिरिति अर्थः ग्राह्यः । सांख्यपदस्य योगपदस्य च क्रमशः आत्मज्ञानं आत्मज्ञानोत्तरं कर्मणि तस्य विनियोगः इत्यर्थः वेदितव्यः "एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु" इति भगवदुक्तेः ।

अयमर्थः । तत्वज्ञानं हि दृष्टिद्वैविध्यं पुरस्करोति । आत्मज्ञानोत्तरं कर्म कर्तव्यं न वा कर्तव्यं इत्यत्र विप्रतिपत्तिः । आत्मज्ञानोत्तरं कर्म न कर्तव्यं इति एके । कर्तव्यमिति अपरे । न कर्तव्यं इति आतिष्ठमानाः सांख्याः । कर्तव्यमिति अवधारयन्तः योगिनः । उभयत्र आत्मज्ञानं हि साधारणम् । आत्मज्ञानोत्तरं कर्तव्याकर्तव्ययोः प्रश्नः उपतिष्ठति । तत्र सांख्यानां इदं रहस्यम् । दृष्टादृष्टजन्मवेदनीयः क्लेशमूलः कर्माशयः आत्मदर्शन माहात्म्यात् तावत् संदह्यते । संदग्धश्च जात्यायुर्भोगाख्यं कर्मविपाकं न आवहति । अतः वन्ध्यवीर्यकर्माशयवतः अस्य महात्मनः अयं चरमो भवः । अतः आत्मज्ञानोत्तरं प्रवृत्तेः प्रयोजनाभावात् असौ संन्यस्तकर्मा-

भवन् प्रवृत्तः उपरमते। यावदायुः सुखं तिष्ठति गिरिगुहायां वा मठे वा यकुत्रापि वा, एकान्ते प्रदेशे, अहिंसन् सर्वभूतानि, विस्मरन् संसारं, संसारोदधौ उन्मज्जतः निमज्जतः च प्राणिनः उपेक्षमाणः, संत्रस्तश्च द्वैत कोलाहलात् ग्राम्यात्, अद्वैतं निरन्तरं आश्रीयमाणः स्वीये समाधिसुखे निरतः देहत्यागकालं प्रतीक्षमाणः जीवनयात्रां निर्वहति। इयं सांख्य-दृष्टिः। योगदृष्टिस्तु विशिष्टा। योगिनः अपि अयं देहः अन्तिमः एव। सोऽपि सन्देहमुक्तः एव। तस्यापि प्रयोजनस्याभावः एव। तथापि असौ प्रवृत्तित्यागं न योग्यं मन्यते। कथं? अशक्यत्वात्। यावद् देहभाविनी हि प्रवृत्तिः। संपूर्णस्य कर्मत्यागस्य कपोलकल्पितत्वात् अर्धजरतीय-न्यायस्य च अयोग्यत्वात्। हठस्य निरवकाशत्वात् प्रकृत्या संवादस्य आवश्यकत्वात् च नासौ कर्मत्यागं आद्रियते। अपि तु कर्मयोगम्। कर्मकरणादपि तस्य न किमपि छिन्नं भवति। अननुसंधानात् फलस्य। फलाननुसंधानं हि तस्य श्वासोच्छ्वासवत् स्वाभाविकम् आत्मज्ञान-माहात्म्यात्। कुर्वन्नपि असौ न बध्यते। बन्धकारणस्यैव अभावात्। अतः असौ कुर्वन् सर्वाणि उचितानि, नयन् च लोकं आत्मदृष्टान्तेन, उपकुर्वाणश्च समस्तं आत्मभूतं जगत् सुखं जीवति यावदायुः उपभुञ्जा-नोऽपि अनुपभुञ्जानः समस्तान् भोगान्, कुर्वाणोऽपि अकुर्वाणः सर्वाणि कर्माणि, आकण्ठमग्नोऽपि अस्पृष्टः पद्मपत्रमिवाम्भसा संसारेण व्यवहारावतीर्णं आत्मज्ञानं प्रदर्शयन् बहुशोभमानः वर्वर्ति। इयं योग-दृष्टिः समुज्ज्वलतरा इत्यर्थः। "नेहाभिक्रमनाशोऽस्ति" इत्यारभ्य "तदा योगमवाप्स्यसि" इत्यन्ता भगवदुक्तिः इमां योगदृष्टिं विवृणोति॥

इदमत्र बोध्यम्। आत्मज्ञानोत्तरं हि इमौ द्वौ पन्थानौ प्रवर्तमानौ परस्परविभक्तौ इव, विरुद्धौ इव, संस्कृतस्य षट्त्रिंशत्संख्यांकवत् विमुखौ इव, विद्वत्-मल्लानां गजग्राहप्रेरकाविव दृश्येते। स्वाभाविकतरा हि अनयोः योगदृष्टिः इति भगवतः पक्षपातः अपि युज्यतेतराम्। विक्रीते हस्तिनि च अकिंचित्करः अंकुशे विवादः। लब्धात्मज्ञानप्रसादस्तु स्वयमेव भगवतो दृष्टिं स्वीकरिष्यतीत्यर्थः।

स्यादेतत्। योगस्य प्रस्तावे असमंजसं तावत् स्थितप्रज्ञलक्षण-ज्ञानम्। प्रकृतहानाप्रकृतोपादानप्रसंगात्। अपि च ज्ञानमाहात्म्यवर्णनं अधरयति योगदृष्टिम्। स्थितप्रज्ञलक्षणनिदर्शनं हि ज्ञानस्यैव स्तुतिः। अतः तद्वर्णनव्यग्रो भगवान् आत्मज्ञानप्रशंसनपरः एव मन्तव्यः न योगपक्षपातपरः। एवं प्राप्ते निराकरोति—

लक्षणव्याजेन ज्ञानप्रशंसनं इति चेन्न व्यवहारावतीर्णज्ञानस्यैव योगत्वात् ॥ १७ ॥

सूत्रार्थः—लक्षणव्याजेन= स्थितप्रज्ञस्य लक्षणनिमित्तेन ज्ञान प्रशंसनं = भगवता ज्ञानयोगस्य प्रस्तवनं क्रियते इति चेत् = एवं मन्यसे तर्हि न = न एतत् मन्तव्यं समंजसम् । कुतः ? व्यवहार० = व्यवहारे दैनंदिने जीवनव्यापारे प्राप्तावतारस्य ज्ञानस्यैव = आत्मज्ञानस्यैव योगत्वात् = योग—नाम्ना व्यवहारात् इत्यर्थः ।

भाष्यम्ः-न खलु भवदुक्तः प्रसंगोऽत्र प्रसज्यते । योगे अदत्तपरीक्षस्य ज्ञानस्य ज्ञानत्वाभावात् । ज्ञानं हि कर्मयोगे आरूढं सत् परीक्ष्यते । कर्मयोगो हि निकषः । तत्र हि ज्ञानसुवर्णस्य विशुद्धेः श्यामिकायाः वा परीक्षा जायते । ज्ञानी सत् कथं व्यवहारकाले कर्मव्याप्ते व्यवहरिष्यति विज्ञवत् वा अज्ञवत् वा इति हि भगवतः अत्र चिन्ता । समेषां लक्षणानां समालोचनात् अयमेवार्थः स्फुरति । ज्ञानिना वा अज्ञानिना वा अस्मिन्नेव जगति वस्तव्यमस्ति । संपर्कश्च पदार्थानां जडचेतनानां यावत्शरीरं अनिवार्यः । संपर्काच्च आघातप्रत्याघातौ अपि अवश्यंभाविनौ । आघातो हि अनुभवमात्रः । आघाते सति प्रत्याघातस्य अवश्यंभावित्वात् कथं प्रत्याघातः कर्तव्यः इति निर्णये एव ज्ञानस्य ज्ञानत्वम् । ज्ञानवान् हि ज्ञानप्रसादेन तथा वर्तते यथा रागद्वेषादीनां समीकरणं स्यात् । ज्ञानप्रसूता वर्तनचारुता हि योगः । वर्तनं तु अवशम् भवत्येव ज्ञानिनः अज्ञानिनः वा सर्वस्य । कुर्याम् न वा कुर्यां इत्यत्र न स्वाधीनो लोकः । करिष्यत्येव प्रकृतिपराधीनः स्वेच्छया वा बलाद्वा । कथं करणीयं इति अत्र हि विशेषः विज्ञाविज्ञयोः । अज्ञः कामहतः सन् करिष्यति । विज्ञश्च अकामहतः सन् । करणरीत्यां हि स्वातन्त्र्यम् न कर्मणि । योऽयं विशेषः स एव कर्मयोगः । अतः अत्र स्थितप्रज्ञलक्षणावसरे भगवता कर्मभूमौ आरूढस्य दृढतमस्य अविप्लुतस्य ज्ञानस्यैव कर्मयोगाख्यस्य विशिष्टस्य प्रशंसनं सिद्धानां लक्षणस्वरूपं साधकानां च साधनस्वरूपं विधीयते । न केवलं ज्ञानं कर्मयोगमनारूढं, वर्तनवेलायां विद्रुवर्चः, गाढान्धकारे मोहमये विगतप्रभं, स्वास्थ्यसमये बहुजल्पकं, विपरीते च पलायमानं, वाङ्विलासरूपं शुकपारायणतुल्यम् इत्यर्थः । सर्वाणि च स्थितप्रज्ञलक्षणानि अत्रैवार्थे कृतार्थीभवन्ति । विस्तरभयात् च न लक्षणचर्चा क्रियते इत्यर्थः ॥ १७॥

उपसंहारभूमिकां विरचयन् अध्यायार्थस्य निष्कर्षं निवेदयन् आह—

अतः ज्ञानमूलकः भक्तिप्रधानः निष्कामकर्मयोगः
गीता-हार्दम् ॥ १८ ॥

सूत्रार्थः—अतः = अस्मात् कारणात् ज्ञानमूलकः = आत्मज्ञानप्रभूतः भक्तिप्रधानः = प्रीतिप्रधानः निष्कामकर्मयोगः = फलेच्छानिरपेक्षः कर्मणि समाधानमयो यावज्जीवः व्यापारः गीताहार्दम् = गीतोपनिदः हृदयं—मर्म इत्यर्थः ॥ १८ ॥

भाष्यम्:—यतः कर्मभूमौ आरूढं ज्ञानमेव ज्ञानत्वेन गृह्यते अतः आत्मज्ञानमूलकः भक्तिप्रधानः कर्मयोगः एव समस्तायाः गीतोपनिषदः हृदयम्। मूलं हि आत्मनः तात्त्विकं ज्ञानम्। ततः च सर्वभूतात्मभूतात्मस्वरूपस्य प्रेम्णः भक्तिनाम्नः प्रसूतिः। न च निष्क्रियं प्रेम। सक्रियं भवदेव प्रेम स्वरूपं लभते। तस्मात् प्रेम्णः प्रेमानुरूपं निष्कामं कर्म भवत्येव। अतः आत्मज्ञानमूलकः भक्तिप्रधानः कर्मयोगः एव रहस्यं गीतायाः। इयमेव जीवनोपनिषत् इत्यर्थः ॥ १८ ॥

उपसंहरन् फलश्रुतिं उपन्यस्यति—

ततः शोकनिवृत्तिः श्रुतेश्च ॥ १९ ॥

सूत्रार्थः—ततः = तस्मात् रूढतां उपगतात् अविप्लवात् आत्मज्ञानमूलकात् भक्तिप्रधानात् कर्मयोगात् शोकनिवृत्तिः = निर्मूलस्य हृत्तापस्य निवर्तनं भवति, श्रुतेश्च = श्रुतिः अपि इममेवार्थं संगमयति इत्यर्थः

भाष्यम्:—शोकनिवृत्तिः फलं भगवत्याः गीतायाः तच्च निर्दिष्टात् योगात् भवति। "तरति शोकं आत्मवित्" "आनन्दरूपस्तिष्ठति" इत्यादीनि श्रुतिवाक्यानि अपि इममेवार्थं परिपोषयन्ति। अतः स्वरूपविज्ञानमूला हि शोकनिवृत्तिः इत्यर्थः ॥ १९ ॥

॥ इति सांख्ययोगः ॥

॥ अथ कर्मयोगः ॥

समाप्तो गीतार्थः वास्तवः। आत्मज्ञानपूर्वको भक्तिप्रधानो निष्काम कर्मयोगः गीतायाः हार्दं इति प्रतिपादितत्वात्। किमर्थं तर्हि उत्तरः

संदर्भः ? सत्यं। समाप्तिमितो हि गीतार्थः । न किमपि अधिकं शासनीयं वर्तते। शासनस्य परिपूर्णत्वाच्च अत्रैव परिसमापनीयोऽयं आरंभः। तथापि उत्तरग्रंथस्य आवश्यकता वर्तते । न हि सकृत्श्रवणमात्रेण सूक्ष्मतमः अर्थः सहसा बुद्धिमारोढुं पारयति। अर्थस्य सौक्ष्म्यं तस्य पुनः पुनः चर्वणं अपेक्षते। यावद् हि संशयविपर्यासगन्धोऽपि अवशिष्यते तावद्, अभ्युदयनिःश्रेयसप्रयोजनो व्यापारः न कृतकृत्यो भवति। न च कृतकृत्यताऽभावे तस्य प्रारंभः वंध्यो न भवति। तस्मात् कथितस्य सूक्ष्मतमस्य अर्थस्य पौनःपुन्येन कथनं न केवलं न विरुध्यते अपितु अतीवावश्यकं वर्तते । विपर्ययवेधो हि तत्त्वज्ञानकुसुमस्य ग्लानिकरो व्याधिः संशयपरिपुष्टः। न च अर्जुनस्य संशयः अद्ययावत् नष्टः। स च विपर्ययवेधं सूचयति । अतः द्वितीयाध्यायानन्तरं युज्यते अर्जुनस्य अनिश्चितकर्तव्यमार्गस्य प्रश्नः। "अशोच्यान् अन्वशोचः त्वं" इत्यादिना च बहुप्रशंसनपूर्वकं कर्मयोगं, मध्ये च "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" इत्यादिना पुनः ज्ञानयोगं भगवान् उपदिदेश। जिघृक्षुः अपि भगवदाशयं ग्रहीतुं न पारयति अर्जुनः। द्वयोः ज्ञानकर्मयोगयोः कतरत् ज्यायान् कतरत् उपादेय इति गाढं संशयानः अर्जुनः न किंचिदपि निश्चिनुये। निश्चयाभावे च वर्तनाभावः। अतः युज्यते अर्जुनस्य प्रश्नः इति सूचयन् तृतीयाध्यायमारभमाणः आह—

व्यामिश्रवाक्यकल्पनात् व्यामोहेन श्रेयः प्रश्नः ॥ १ ॥

सूत्रार्थः व्यामिश्र०......= व्यामिश्रं–संकीर्ण–संपृक्तं मिलितं यत् वाक्यं = पदसमूहः तस्य कल्पनात् = उत्प्रेक्षणात् व्यामोहेन = उद्भूतेन अनिश्चयेन अर्जुनस्य श्रेयःप्रश्नः = श्रेयोविषयकः कल्याणविषयक प्रश्नः = पृच्छा इत्यर्थः ।

भाष्यम्—उपर्युक्तपरस्परविरुद्धवाक्यानां श्रवणेन कुण्ठितबुद्धिः अर्जुनः भगवान् अपि न किमपि स्पष्टं निश्चायकं वा ब्रूते अपि तु संपृक्तमिव–व्यामिश्रं इव दुग्धदध्नोः उभयत्र अपि चरणं दधानः इव ब्रूते इति कल्पयामास। "व्यमिश्रेणेव वाक्येन" इति अभिधानात्। स्वीयाक्षेपोऽपि योग्यः अयोग्यः वा इति न निश्चेतुं शक्नोति अर्जुनः, इव शब्दप्रयोगात्। सदा विविक्तवचनो हि भगवान् न संकीर्णं वक्ति तथापि मे बुद्धिदोषाद् अगृहीतभगवदाशयोऽहं इत्यर्थः। कर्मणः घोरत्वाद् ज्ञानबुद्धेः उपरामस्वभावत्वेन शोभनत्वाद् स्यात् भगवतः भरः ज्ञानयोगे

एव। अतः आत्ममतं एव कदाचित् भगवान् बहुमन्यमानः स्याद् इति कृत्वा संशयकातरोऽर्जुनः श्रेयोविषयकं प्रश्नं उत्थापयति इत्यर्थः ॥ १ ॥

संशयं अपनिनीषुः आह—

### उभाभ्यामेव श्रेयोऽवाप्तिः गौणत्वात् मार्गस्य प्रधानत्वाच्च अनुष्ठानस्य ॥ २ ॥

सूत्रार्थः—उभाभ्याम् = ज्ञानयोगकर्मयोगाभ्यां उभाभ्यामेव –श्रेयोवाप्तिः = अभ्युदयपूर्वकस्य श्रेयसः आत्यंन्तिकैकान्तिकस्य कल्याणस्य अवाप्तिः प्राप्तिः भवति। कुतः द्वौ एवात्राधिकृतौ ? आह। मार्गस्य = उपायस्य गौणत्वात् = अप्रधानत्वात् च = तथा अनुष्ठानस्य = आचरणस्य प्रधानत्वात् = मुख्यत्वात् इत्यर्थः

भाष्याम्ः—ज्ञानाद् वा कर्मयोगात् मे श्रेयः भविष्यति इति इयं चिंता हि वन्ध्या यतः उभाभ्यामेव ताभ्यां श्रेयसः अवाप्तिः भवति। एकफलत्वात् तयोः। यद् ज्ञानं फलं प्रसूते कर्मयोगोऽपि तदेव प्रसौति। अतः उपायभूते ज्ञानयोगे कर्मयोगे वा न भरः। गौणो हि मार्गः। प्रधाना हि गमनक्रिया। मार्गस्य उत्तमत्वेऽपि यः न गच्छति स तिष्ठत्येव। गच्छन् हि अध्वानं च्छेदयति। ज्ञानस्य वा कर्मयोगस्य वा आचरणं हि प्रधानं न केवलं चिन्तनम्। कृतं हि फलति न केवलं संकल्पितम्। संकल्पफलयोः अन्तराले हि पुरुषार्थस्य क्षेत्रम्। तत् क्षेत्रं हि अकर्षन् फलजापं कुर्वाणोऽपि नैव लभते फलं इति हि स्थितिः। अतः द्वावेव पन्थानौ चारुतरौ स्तः ज्ञानयोगकर्मयोगाख्यौ। उभौ एव श्रेयस्करौ। उभयोः एकतरं चाश्रित्य चलन् फलं विन्दते। अतः अनुष्ठानस्य प्राधान्यं ज्ञेयं न केवलस्य उत्तमस्यापि मार्गस्य। अतः चलनतत्परो भूयाः न केवलं चर्चापरायणः इत्यर्थः।

ननु अहं अपि चलनपरायणतामेव आश्रितोऽस्मि। चेदुभौ श्रेयस्करौ ज्ञानयोगमेव आश्रयमाणः अहं कथं निवार्यते भवता। संन्यासग्रहणातुरं तदर्थं च कर्मानारंभं संन्यासं वा जुषमाणं मां किमर्थं बलात् घोरे कर्मणि नियोजयसि ? एवं मोहगोपनं कुर्वाणं आह—

न कर्मानारंभः संन्यासो वा अशक्यत्वात् प्रकृतिविरोधात्, मिथ्याचारावहत्वाच्च ॥ ३ ॥

सूत्रार्थः–कर्मानारंभः = कर्मणः अनारंभः आरंभाभावः वा = अथवा संन्यासः = तस्य त्यागः न = न संभवति अशक्यत्वात् = असंभवात् प्रकृतिविरोधात् = प्रकृतेः विरोधात् च = तथैव मिथ्याचारावहत्वात् = असत्याचरणानयनत्वात् इत्यर्थः

भाष्यम्:—संन्यासं स्वीचिकीर्षुस्त्वं न चलनपरायणतां आश्लिष्टोऽसि परंतु मोहमेव। सांख्येन वा कर्मयोगेन वा किं प्रातप्यं अस्ति। सांख्येन वा कर्मयोगेन वा नैष्कर्म्यं तावत् अभिलषितम्। नैष्कर्म्यं नाम कर्मणः सत्त्वेऽपि तत् फलवन्ध्यत्वसंपादनम्। तच्च न कर्मानारंभात् सेत्स्यति। कर्मारंभस्य स्वाभाविकत्वेन वर्जयितुं अशक्यत्वात्। प्रकृतिविरोधाच्च। यो हि कर्मानारंभस्य आग्रही तमपि बलात् प्रवर्तयति प्रकृतिः देहयात्रानिर्वाहिकेषु कर्मसु नो चेत् इतरेषु। अतः प्रकृत्याः प्रति. कूलं समाचरणं प्रकृतिक्षेत्रे नास्ति। किंच संकोचितबाह्यकरणस्तावद् अकृतार्थात्मा मनसा इन्द्रियार्थान् संस्मरन् आस्ते। त्यक्तबाह्यकर्मा अंतरेण च वर्तमानः मिथ्याचारं पिशुनयति। स च शिष्टानां अनादरणीयः। आत्मज्ञानात् पूर्वं तदूर्ध्वं च न केनापि कर्म त्यक्तुं शक्यते। अतः कर्मत्यागो हि अशक्यः। अशक्यश्च अनुपदेशयोग्यः। यत्तु शक्यं तत् फलेच्छाराहित्यम्। तत्तु आत्मवतः स्वाभाविकम्। तदेव च नैष्कर्म्यस्य बीजम्। अतः ज्ञानवतः तु कर्मकरणं एव ज्यायः। अतः पलायनपरायणस्त्वं न ज्ञानं सूचयसि अपितु ज्ञानच्छिद्रम्। एवं सिद्धिमिच्छुः अशक्यं कर्मानारंभं न वांच्छेत् नवा कपोलकल्पितं कर्मत्यागं अभिलषेत्। अपि तु पूर्वं ज्ञानलाभाय ऊर्ध्वं च लब्धस्य ज्ञानस्य दार्ढ्याय, आत्मविनोदाय च फलाभिसंधिवर्जितं कर्तव्यकरण मेव समाश्रयेत् इत्यर्थः ॥ ३ ॥

फलितं दर्शयन्नाह—

निष्कामकर्मयोगो ज्यायान् सत्याचारत्वात् ॥ ४ ॥

सूत्रार्थः—निष्काम०=निष्कामभावेन कर्मयोगः ज्यायान् = प्रशस्यतरः कुतः सत्याचारत्वात् = अवितथाचारत्वात् इत्यर्थः ॥ ४ ॥

भाष्यम्:—विदितात्मतत्त्वो हि पुरुषः आत्मतत्त्वं जानन् फलाभिसन्धिशून्यो भवति। आत्मा हि पूर्णकामः समाप्तकामः आप्तकामः भवति। कर्मणां फलैः स्वरूपे वृद्धिह्रासौ न भवतः इति हि जानाति तत्त्वविद् आत्मनः। नास्ति निष्क्रियता नाम काचिद् इत्यपि जानाति आत्मज्ञः प्रकृतितत्त्वपरिचितः, विदितात्मनाऽपि यावद्देहं प्रकृतौ एव वर्तितव्यमस्ति इत्यपि मर्यादा भवति। अतः जानन् इमां मर्यादां तां स्वप्नेऽपि अतिचरितुं नेच्छति विवेकरूढः। अतः निष्कामकर्मयोगो हि आत्मसमन्वीमानं कर्मलेपं प्रक्षालयति प्रकृतिमर्यादां च पालयति। अतः युगपत् असौ निष्कामकर्मयोगी करोति च न करोति च। अतः स्वाभाविकं तस्य नैष्कर्म्यं सत्यसमन्वितं च। आत्मनः असंगत्वात् कुर्वन् अपि न लिप्यते। फलमपि लभते। लभमानोऽपि फलं तत्र असक्तः सन् निराकुलं तिष्ठति। शान्तिं च निर्वाणपरमां विन्दते। प्रारब्धावसाने च ब्रह्मणि अविभक्तस्वरूपो भवन् मुच्यते। तस्मात् निष्कामकर्मयोगः एव ज्यायान् इत्यर्थः ॥ ४ ॥

कर्मयोगः एव ज्यायान् इत्यत्र हेत्वन्तरं आह—

## शरीरयात्राप्रसिद्धेः अपि ॥ ५ ॥

सूत्रार्थः—शरीरयात्राप्रसिद्धेः = देहयात्रायाः न्यायपूर्वकनिर्वाहहेतोः अपि कर्मयोगः एव स्तुत्यः ॥ ५ ॥

भाष्यम्:—यो हि ज्ञानी वा इतरो वा कर्माणि हठात् वा प्रमादाद् वा आलस्याद् वा मिथ्याब्रह्मज्ञानव्याजेन वा विपर्ययाद्वा वर्जयति असौ भाररूपः भगवत्याः वसुंधरायाः, पापभोजी भवति। यदन्नं स भक्षयति जलं वा पिबति वायुं वा आचामति तत्सर्वं न न्यायार्जितं अपितु न्यायरहितम्। स्वप्रस्वेदबिन्दूपार्जितं हि अन्नादिकं न्याय्यम्। तच्छून्यं च अन्याय्यम्। राष्ट्रपतिरपि मुक्तात्माऽपि शरीरश्रमवर्जितं भुञ्जानः पापभुक् भवति। बुभुक्षा चेत् सर्वव्यापिनी श्रमोऽपि शारीरः सर्वव्यापी एव भवितुमर्हति। अदन् हि श्रमं कुर्वीत इति हि निरपवादो नियमः। अतः न्याय्या मे देहयात्रा भूयादित्यपि निष्कामकर्मयोगानुष्ठानाय हेतुः अस्ति। अतः ज्ञानी स्याद् योगी वा भवेत् सर्वैः कर्म करणीयमेव कर्तव्यरूपम् ॥ ५ ॥

ननु ज्ञानिनोऽपि चेत् न मुक्तिः कर्मकरणात् प्राप्तं तर्हि ज्ञानस्य आनर्थक्यम्। ज्ञानात् क्षीयते कर्म इति च अभ्युपगमः। ज्ञानोत्तरं कर्मा-

ग्रहात् असौ कदर्थितो भवति। ज्ञानं च कर्म च इति युगपत् तमः-प्रकाशवद् न भवतः। ज्ञानसत्त्वेऽपि चेत् कर्म न तत् ज्ञानं स्यात् अपि तु ज्ञानाभासः। ज्ञानात् क्लेशनाशे सति कर्मप्रेरणायाः एव नष्ट-त्वात्। क्लेशसत्त्वे हि रागद्वेषानुविद्धो जन्तुः सुखदुःखप्राप्तिपरिहार प्रयोजनकं निर्वर्तयति कर्म। क्लेशाश्च नष्टाः ज्ञानेन। अतः छिन्ने मूले नैव पत्रं न शाखा इति न्यायेन प्राप्तः कर्माभावः ज्ञानिनः। एवं प्राप्ते परिहरति—

### यज्ञार्थमेव कर्मकरणं, अबन्धकत्वात् ॥ ६ ॥

सूत्रार्थः—यज्ञार्थमेव = यज्ञीयं एव न तु अयज्ञीयं कर्मकरणं = कर्म-निवर्तनं ज्ञेयं अबन्धकत्वात् = यज्ञीयस्य कर्मणः बन्धाजनकत्वात् इत्यर्थः।

भाष्यम्—ज्ञानिनः कर्मकरणमात्रादेव न ज्ञानस्य आनर्थक्यं, अभ्यु-पगमस्य कदर्थित्वं वा भवति। ज्ञानी एव कर्मकरणरीतिं जानाति। अतः स एव यथार्थ्येन कर्म कर्तुं वेत्ति। अयमर्थः। सत्यं ज्ञानिनः कर्मप्रेरणकारकः आशयः क्लेशरूपः दग्धः तथापि तेनापि प्रारब्धवशात् वर्तितव्यम् भवति। ज्ञानोत्तरं अपि चेत् वर्तितव्यं भवति, वर्तते असौ न पलायते। अपि तु तथा वर्तते यथा वर्तमानोऽपि न निबध्यते। यदिदं वर्तनकौशलं तदेव कर्मयोगः। असौ एव यज्ञत्वेन आश्रीयते गीतासु। अतः ज्ञानी यद् यद् कुरुते तत तत् निखिलं यज्ञार्थमेव करोति। यज्ञो नाम निःस्वार्थम् कर्म। अप्रेरितः स्वार्थेन यः करोति न जातुचिद् बन्धं आप्नोति। स्वार्थमूलो हि बन्धः। तस्मात् न ज्ञानस्य आनर्थक्यं भवति न वा करणरीत्या क्रियमाणं कर्म ज्ञानस्य दूषणं अपि तु भूषणम् ॥ ६ ॥

ननु ये तावत् यज्ञार्थं न कुर्वन्ति स्वार्थमेव वर्तन्ते तेषां का गतिः? आह—

### इतरथा पापप्रसक्तेः ॥ ७ ॥

सूत्रार्थः—इतरथा = अन्यथा-यज्ञीयभावाभावे पापप्रसक्तेः पापस्य दुःखमूलस्य दुरितस्य प्रसक्तेः प्रसंगात् यज्ञार्थमेव कर्म स्यादित्यर्थः।

यज्ञो हि सृष्टिरहस्यम्॥ यज्ञशून्यं जीवनं पापमूलम्। भवति च अत्रैषो मन्त्रवर्णः "मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वधः इत् स तस्य। नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी इति (ऋ. १०।११७।६) भगवान् अपि इममेवार्थं ब्रवीति, "अघायुः इन्द्रिया-

रामो मोघं पार्थ ! स जीवति"। "भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् इत्यादिषु वाक्येषु। मा भूत् पापभोजनं, मा भूद् अस्माकं वधः इति यज्ञीयं एव कर्म भवितुमर्हति। तस्मात् भवतु सर्वेषां कर्म सृष्टियज्ञचक्रानुकूलं इत्यर्थः ॥ ६ ॥

लोकसंग्रहार्थमपि कर्तव्यं कार्यं कर्म इति सिद्धान्तस्य पीठिकां रचयन् पूर्वपक्षं पुनः उपन्यस्यति—

## ज्ञस्य कर्माभावः स्वार्थाभावात् ॥ ८ ॥

सूत्रार्थः—ज्ञस्य = आत्मज्ञस्य कर्माभावः = कर्मणः कर्तव्यस्य अकर्तव्यस्य वा अभावः एव प्राप्तः कुतः ? स्वार्थाभावात् = स्वार्थस्य स्वीयस्य प्रयोजनस्य अभावात् = अविद्यमानत्वात् इत्यर्थः ॥

स्वार्थस्य प्रेरकस्य अभावात् तद्भिन्नस्य च कर्मप्रेरकस्य असंभवात् ज्ञस्य कर्माभावः एव प्राप्तः। यो मानवः आत्मरतिः आत्मतृप्तः आत्मन्येव च संतुष्टः तस्य न विद्यते कर्तव्यं कर्म। कृतेन कर्मणा, अकृतेन वा स्वयंसिद्धेन ज्ञानेन तस्य प्रयोजनं नास्ति। स्वमहिम्नि स्थितस्य च तस्य न केनापि प्राणिना वा अर्थेन वा प्रयोजनं अवशिष्यते। अतः बलात्कारः एव अयं अप्रामाणिकः धुरीव बलीवर्दः सर्वोऽपि कर्मणि योज्यः एव इत्यात्मकः। तस्मात् अविदितात्मतत्त्वस्य भवतु कर्माग्रहः न विदितात्मतत्त्वस्य भगवतः समानधर्मणः पुरुषधौरेयस्य इत्यर्थः ॥ ८ ॥

पूर्वपक्षं शमयन्नाह—

## तथापि स्वाभाविकः कर्मयोगः निष्क्रियत्वासंभवात् लोकसंग्रहाच्च ॥ ९ ॥

सूत्रार्थः—तथापि=यथा ब्रवीषि तथैवास्ति तथापि कर्मयोगः= निष्कामकर्मयोगाख्यः कर्मयोगः स्वाभाविकः=श्वासप्रश्वासवत् नैसर्गिकः। कुतः ? निष्क्रियत्वासंभवात्=निष्क्रियत्वस्य असंभवात् = अनुपपत्तेः, लोकसंग्रहाच्च=लोकानां स्वदृष्टान्तेन उन्मार्गगामिनां कर्ममार्गे सम्यक् ग्रहणं-प्रवर्तनं-लोकसंग्रहः तस्मादपि कर्मयोगः आश्रयणीयः इत्यर्थः

भाष्यम्—सत्यं। वयमपि स्वीकुर्मः यत् नास्ति ज्ञस्य स्वार्थे प्रवर्तनम्। तथापि तस्य नैसर्गिकः कर्मयोगः भवति एव। कोऽयं कर्माभावो नाम ? सर्वेषां कर्मणां अभावः। उत यस्य कस्यचित् एकस्य

वा कतिपयस्य वा ? तत्र न तावद् आद्यः। समेषां कर्मणां त्यागस्य अशक्यत्वात् । द्वितीये विकल्पे तु आयात्येव कर्माचरणम् । एवं निष्क्रियत्वस्य उत्प्रेक्षामात्रत्वात् न सर्वथा कर्माभावः। भवत्कल्पनारूपो हि तत्रभवान् ज्ञानी करिष्यति अनिवार्याणि कर्माणि संत्यक्ष्यति च लोकोपकारवहानि आत्मापकारानावहानि भगवत्याः वसुंधरायाः किमपि सौभाग्यवर्धनानि सत्यानि विश्वात्मनः पूजारूपाणि। सोऽयं विकसितविवेकस्य ध्रुवो वधः । तत्र-भवान् ज्ञानसंपन्नो हि एवं विचिन्तयति-प्राप्तं मया आत्मनः विश्वनिगूढस्य दर्शनम् । तद्दर्शन-माहात्म्याच्च नष्टो मे मोहः दग्धो मे स्वार्थः— प्राप्तश्चानामयः आनन्दः। न कर्मणा स्वरूपं मे कनीयः वा ज्यायः वा भवति। नास्ति मे कर्मणा भीतिः। मृता च असौ प्रबोधात्। कञ्चुकीव सरीसृपस्य अध्यासमयी मे स्रस्ता मोहसंततिः । अतः विगतावरणपटलस्य मे निष्क्रियत्वस्य कपोलकल्पनामात्रत्वात् कर्मयोगो हि भूषणम्। स्वरूपभूतस्य लोकस्य उन्नयनं मे साहजिको धर्मः। स च मया स्वार्था-भावेऽपि करणीयः एव । श्रीफलवृक्षवन्मे जीवनं भवितुमर्हति । तथा हि नारिकेलवृक्षमूले सिक्तं जलं असौ शिरसा बिभर्ति याव-ज्जीवम्। बहूपकृतं लोकेन मम । जन्मनः आरभ्य अद्ययावत् लोकेन स्वरूपभूतेन मयि गृभीतो रसः, दत्तश्च अवकाशः, सरलीकृतं च आत्मदर्शनं, अवलंबश्च अर्पितः ऊर्ध्वगमनाय तत्र स्थैर्याय च। सोऽहं लब्धज्ञानप्रसादः बहूपकारिणं लोकमिमं आत्मनः अव्यतिरिक्तं कथं विस्मरेयम् ? कथं कृतघ्नो भवेयम् ? कथं परमात्मनः इच्छा-वाहको भूत्वा इमां जगतीं तत्स्वरूपां न सेवेयम् ? अहो परमात्मैव केनचित् अगम्येन अध्वना, अनवगाह्येन माहात्म्येन, आत्मनि आत्मानं भोग्य-भोक्तृभोजयितृरूपेण संविभज्य रममाणो दृश्यते। तस्य भगवतः इमां लीलां योगिप्रवरैः अपि अलब्धतलां, मायिनामपि मोहिनीं, अघटघटना-पटीयसीं, समस्तनयशातिनीं, सर्वतन्त्रस्वतंत्रप्रतिभाणामपि मदत्रोटिनीं कथं तस्य आनुकूल्येन न वर्धयेयम् ? अतः स्वार्थाभावेऽपि लोकसंग्रहाय प्रवर्तयिष्ये यावज्जीवं इति हि तत्र-भवतः कर्मयोगिनः लब्धात्मदर्शनस्य निष्ठा। भवान् एव विवेचयतु निष्ठयोः अनयोः भेदं विविच्य च यथा-योग्यं तथा कुरुतात् इत्यर्थः ॥ ९ ॥

कर्मयोगं विशदयन् दृढयन् च उपर्युक्तं आह—

पद्मचन्दनेक्षुदंडहेमव्रतं हि कर्मयोगः ॥ १० ॥

सूत्रार्थः—वाक्यालंकारभूतो हिकारः । कर्मयोगः = निष्कामकर्मयोगः नूनं पद्म० = पद्मस्य, चन्दनस्य, इक्षुदंडस्य हेम्नः च व्रतम् = व्रतमिव व्रतम् इत्यर्थः ॥

भाष्यम्ः—पद्मादीनां निर्देशो हि निदर्शनार्थः । तथाहि कर्मयोगो हि पद्मव्रतम् । पंकात् मलिनात् चिक्कणात् जायमानं अपि, सरोवरजले आकण्ठमग्नमपि, पत्रेषु आपततः उद्बिन्दून् मौक्तिकानि कुर्वन् पुनः प्रत्यर्पयत् च पद्मं यथा स्वशिरसि पंकस्य सौन्दर्यमेव व्यनक्ति सरः च स्वश्रिया हासयति, रमयति च सहृदयमनांसि, प्रसाद्य च स्वसन्निहितं जगत् शिवचरणयोः वा कासारे वा समर्पितं भवत् सायंकाले धन्यायते। एवमेव पद्मायते कर्मयोगी इत्यर्थः ।

एवमेव कर्मयोगो हि चन्दनव्रतम् । पौनःपुन्येन घृष्टमपि चन्दनं अन्तिमनिघर्षणकालेऽपि आत्मनः परिमलं न जहाति, लेपशैत्यं च न मुञ्चति, पावनत्वं च न विसर्जयति, कस्यचित् संतप्तस्य शिरोवेदनां वा हृदयवेदनां वा स्वसमर्पणेन शामयति, विषादस्य वा भालचन्द्रस्य विषवेदनां दूरयति, प्रमृजदपि स्वाऽस्तित्वं परवेदनां पिबच्चन्दनं जीवनरहस्यं विशदयति । चन्दनायते च अयं कर्मयोगी इत्यर्थः ।

इक्षुदण्डव्रतं वा कर्मयोगः । छुरिकया च्छिन्नोऽपि, चक्रेण चूर्णितोऽपि, चक्रारैः निष्पीडितोऽपि, यन्त्रेण भग्नसमग्रहृदयपर्वाऽपि इक्षुदण्डः स्वरसदाने न अनुदारः संपद्यते । तृषितस्य रसदाने च सदाव्रती अयं पात्रापात्रविचारणामपि न करोति । रसवर्षणं तेन च अन्यस्य आकण्ठतृप्तिः एव तस्य जीवनव्रतम् । एवमेव इक्षुदण्डायते कर्मयोगी ।

तथैव हेमव्रतं हि कर्मयोगः । अग्निक्षिप्तं अपि, तीव्रदाहकरसःस्नातमपि, कर्तितं अपि, मुद्गरैः अभिहन्यमानमपि, पुनः पुनः हेमकारेण अर्चिषा असह्येन फूत्कारितमपि संतप्तं अपि दाहे दाहे, स्नाने स्नाने, कर्तने कर्तने, फूत्कारे फूत्कारे, तापे तापे, अपि विशुद्धतमं भवत् कस्याश्चित् सौभाग्यशालिन्याः सौभाग्यावतंसं भवति । प्रेमाभिज्ञानं भूत्वा विनोदयति विरहदग्धानां चेतांसि भवति च अलंकरणम् । एवमेव हेमायते अस्मिन् जगति तत्रभवान् कर्मयोगी इत्यर्थः । ध्वनिस्तु स्वयमेव ऊह्यः अत्रस्थः सहृदयहृदयैः इत्यलं पल्लवितेन ॥ १० ॥

ननु अज्ञविज्ञयोः उभयोः चेत् कर्म अनिवार्यं तर्हि ज्ञानप्राप्तेः आनर्थक्यं इति पूर्वपक्षयन् समादधातिः—

ज्ञाज्ञयोः अविशेषः इति चेत् न विशेषदर्शनात् ॥ ११ ॥

सूत्रार्थः—ज्ञाज्ञयोः = विद्वदविदुषोः अविशेषः = कर्मणः अनिवार्यत्वे अभेदः इति चेत् = एवं चेत् मन्यसे तर्हि न = एवं न मन्तव्यं कुतः विशेषदर्शनात् = भेदस्य प्रत्यक्षत्वाद् इत्यर्थः ॥ ११ ॥

भाष्यम्—ज्ञानिनः अज्ञानिनः वा सर्वस्य कर्मकरणं अनिवार्यं वर्तते । जीवनयात्रासाधनभूतं ऐश्वर्यं हि कर्ममूलम् । तच्चेत् न क्रियते अनैश्वर्यग्रस्तो भवेत् लोकः । अनैश्वर्यं च दुःखमूलम् । सुखाय च जीवनम् । अतः ज्ञानिना अज्ञानिना वा सर्वेणैव कर्म कर्तव्यम् । एवं सति ज्ञानिनः अज्ञानिनः च न भेदः, भेदाभावे च ज्ञानप्राप्तिपरिश्रमः निरर्थक एव । नहि ज्ञाज्ञयोः उभयोः कर्मकरणप्राप्तौ न अभेदः प्रसज्यते । न खलु बकहंसयोः जातुचित् तुल्यत्वं भवति । न वा पिककाकयोः वर्णसाम्येन साम्यं भवति । भेदस्तु तयोः कर्मकरणरीत्यां वर्तते । एकस्तु कार्यते, अपरस्तु करोति । कार्यमाणः परतंत्रः सन् करोति । कुर्वाणश्च स्वतंत्रः सन् करोति । अज्ञः कार्यते । सुज्ञः करोति अज्ञः आसक्तिविद्धः सन् विदधाति । विज्ञस्तु अनासक्तः सन् आचरति । असौ च महान् विशेषः । फलभेदात् । आशयो हि फलभेदको भवति । अनाविलाशयः कुर्वन्नपि न बध्यते । आविलाशयश्च अकुर्वन्नपि बध्यते । कुर्वन्नेकः जन्ममरणचक्रं स्थगयति । अपरस्तु विवर्धयति कुर्वाणस्तस्य वेगम् । तदेतत् उक्तं भगवता पार्थसारथिना—

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद् विद्वान् तथाऽसक्तः चिकीर्षुः लोकसंग्रहम् ॥
न बुद्धिभेदं जनयेत् अज्ञानां कर्मसंगिनाम्
जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ इति । फलः

भोगेऽपि तयोर्भेदः । प्रारब्धं भुञ्जानो हि तत्त्वविद् कर्मयोगी स्तभ्नाति गुणाधिकारं इतरस्तु गुणयति तदधिकारम् । भोगावसाने आद्यः मुच्यते अपरस्तु पुनर्जन्माप्नोति । अतः न तयोः विज्ञाविज्ञयोः अभेदः तस्मात् कर्तव्यं कार्यं कर्म सर्वेणैव निरपवादम् इत्यर्थः ॥ ११ ॥

पुनरपि आक्षेपं समादधन् आह—

## कर्त्तृत्वं प्रकृतेः उपपत्तेः ॥ १२ ॥

सूत्रार्थः—कर्त्तृत्वं= कर्त्तुः भावः प्रकृतेः = त्रिगुणात्मिकायाः प्रकृतेः अस्ति । कुतः ? उपपत्तेः = तस्याः एव कर्त्तृत्वस्य उपपन्नत्वात् इति भावः ।

भाष्यम्:—अयमपि विज्ञाविज्ञयोः भेदकरः हेतुः इति ज्ञेयम् । कर्त्ता हि भोक्ता भवति । कर्तृत्वभावो हि प्रकृतेः अस्ति । देहेन्द्रियादिरूपेण परिणता प्रकृतिः कर्माणि कुरुते कुर्वन्ती च सा एव कर्मफलभूतं भोगं लभते आत्मा तु अनध्यस्तानात्मभावः केवलः न कर्त्ता न च भोक्तापि भवितुमर्हति । तत्रभवान् तत्त्वविद् कर्मयोगी जानाति प्रकृतिपुरुषयोः भेदम् । जानंश्च गुणकर्मविभागयोः तत्त्वं इन्द्रियादिरूपेण परिणता गुणाः एव विषयादिरूपेण परिणतेषु गुणेषु प्रवर्तन्ते न आत्मा इति आतिष्ठन् असक्तः सन् प्रवर्तमानः स्वस्थ एव भवति इतरश्च अहंकार-विमूढो भूत्वा आत्मनि परकर्त्तृत्वं भोक्तृत्वं च अध्यस्य अहं कर्त्ता इति मन्यमानः रात्रिंदिवा सक्तः सन् प्रवर्तमानः अस्वस्थः एव भवति । तस्मात् कृत्स्नविदः अकृत्स्नविदश्च महान् विशेषः अस्ति । तदिदं उक्तं भगवता यदुनन्दनेनः—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्त्ताऽहमिति मन्यते ॥
तत्त्ववित्तु महाबाहो ! गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥
प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥

इत्येतेषु श्लोकेषु इत्यर्थः ॥ १२ ॥

एवं सति फलितं आह—

## अतः एव प्रपत्तिपूर्वकस्य कर्मयोगस्य ज्यायस्त्वम् ॥ १३ ॥

सूत्रार्थः- अतः = अस्माद् हेतोः एव प्रपत्तिपूर्वकस्य = भगवच्छरण पूर्वकस्य कर्मयोगस्य = निष्कामकर्मयोगस्य ज्यायस्त्वं = प्रशस्यत्वं इत्यर्थः ॥

भाष्यम्—यस्मात् कुर्वन्नपि तत्रभवान् कर्मयोगी असक्तः सन् न निबध्यते, भुञ्जानोऽपि न भुनक्ति, स्वमहिमप्रतिष्ठितत्वात्, यस्माच्च वराकः कर्मठः अकुर्वाणोऽपि बध्यते, अभुंजानोऽपि भुंक्ते परमहिमग्रस्तत्वात् तस्मात् कर्मयोगः एव ज्यायान् न कर्मत्यागः भगवच्छरणपूर्वकः।

आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम्।
आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्॥

इति मनुस्मृत्यनुसारं आत्मज्ञानजन्यं आत्मप्रसादनं च कर्मयोगमेवातिष्ठोत्तिष्ठ मानव! इत्यर्थः। उक्तं च भगवता हृषीकेशेण—

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा।
निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वरः॥ इति॥ १३॥

कर्मयोगस्य फलं निरूपयति—

ततः कर्ममोक्षः॥ १४॥

सूत्रार्थः—ततः = तस्मात् कर्मयोगानुष्ठानात् कर्ममोक्षः = कर्ममुक्तिः भवति इति अर्थः।

भाष्यम्:—कण्टकेन यथा कंटकः विषेण वा यथा विषं तथा कर्मणैव अनासक्तेन कर्मयोगाख्येन कर्मजटाः उद्भिद्यन्ते। तस्मात् कर्ममुमुक्षुः कर्मयोगमेव आश्रयेत् इत्यर्थः॥ १४॥

ननु कर्मयोगः स्वधर्मः आत्मज्ञानजनितत्वात्। तद्भिन्नश्च परधर्मः अनात्मज्ञानजनितत्वात्। तयोः सुलभत्वेन सुकरः परधर्मः। सुलभः हि अनात्मा। दुर्लभश्च आत्मा। अतः असुलभत्वेन दुष्करः स्वधर्मः कर्मयोगाख्यः। सुकरे वर्तमानः लोकः उपालंभात् परो वर्तते। अतः अलं स्वधर्माख्येन कर्मयोगेन दुष्करेण इति प्राप्ते आह—

स्वपरधर्मयोः स्वधर्म एव श्रेयान् उभयावहत्वात्॥ १५॥

सूत्रार्थः—स्वपरधर्मयोः = स्वधर्मः कर्मयोगाख्यः आत्मनः स्वात् जनितत्वात्; परधर्मः कर्मठत्वं परायाः अस्वीयायाः प्रकृतेः जन्यमानत्वात्; तयोः स्वपरधर्मयोः मध्ये स्वधर्मः = कर्मयोगाख्यः स्वस्य धर्मः एव = एवकारेण अन्ययोगव्यवच्छेदः न तु अन्यः परधर्मः श्रेयान् = प्रशस्य-

तरः कुतः उभयावहत्वात्ः उभयस्य श्रेयसः अभयस्य च आवहत्वात् प्रापकत्वात् इत्यर्थः ॥

सुलभः सुकरश्च परधर्मः दुर्लभः दुष्करश्च स्वधर्मः इत्यस्मादेवहेतोः परधर्मः स्वीकुर्वाणः स्वधर्मं च आपृच्छमाणः महतां अनुकम्प्योऽसि। यतः सुकरत्वं दुष्करत्वं च आश्रित्य भवान् विप्रलपसि। नात्र सुकरत्व-दुष्करत्वयोः प्रश्नः। अपि तु श्रेयसः अवाप्तिः भयस्य च निवृत्तिः अत्र प्रस्तुता। श्रेयोवाप्तिः भयस्य निवृत्तिः च स्वधर्मानुष्ठानस्य फलम्। अतः आचरणदशायां असुकरोऽपि स्वधर्मः सुखेन आचरितात् परधर्मात् प्रशस्यतरः स्वधर्माचरणे प्रस्तुतार्थे मरणमपि श्रेयः। परधर्मस्तु पापजनकत्वेन संसारभयावहः। अतः स्वधर्माश्रयः एव मंगलतरः इत्यर्थः। निर्णीतं चैतत् भगवता मर्मज्ञेन—

श्रेयान् स्वधर्मः विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥ इति ॥ १५ ॥

ननु न मम परधर्मे प्रीतिः न वा स्वधर्मे अप्रीतिः। अपि तु अनिच्छन्नपि परधर्मे एव रुचिः भवति इच्छन्नपि स्वधर्मे अरुचिः एव भवति। न जाने केन प्रयुक्तः परवशः सन् बलादिव नियोजितः सन् पापरुचिः भवामि! कोऽयं स्यात् पापप्रेरकः? इति जिज्ञासायां निर्णयं आह—

कामः एव शत्रुः परधर्मनियोजकत्वात्, आवरकत्वात्
अनलवत् दुष्पूरत्वाच्च ॥ १६ ॥

सूत्रार्थः—कामः=कामः एव=अन्ययोगव्यवच्छेदः अवधारणार्थः कामः एव न तु अन्यः कोऽपि शत्रुः=वैरी। कुतः? परधर्मनियोजकत्वात् =परधर्मप्रेरकत्वात्, आवरकत्वात्=आत्मज्ञानावरणशीलत्वात् अनल-वत्=अग्निवत् दुष्पूरत्वाच्च=कष्टेन पूरयितव्यत्वात् इत्यर्थः।

भाष्यम्—पापाचरणे बलात् प्रयोजकः तु कामः एव। प्रति विषयं व्यवस्थितो रागः हि कामः। क्रोधरूपेण-परिणममानः रजोगुणसंतानः महाशनः महापाप्मा च अयं कामः एव शत्रुः। असौ एव मनुष्यं सर्वथा आवृतज्ञानं विधाय वह्निवत् दुष्पूरेण स्वरूपेण अनिष्टे प्रयोजयति। अकार्यकारिणं च तं करोति। अतः तमेव शत्रुं विद्यात् सुधीः इत्यर्थः तथा च भगवतः हृषीकेशस्य वचनम्—

काम एष क्रोध एषः रजोगुणसमुद्भवः
महाशनो महापाप्मा विद्ध्येनं इह वैरिणम् ।

धूमेनाव्रियते वह्निः यथादर्शो मलेन च
यथोल्बेनावृतो गर्भः तथा तेनेदमावृतम् ॥

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥

तस्मात् ज्ञानिनो नित्यवैरिणः अस्य विघाताय प्रयतितव्यमित्यर्थः॥१६॥

ननु उमापतेरपि धैर्यध्वंसकस्य अस्य परमशत्रोः दुरासदस्य कथं पराभवः कर्तव्यः ? आह—

इन्द्रियादिजयपूर्वकपरदर्शनात् कामनाशः विरोधित्वात् ॥१७॥

सूत्रार्थः—इन्द्रियादिजयपूर्वकपरदर्शनात् = ज्ञानकर्मेन्द्रियाणां विवेकेन वशविधानपूर्वकात् परस्य परमात्मस्वरूपस्य देहादिभिन्नस्य आत्मनः स्वरूपज्ञानात् कामनाशः = शत्रोः रागस्य लोपः भवति । कुतः विरोधित्वात् = विरोधि हि ज्ञानं अज्ञानस्य तस्मात् इत्यर्थः ।

भाष्यम्—परमसारवतः अस्य शत्रोः पराजयः तु परदर्शनात् एव भवति । परदर्शनं हि आत्मदर्शनम् । परो हि आत्मा गुणैरस्पृष्टत्वात् । तस्य परमात्मस्वरूपस्य निजात्मनः स्वाभाविकात् सम्यक्-दर्शनादेव मारपराजयो भवति । तस्य परात्मनः दर्शनं हि इन्द्रियादिजयपूर्वकं एव भवति । यो हि इन्द्रियाणि निगृह्णाति मनः च स्ववशं विदधाति बुद्धिं च विवेकख्यातिप्रवणां करोति स एव परमात्मनः दर्शने पारयति महाशत्रुं रागं च शातयितुं शक्नोति । कुतः एतत् ? विरोधित्वात् इत्यर्थः । ज्ञानं हि अज्ञानस्य विरोधि । रागश्च अज्ञानस्य संततिः । अतः ज्ञानोदये एव विरोधिनः अज्ञानस्य क्षयो भवति अरुणोदये इव शार्वरस्य तमसः । अतः भिन्नो नास्ति अध्वा । तस्मात् सम्यक्दर्शनमेव शरणमित्यर्थः । उक्तंच भगवता भूतवत्सलेन सर्वमेतत्—

इन्द्रियाणि मनोबुद्धिः अस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येषः ज्ञानमावृत्य देहिनम् ॥

तस्मात् त्वं इन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशिनम् ॥

इन्द्रियाणि पराण्याहुः इन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिः यो बुद्धेः परतस्तु सः ॥
एवं बुद्धेः परं बुध्द्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥

तस्मात् आत्मना आत्मानं संस्तभ्य परं च बुद्ध्वा शत्रुनाशं विधाय श्रेयोवान् भव इत्यर्थ ॥ १७ ॥

॥ इति तृतीयोऽध्यायः ॥

## ॥ चतुर्थोऽध्यायः ॥

अभ्युदयनिःश्रेयसहेतुभूतः कर्मयोगः तृतीयाध्याये प्रतिपादितः- आत्मज्ञानपूर्वकं भक्तिप्रधानं आत्मोन्नतिसाधकं कर्तव्यजालं कर्तव्यबुद्ध्या यावज्जीयं करणीयं इति कर्मयोगः । स च श्रेयान् इति स्थितिः । सोऽयं कर्मयोगः वेदप्रतिपाद्यत्वात् पुरातनतमः न अद्यतनः इति ब्रुवन्नाह—

### प्राचीनतमः कर्मयोगः सृष्टिसहजत्वात् ॥ १ ॥

सूत्रार्थः—कर्मयोगः = कर्मयोगाख्यः योगः प्राचीनतमः = पुरातनतमः । कुतः सृष्टिसहजत्वात् = सृष्ट्या सह जायमानत्वात् इत्यर्थः ॥
भाष्यम्:-तृतीयाध्याये उक्तः कर्मयोगः न आधुनिकः । अपि तु पुरातनतमः । रणभूमौ भगवता शिष्टत्वेन मा नाम कोऽपि तस्य आधुनिकत्वं शंकिष्ट इति प्राचीनतमत्वं प्रतिपाद्यते । सम्प्रदायपुरस्सरोऽयं आगतः न तु कपोलकल्पितः। यतः असौ कर्मयोगः सृष्टिसहजः वर्तते । यदा सृष्टिः अजायत तदैव तस्याः रहस्यत्वेन सोऽपि जनिमानं अलभत । तस्मात् पुरातनः अयं योगः न अद्यतनः । पुरातनः इति त्रिकालाबाधितः, तस्य सत्यत्वेन कालास्पृष्टत्वादित्यर्थः । तथा च भगवदुक्तिः

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ॥
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥
एवं परंपराप्राप्तं इमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ! ॥
स एवाऽयं मया तेऽद्यः योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥

इति। कालेन महता अदर्शनं गतः अयं योगः भगवता सृष्टिरहस्यज्ञेन पुनरुध्धृतः इति अर्थः ॥ १ ॥

ननु इदानींतनेन भगवता वसुदेवात्मजेन तदानीन्तमाय विवस्वते प्रोक्तः अयं योगः, तस्माच्च विवस्वतः अविरलतां गतः इति कथं बुद्धिमन्तो वयं श्रद्दधीमहे? अर्वाचीनजन्मा हि भगवान् प्राचीनजन्मने सूर्यनारायणाय इमं कथितवान् इति मूढतमोऽपि प्रत्येतुं न शक्नोति। अतः हास्यास्पदं प्रतिपादयन् कथं अवधेयवचनः स्यात्? एवं प्राप्ते रहस्यं स्फोटयन् आह—

## अवतारवादावतरणार्थं अर्जुनप्रश्नः ॥ २ ॥

सूत्रार्थः—अवतारवादा०=स्वरूपादच्युतस्यापि भगवतः प्रयोजनवैशिष्ट्यात् शक्तिविशेषेणाविर्भवनं अवतारः, तद्विषयो वादः अवतारवादःतस्य अवतारवादस्य अवतरणार्थः=पुरस्करणार्थं अर्जुन०=अर्जुनस्य प्रश्नः इति ज्ञेयमित्यर्थः।

भाष्यम्—बालस्यापि अप्रतीतिकरं ब्रुवन् सर्वज्ञो भगवान् गूढाभिसंधिः अस्ति इति मन्तव्यम्। परिहासस्य तु अवकाशः एव नास्ति इति दूरे आस्तां तत्कथा। तर्हि किमभिप्रायं भगवद्वचनम्? अवतारवादस्य अवतारणार्थं भगवद्वचनं इति ब्रूमः। अवतारो हि आविर्भावः प्रयोजनविशेषविशिष्टः स्वरूपाभ्रष्टस्यापि भगवतः। सोऽयं अवतारवादआर्षप्रतिभायाः विशिष्टतमं दर्शनम् कुत्राऽपि विश्ववाङ्मये अदृष्टचरम्। न खलु इदं वाक्यं वसुदेवनन्दनो ब्रूते समवयस्कः अर्जुनस्य, मृण्मयदेहावरुद्धचेतनो वा यः कश्चन मानवः। त्रिकालाबाधितस्य भगवतः सत्यनारायणस्य कालेन अविपरिलुप्तमहिम्नः सर्वदृशः श्रीकृष्णाख्यस्य वचनम् इदम् पौर्वापर्यसमालोचनस्य अत्रैवार्थे पर्यवसितत्वात्। अवतारवादस्य पूर्वभूमिकां रचयन् जगतां पतिः अत्र न अनवधेयवचनः न वा परिहासपरायणःइत्यर्थः ॥ २ ॥

स्यादेतत्। जन्माद्यस्पृष्टस्य सर्वज्ञस्य सर्वेश्वरस्य चेदाविर्भावः आयातं तस्यापि जीवात्मसमकक्षत्वम्। तच्चानिष्टम्। अपिगच्छेत् भगवतः भगवत्त्वं ऐश्वर्यविघातात्। ऐश्वर्यविघातो हि जन्म, जीवात्मनः स्यात् वा भगवतः वा स्यात्। तस्मात् असमंजसमेतत् इति प्राप्ते रहस्यं विशदयन्नाह—

अवतारजन्मनोः भेददर्शनात् आमोक्षं तत्पारतंत्र्यम् ॥ ३ ॥

सूत्रार्थः—अवतार=ईश्वरप्राकट्यस्य जीवजन्मनः च भेददर्शनात्= विशेषस्य दर्शनात् आमोक्षं = मोक्षपर्यन्तं जीवात्मनः तत्पारतंत्र्यं=ईश्वराधीनत्वं विज्ञेयमित्यर्थः ।

भाष्यम्—न जीवात्मनः समकक्षत्वं भगवतः भवति अवतारग्रहणात्, नापि तस्यैश्वर्यस्य प्रतिघातो वा भवति तन्मात्रादेव । कुतः ? अवतारजन्मनोः भेददर्शनात् । जीवात्मा स्वतः जन्ममरणरहितोऽपि शरीरसंबंधात् जायमानो म्रियमाणश्च दृश्यते न च परमात्मा जन्मादिहेतुभूतशुभाशुभकर्माभावात् । जीवो हि कर्मपराधीनत्वात् न ईश्वरः, परमेश्वरस्तु कर्माध्यक्षत्वात् सदैव सर्वेश्वरः । जीवात्मा च प्रकृत्यवशः सन् फलभोगाय जायते न स्ववशः सन्, परमात्मा च प्रकृतिं अधिष्ठाय स्वलीलया आविर्भवति न स्वप्नेऽपि परवशः सन् प्रादुर्भवति । अतः न परमात्मा जीवात्मसमकक्षः । इदमेव परमेश्वरस्य तस्य परमैश्वर्यं यत् जायमानोऽपि न जायते । कुर्वन्नपि न करोति । तिरोभवन्नपि न तिरोभवति । नायं ऐश्वर्यस्य वियोगः अपि तु परयोगः इत्यर्थः ।

तस्माद् एतद्भवति । अवतारजन्मनोः भेददर्शनात् जीवात्मा मोक्षपर्यन्तं ईश्वरपरतंत्रः तिष्ठति । यावन्न मुच्यते तावत् तत्परवशो भवति । ईश्वरवशे च वर्तमानः अवताररहस्यं अनुसंदधानः च उत्तरोत्तरं आत्मनः परमात्मनः च स्वरूपैक्यं अवस्थितं सुकृतप्रकर्षेण साक्षात् कुर्वन्, आत्मनि अध्यस्तं जन्माद्युपद्रवं समस्तं विधुनोति । स्वरूपसमर्पको हि अवतारवादः । तस्मात् गूढाकृतिः भगवत्प्रादुर्भावः न तस्यैश्वर्यं प्रपीडयति । तथाच स्वयमेव कथयति—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥
अजोऽपि सन् अव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वां अधिष्ठाण संभवाम्यात्ममायया ॥ इति

ननु कोऽयमवतारो नाम ? आह—

अवतारः क्रान्तिः रहस्यसाम्यात् ॥ ४ ॥

सूत्रार्थः—अवतारः = भगवत्प्राकट्यं; क्रान्तिः = नूतन-सत्य-मूल्य-प्रस्थापनप्रधानो व्यापारः। कुतः ?= रहस्यसाम्यात् = रहस्यस्य-हार्दस्य-तत्वस्य समानत्वात् इत्यर्थः ।

भाष्यम्—यं किल प्राचीनाः अवतारं मन्यन्ते तमेव आधुनिकाः क्रान्ति कथयन्ति। यद् हि रहस्यं अवतारस्य तदेव रहस्यं क्रान्तेरपि दृश्यते। अतः तयोः एकरूपत्वमेव। न खलु अर्थैक्ये सति शब्दभेदः विवादास्पदः। यदा यदा हि धर्मस्य ग्लानिः भवति, अधर्मस्य च अभ्युत्थानं भवति, तदा तदा साधूनां परित्राणाय, दुष्कृतां विनाशाय, धर्मस्य संस्थापनाय च भगवतः आविर्भावो येनकेनापि रूपेण शक्त्या वा परिस्थितिरूपेण वा भवति। यावज्जीवन—धारणबलं हि धर्मः। धारणात् धर्ममित्याहुः धर्मो धारयते प्रजाः इति व्यासवचनात्। तस्य धारणबलस्य अहिंसादियमनियमाख्यस्य ग्लानिः संक्षोभयति विश्वजीवनम्। सत्यं शिवं सुन्दरम् च पीडयति। हिंसादिवितर्काख्यस्य अधर्मस्य धारणबलप्रपीडकस्य अभिवृद्धिः व्यत्यस्यति च सत्यं शिवं सुन्दरम्। सोऽयं युगावर्तकारकः धर्माधर्मयोः संघर्षः भगवतः धर्ममूर्तेः प्राकट्यकालः। यतः सत्यस्य, शिवस्य, सुन्दरस्य, स्थापनं, पालनं, संशोधनम्--विवर्धनं, प्रवर्तनं, तस्य व्रतम्। साधूनां सर्वथा रक्षणं विदधानः करुणामयो भगवान्, तेषां सत्कर्मणि धर्मरूपे अचलां निष्ठां वर्धयन्, दुष्कृतां विनाशेन अध्रुवं अधर्मं क्षणिकविजयाभासं अपि चिरपराजितं प्रदर्शयन्, धर्मस्य जीवनधारकस्य सत्य-शिव-सुन्दररूपस्य नवैः अजर्जरैः जीवनविकास-सचिवभूतैः सन्मूल्यैः अमूल्यैः विजयपताकां उच्चैः उद्धारयन् युगे युगे क्रान्तिमन्त्रं शिक्षयन् कृतकार्यः पुनः आत्मानं तिरोधापयति। न च अनेनैव रूपेण भगवता आविर्भवितव्यं इति नियम्यते। सांकुशत्वे निरीश्वरत्वापातात्। तस्मात् कदा केन कथं कुत्र च तेन अवतरितव्यं स्वीयं कार्यं च संपादनीयं इत्यत्र स एव सर्वतन्त्रस्वतंत्रः। मत्स्यादिअवतारेण अवतरता भगवता स्वीयं सर्वशक्तिमत्वं कर्तुमकर्तुमन्यथाकर्तुंसमर्थत्वमेव मंगलमयं द्योतितमस्ति। जीवनरोधः हि क्रान्तिबीजम्। जीवन-स्रोतसः प्रतिरुद्धस्य वा अवहतस्य वा पूतिभूतस्य वा उद्घाटनं प्रवाहणं विशोधनं हि क्रान्तिकार्यम्। असत्यभूतानां, कालप्रभावेण जर्जरतां गतानां, वर्तमानक्षणे अश्लिष्टानां, जीवनस्फुर्तिप्रतिबंधकानां रूढ्यादि—अपरपर्यायानां मूल्यानां भ्रेषः तत्स्थाने च सत्यमूलानां तरुणानां वर्तमाने वर्तयितुं क्षमानां जीवनस्फुर्तिसचिवानां नूतन-दृष्ट्यपरनाम्नां मूल्यानां प्रस्थापनं, संवर्धनं, विशोधनं, च अवतार-रहस्यम्। तच्च क्रान्तिरहस्येन समम्। अतः अवतारक्रान्त्योः नास्ति

मनागपि भेदः इत्यर्थः। उक्तं च भगवता नित्यक्रान्तिप्रियेण धर्म-तनूना—

> यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
> अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥
> परित्राणाय साधूनां विनाशाय च दुष्कृताम्
> धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ इति ॥

तस्मात् अवतारवादो हि सत्यशिवसुन्दरजीवनपक्षपाती जीवन-रोधद्वेष्टा, मृत्योः उपरि जीवनस्य विजयप्रस्थापको नित्यनवीनः क्रान्तिवादः इत्यर्थः ॥ ४ ॥

ननु स्वरूपसमर्पको हि अवतारवादः इति कथं ज्ञायते ? आह—

**तत्प्रयोजनतत्त्वज्ञानात् सिद्धिः मोक्षोपदेशात् ॥ ५ ॥**

सूत्रार्थः— तत्प्रयोजनतत्त्वज्ञानात् = तस्य अवतारवादस्य यत् प्रयोजनं-फलं तस्य तत्त्वज्ञानात् = वास्तविक-ज्ञानात् सिद्धिः = जीवन-सिद्धिः भवति कुतः ? मोक्षोपदेशात् = ततः मोक्षस्य उपदेशात्।

अवतारवादो हि स्वरूपसमर्पकः एव अस्ति। तत्रैव तस्य तात्पर्य दर्शनात्। तथा हि न ईश्वरस्य अवतारग्रहणे कोऽपि स्थायी भावो वर्तते। प्रयोजनाभावात्। अवतारग्रहः तु प्रभोः न स्वार्थः अपि तु जीवानुग्रहार्थः। गृहीत्वा जन्म करोति यत् कर्म भगवान् तयोः तत्त्वं जानन् जीवः सर्वतः अधर्मस्य अभिवृद्धौ अपि स्वधर्मं नैव जहाति, स्वधर्मनिष्ठः च असौ परिरक्ष्यमाणो भगवता, सुकृतमूर्तिर्भूत्वा स्वरूपज्ञानाय योग्यो भवन् क्रमशः स्वरूपं प्राप्नोति। स्वरूपं हि सर्वस्य परमात्मा। अचलश्रद्धः असौ धर्मत्राणपरायणः समाधिनिष्ठः स्वरूपभूतं परमात्मानं अनुभवन् देहं वर्तमानं त्यक्त्वा सामग्र्यभावात् पुनर्जन्म नैति परमा-त्मप्राप्ति-साधनभूत-सामग्री-सत्त्वाच्च प्रभुमेव एति। अतः क्रान्तिः तत्त्वतः चेत् अभिज्ञाता सेविता च जन्ममरणप्रबन्धं छिनत्ति। उक्तं च भगवता युगादिकृता—

> जन्मकर्म च मे दिव्यं एवं यो वेत्ति तत्त्वतः।
> त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥
> वीतरागभयक्रोधाः मन्मयाः मामुपाश्रिताः।
> बहवो ज्ञानतपसा पूता मद्भावमागताः ॥

वीतरागभयक्रोधादिकं हि जीवनस्यापि फलं भगवत्याः क्रान्तेः सुसेवितायाः सम्यक्ज्ञातायाश्च। अतः ज्ञेयं क्रान्तितत्त्वं सेव्यं च इत्यर्थः ॥ ५ ॥

ननु भगवतः दिव्यजन्मकर्मणोः वेदनमात्रेण कथं मुक्तिः जायेत। न खलु चैत्रेण कृतं मैत्राय फलति ? कर्तुः फलं न केवलं अन्यकृतस्य ज्ञातुः। अतः भगवत्कृतदिव्यजन्मकर्मणोः ज्ञानेन भक्तस्य जन्ममरण-प्रबन्धविच्छित्तिः अनुपपन्ना। एवं प्राप्ते जीवात्मपरमात्मनोः वास्तविकं स्वरूपैक्यं व्यञ्जयन् कर्मयोगं प्रशंसन् आह—

फलस्पृहायाः लेपप्रसक्तेः स्वदृष्टान्तसमर्थितत्वात् कर्मयोगादेशः ॥६॥

सूत्रार्थः—फलस्पृहायाः = कर्मणः फलाभिलाषायाः लेपप्रसक्तेः = लेपस्य या प्रसक्तिः प्रसंगः तस्याः प्रसक्तेः स्वदृष्टान्तसमर्थितत्वात्= आत्मनः दृष्टान्तेन उपोद्बलितत्वात् कर्मयोगस्य उपदेशः फलति इत्यर्थः।

भाष्यम्—न वयं भगवतः जन्मकर्मणोः वेदनमात्रेण मुक्तिफलं ब्रूमः। कुर्वन् हि फलं लभते न अकुर्वन् इत्यपि न नवीनम्। यदत्र सूच्यते भगवता तत्तु अन्यदेव। करोतु नाम सर्वोऽपि लोकः परंतु तथा करोतु यथा कृतस्य लेपः न स्यात्। कर्मलेपो हि दुर्निवारः चेत् करणस्य रीतिः न ज्ञायते। असौ तु आत्मपरमात्मनोः स्वरूपैक्यज्ञानादेव हृदि प्रतिष्ठिता भवति। यथा परि-तृप्तः परमात्मा कुर्वन्नपि न लिप्यते फलस्पृहायाः तुच्छत्वेन अभावात् तथा अयमपि स्वरूपेण परितृप्तः जीवात्मा करोतु यथाविधि सर्वं कर्म परिवीतफलाभिसंधिः। फलस्पृहानिबन्धनो हि निखिलो बन्धः। फलस्पृहा च आयुष्मती परमात्मत्वेन आत्मनः स्वरूपविज्ञानादेव वीतायुः भवति। अतः आत्मनः दृष्टान्तसमर्पणेन भगवान् स्वरूपैक्यमूलां कर्म-करणरीतिं फलप्रसक्तिं बाधमानां निरूपयन् कर्मयोगमेव अत्र प्रशंसति। तथा च तस्योक्तिः—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥
न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति कर्मभिः न स बध्यते ॥

चातुर्वर्ण्यस्य विषमस्यापि क्वचित् निर्घृणस्यापि स्रष्टुः मम यथा फलस्पृहायाः अभावात् लेपलेशःअपि नास्ति तथा मां अनुकुर्वतः इतरस्यापि विदितस्वरूपस्य कर्तव्यत्वेन प्राप्तानि विषमाणि इव निर्घृणानि इव अपि कर्माणि न लेपं जनयिष्यन्ति। कर्तृत्वाभिनिवेशाभावात् इत्यर्थः। अतः जीवात्मपरमात्मनोः स्वरूपैक्यविज्ञानवतः केवलं कर्तव्यबुद्ध्या कर्माणि कुर्वतः स्वप्नेऽपि फललेपो न भवति। तस्मात् विजयते कर्मयोगः इत्यर्थः ॥ ६॥

ननु कर्तृभेदेन एकस्य एव कर्मणः फलभेददर्शनात् क्वचित् फलवैपरीत्यस्यापि दर्शनात् न विज्ञायते किं कर्म किं अकर्म किं विकर्मेति वा। सर्वज्ञो भगवान् एव कर्माकर्मविकर्म–विवेचने शक्तः न अल्पज्ञो जीवः। गोकर्ण–कृत–भागवत–श्रवणाख्यं एकरूपं कर्म बहुभिः युगपदेव आचरितं तथापि प्रेतस्यैव मुक्तिः संजाता तदर्थमेव विमानं आगतं अन्ये तु शृण्वन्तोऽपि इहैव अलुठन् इति दृश्यते एकस्यापि कर्मणः फलभेदः : अतः कर्माकर्मविकर्म–गर्ते कवयोऽपि मुह्यन्ते। का कथा अस्मादृशां ? तस्माद् इच्छासत्त्वेऽपि कर्मयोगाचरणस्य नैव शक्यता दृश्यते। अतः कर्मादीनां विज्ञानाभावे कृतं कर्मयोगेन अशक्येन इति प्राप्ते स्वीकुर्वन् पूर्वपक्षं समाधानपीठिकां रचयन् ब्रवीति—

गहनगतित्वात् कर्मणः तत्पूर्विकाप्रवृत्तिः ॥ ७ ॥

सूत्रार्थः—कर्मणः=कर्माकर्मणोः उभयोः गतिः अत्र वेदितव्या। तयोः गतिसत्त्वे तद्भिन्नत्वेन विकर्मणः गतेः अर्थप्राप्तत्वात् इत्यर्थः। तस्य कर्मणः गहनगतित्वात्=गहना दुरवगाहा गतिः ज्ञप्तिः तत्त्वात्, बह्वायासेन सुसम्प्रतिपत्तव्यत्वात् इत्यर्थः तत्पूर्विका=तदा ज्ञप्तिपरामर्शः तत् ज्ञानपूर्विका प्रवृत्तिः=व्यापारः=भवितुमर्हति इत्यर्थः।

भाष्यम्:—सत्यं ब्रवीषि। गहना खलु कर्मणो गतिः। न द्रागित्येव सम्प्रतिपत्तिः भवति कर्मणः वा अकर्मणः वा। वेदपाठी अपि स्यात् कर्मचाण्डालः, मत्स्योपजीवी अपि स्यात् पुण्यश्रवाः। को जानीयात् हृदयं कर्तुः ऋते भगवतः सर्वज्ञात् ? यथाशयं च फलति कर्म। आशयविज्ञश्च भगवानेव। जटिलाशयश्च जीवात्मा। अतः कर्मैकरूपत्वेऽपि भवति फलभेदः। परंतु न तेन कर्मयोगस्य कापि क्षतिः अपि तु कर्मयोगस्य अयमेव लाभः। कर्मयोगः एव ईश्वरं अपि सर्वज्ञं फलदानजडं करोति। कर्मबीजं हि वन्ध्यवीर्यं कुर्वाणः कर्मयोगः कर्ममात्रं भस्मयति।

गमनारूढस्य हि इयं भीतिः कर्माकर्मविकर्मविषया न कर्मयोगमारूढस्य। कर्मयोगमारूढस्तु अकुतोभयसंचारी कर्ममात्रं अकर्म विदधानः सुखेन मुच्यते। विकर्म च तस्य भगवतः ज्ञानकर्मगतेः अशक्यमेव। अतः कर्मयोगः एव तरणोपायः इत्यर्थः। तस्मात् तत्पूर्वकमेव वर्तितव्यं भवति। तथा च आह भगवान् देवकीनन्दनः—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ॥
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥

इदमत्र ज्ञेयम्। इह तावत् यत् भगवता वेदेन कर्तव्यतया विहितं, सदाचारेण प्रमाणितं, कविभिः अनुमतं, अभ्युदयनिःश्रेयसोः जनकं, तत्सर्वं कर्म इति अभिप्रेयते। यच्च कर्म भवद् अपि कर्तृत्वाभिनिवेश-शून्यं फलाभिसंधिवर्जितं लोकसंग्रहबुद्ध्या वा कर्तव्यबुद्ध्या वा निर्वर्तितं तुषविधुरं तण्डुलकणमिव उप्तमपि भाविजन्मांकुरजननसामर्थ्यशून्यं तद् अकर्म, कर्म भवदपि अकर्म, नैष्कर्म्यं, कर्माभावः इति यावत् विज्ञेयम्। कर्माकर्मभ्यां विलक्षणम् च वेदनिषिद्धं, लोकविद्विष्टं, इहामुत्रभयजनकं, दारिद्र्यावहं, अवनतिकारकं, निःश्रेयसप्रतिबन्धकं कर्म विकर्मेति विज्ञेयम्। द्वयोः कर्माकर्मणोः भिन्नं त्याज्यत्वेन अभिप्रेतं एतत् विकर्म स्वप्नेऽपि मतिमता अननुसंधेयमित्यर्थः। सर्वसाधारणतया एतत् कर्माकर्मविकर्मणां लिंगम्। कस्मिन् वर्गे अमुकं कर्म समाविशति इति विशेषस्तु भगवता एव अन्तर्यामिणा सर्वज्ञेन निश्चेतुं शक्यते। तस्यैव तत्राधिकृतत्वात् इत्यर्थः ॥ १ ॥

ननु कर्मस्वरूपज्ञानस्य गहनत्वात् अयं कर्मठः वा कर्मयोगी वा इति न विज्ञायते। सर्वसाधारणं हि कर्म। अविशेषः च एवं स्यात् कर्मयोगिनः कर्मठस्य च। एवं प्राप्ते कर्मयोगिनः दृष्टिविशेषं प्रतिपादयन्नाह—

## एकस्मिन् उभयदर्शनशीलस्य कर्मयोगित्वं कृत्स्नकर्मकरत्वात् ॥ ८ ॥

सूत्रार्थः—एकस्मिन् = एकस्मिन् कर्मणि युगपत् उभयदर्शन-शीलस्य उभयोः कर्माकर्मणोः दर्शनं कर्तुं शीलं यस्य तस्य कर्मयोगित्वं= कर्मयोगिपदभाक्त्वं, कुतः ? कृत्स्नकर्मकरत्वात् = पूर्णकर्मकरत्वात् इत्यर्थः।

भाष्यम्ः—न खलु बाह्यकर्मकरणसाम्येन कर्मयोगिनः इतरस्य च अविशेषो भवति। कर्मसाम्येऽपि दृष्टि–भेदसत्वात्। दृष्टिः हि प्रधाना। सा च भिद्यते उभयोः। कर्मयोगी तु एकस्मिन्नेव कर्मणि कर्माकर्मोभयं पश्यति। इतरस्तु न। तथा हि कर्मयोगी कर्मणि अकर्म पश्यति अकर्मणि च कर्मदर्शनं करोति। एवं कुर्वन् असौ कृत्स्नकर्मकृत् भवन् आत्मनः युक्तत्वं प्रतिपादयति। अयमर्थः। किमिदं कर्मणि अकर्मदर्शनं नाम? कर्तव्यतया प्राप्तस्य कर्मणः कर्तव्यबुद्ध्या लोकसंग्रहबुद्ध्या वा क्रियमाणतया बन्धकत्वाभावात् अकर्मत्वम्, क्रियमाणमपि तत्कर्म अकर्म पनीपद्यते। तदेतत् कर्मणि अकर्मणः दर्शनम्। एवं अकर्मणि कर्मदर्शनं नाम, फलाभिसंधिमन्तरेण क्रियमाणं कर्म आत्मदृष्ट्या अकर्म, अकर्मणि च लोकदृष्ट्या कर्म भवति इति युगपत् लोचनशीलस्य सर्वं कर्म परिपूर्णतां याति। कर्मणः परिपूर्णत्वं नाम फलसत्वेऽपि पुरुषदर्शनमाहात्म्यात् विगतगर्धत्वम् ज्ञानप्रसादापरपर्यायं ईश्वरानुकंपामात्रगम्यम् इत्यर्थः। तस्मात् भिद्यते योगी इतरेभ्यः इत्यर्थः। उक्तंच विचक्षणतमेन भगवता—

कर्मण्यकर्म यः पश्येत् अकर्मणि च कर्म यः
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥ इति ॥ ८॥

फलितं वर्णयन्नाह—

## कर्तृत्वेऽपि अकर्तृत्वं दृष्टिसंपत्तेः॥ ९॥

सूत्रार्थः—कर्तृत्वेऽपि = कर्तृत्वे दृश्यमाणे अपि कर्मयोगिनः अकर्तृत्वं = तात्त्विकतया अकर्तृत्वं विज्ञेयं कुतः? दृष्टिसंपत्तेः = सम्यक् ज्ञानमाहात्म्यसमृद्धेः इत्यर्थः।

भाष्यम्—कर्मयोगिनः कर्तृत्वं तावत् दृश्यमाणमपि यावत्कर्म लीलार्थमेव स्वेनैव स्वीकृतं न मोहात् आत्मनि समारोपितम्। अतः तत् कर्तृत्वं अकर्तृत्वं एव। नटवत् हि रमते कर्मयोगी। यथा हि नटः रामभूमिकां स्वीकुर्वन् तां पूर्णतया निरूपयति रंगं च आल्हादयति अन्ते च स्वस्थो भूत्वा आपादितं रामत्वं त्वचमिव सर्पः त्यजति स्वप्नेऽपि आत्मनः वास्तविकं रामत्वं न मनुते तथा तत्रभवान् कर्मयोगी यावत् कर्मपरिसमाप्तिः कर्तृत्वं स्वीकरोति, भूमिं च आत्मनः कार्त्स्न्येन निरूपयति, लोकं च आल्हादयति निरन्तरस्वरूपानुसंधानमाहात्म्यात् च पररूपं सहजतया जहाति, स्वप्नेऽपि स्वात्मनि कर्तृत्वं न समारोपयति।

सेयं कर्तृत्वभोक्तृत्वाभिमतिः दृष्टिसंपत्तेः नश्यति। दृष्टिश्च सम्यक्ज्ञानम्। आत्मनः यथार्थदर्शनात् कस्य कर्तृत्वं भोक्तृत्वं च कस्य च न इति सम्यक्तया निश्चितं भवति। कर्तृत्वं च परस्य न आत्मनः अतः एव तस्यैव भोक्तृत्वं न स्वस्य इति जानन् कुर्वन् अपि सः नैव करोति। सेयं दृष्टिः इतरस्य मोहविद्धस्य न जातुचिद् संभवति। अतः कर्मठ-कर्मयोगिनोः बाह्यसाम्येऽपि महद् आन्तरं वैषम्यम् इत्यर्थः ॥ ९ ॥

ननु एतावता संदर्भेण तावत् किं सिद्धं भवति ? आह—

## चरितार्थत्वं कर्मणः ज्ञाने, तत्र परिसमाप्तेः ॥ १० ॥

सूत्रार्थः—ज्ञाने = ज्ञाने-ब्रह्मात्मदर्शने सति कर्मणः = सकलस्य कर्मणः चरितार्थत्वं = अवसितार्थत्वं भवति; कुतः ? तत्र = तस्मिन् ज्ञाने सति सर्वेषां कर्मणां परिसमाप्तेः = परिसमाप्तिः परिपूर्णता; तस्याः इत्यर्थः

भाष्यम्—ज्ञानप्रसादजन्यो हि कर्मयोगः। यावद् तत्त्वज्ञानं न प्रसीदति तावत् कर्मयोगः असंभवी। प्रसन्नता च ज्ञानस्य चित्तशुद्धिद्वारेण भवति। कर्माणि च योगारूढतायाः प्राक् हृदयशुद्ध्यर्थं भवन्ति तदूर्ध्वं च लोकसंग्रहार्थं भवन्ति। प्रसन्नं हि ज्ञानं आत्मानं दर्शयति ईश्वरभक्तिं च सहजां करोति। ततः कर्मणः परिपूर्तिः भवति। आत्म-दर्शनं ईश्वरभक्तिः च कर्मणां परिसमाप्तिं आवहतः। अतः समेषां कर्मणां चरितार्थत्वं ज्ञानप्रतिबन्धकत्रोटने भवति। त्रुटितायां च ज्ञान-प्रतिबन्धकमोहभित्तौ सर्वतः परिद्योतमानं ज्ञानं स्वयमेव कर्मयोगं पुरस्करोति। हिनस्ति च स्वात्मनि समारोपितां कर्तृत्वभोक्तृत्वा-भिमतिम्। उक्तं च मर्मविदुषा भगवता—

सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ॥ इति।

ननु ईदृशं कर्मयोगजनकं ज्ञानं कथं सिध्यति ? दर्शयन् ब्रवीति—

## गुरूपसत्तेः ज्ञानम् ॥ ११ ॥

सूत्रार्थः—गुरूपसत्तेः = श्रोत्रियस्य ब्रह्मनिष्ठस्य च गुरोः उपसर्पणेन ज्ञानं = ब्रह्मात्मज्ञानं कर्मयोगबीजभूतं भवति इत्यर्थः।

श्रोत्रियस्य ब्रह्मनिष्ठस्य महाकारुणिकस्य गुरोः उपसर्पणेन, ब्रह्मात्मज्ञानं भवति। अयमर्थः। श्रद्धाभक्त्यतिशयपूर्वकः शिष्यभावः

अवसरदर्शनपूर्वकः प्रश्नः जिज्ञास्यविषयः, शुश्रूषा च शिष्यसंपत्तिः। शिष्यभावेन उपसृतः अवन्ध्यजिज्ञासया परिपृष्टः निष्कपटभावेन च सेवितः गुरुः गुह्यतममपि ब्रह्मात्मज्ञानं अकुतश्चिद्‌लभ्यं, करुणया केवलया प्रेरितः सन् स्निग्धस्य शिष्यस्य ब्रूयात् इत्यर्थः। प्रदर्शितं च सर्वमेतत् निष्कारणकरुणेन भगवता—

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनः तत्त्वदर्शिनः॥ ११॥ इत्यादिना।

ननु एवं भूरिपरिश्रमोपनतात् ज्ञानात् किं भवति? आह—

## ज्ञानाद् आत्मदर्शनम् ॥ १२॥

सूत्रार्थः—ज्ञानात् = यथाविधि गुरुमुखात् प्राप्तज्ञानात् आत्मदर्शनम् = आत्मनः परमात्मस्वरूपस्य दर्शनं प्रतिपत्तिः भवति इत्यर्थः।

भाष्यम्—ज्ञानात् आत्मनः दर्शनं भवति। आत्मदर्शनं नाम परमात्मस्वरूपेण स्वस्य प्रतिपत्तिः। ततश्च सर्वेषु भूतेषु स्वरूपस्य समसत्ता अनुभूयते। भास्करोदये तमसः इव आत्मज्ञानोदये मोहतिमिरस्य विद्रावणं भवति। विद्रावितारोषमोहविस्तरश्च स्वात्मना सार्धम् निखिलमपि विश्वं परमात्मन्येव सच्चिदानंदमधुरे प्लवमानं पश्यन् कुत्रापि उदरमपि अन्तरं न निभालयति। स्वरूपभूतं च जगत् संसेवते आत्मानमिव निसर्गतः। अतः श्वासप्रश्वासवत् स्वाभाविको भवति तस्य कर्मयोगः इत्यर्थः। कथितं च सर्वमेतत् भूरिकरुणेन शंतमेन भगवता—

यज्ज्ञात्वा न पुनर्मोहं एवं यास्यसि पाण्डव।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥ १२॥

इत्यारभ्य "कालेनात्मनि विन्दति" इत्यन्तेषु श्लोकेषु।

ननु तादृशं आत्मदर्शनं कस्य भवति? साधनसहितस्य न तु साधनरहितस्य इति अन्वयव्यतिरेकाभ्यां सूचयन्नाह—

## साधननिर्भरत्वात् विद्यायाः तद्रहितस्य तदप्राप्तिः ॥ १३॥

सूत्रार्थः— साधननिर्भरत्वात् = श्रद्धादिसाधनसंपत्त्यवष्टंभमूलत्वात् विद्यायाः = आत्मज्ञानस्य तद्रहितस्य = श्रद्धादिसाधनरहितस्य तदप्राप्तिः=तस्य ज्ञानस्य अप्राप्तिः असंपत्तिः भवति इत्यर्थः॥

भाष्यम्—आत्मनः दर्शनं साधनसंपत्तिं अवलंबते। यो हि श्रद्धादि साधनसंपत्तिसंपन्नो भवति तस्यैव आत्मनः ज्ञानं भवति। अतः साधन संपत्तिविधुरस्य नास्ति अधिकारः आत्मवेदने। तस्मात् साधनसंपत्ति संचयपरायणो भूयात् इत्यर्थः। उक्तं च अनुग्रहपरायणेन भगवता—

श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः।
ज्ञानं लब्ध्वा परां शान्तिं अचिरेणाधिगच्छति।
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः। इति ॥ १३ ॥

अध्यायार्थं उपसंहरन् वक्ति—

आत्मवतः कर्मलेपादर्शनात् कर्मयोगाग्रहः औचित्यपूर्णः ॥ १४ ॥

सूत्रार्थः—आत्मप्राप्तिसंपन्नस्य तत्रभवतः पुरुषपंचास्यस्य कर्म लेपाभावदर्शनात् = कर्मविपाकप्रसक्ति–अभावोपलंभनात् कर्मयोगाग्रहः = कर्मयोगस्य आग्रहः भगवता कृतः औचित्यपूर्णः = योग्यतापूर्णः अस्ति इत्यर्थः

भाष्यम्—आत्मना संपन्नो हि कर्मलेपं प्रक्षालयितुं समर्थो भवति न आत्मना असंपन्नः। आत्मप्रसादरूपः च कर्मयोगः एव कर्मलेपा-भावरूपः। अतः भगवता योगीश्वरेण विहितः कर्मयोगाग्रहः न औचित्यं अतिक्रामति अपि तु औचित्यं आवहति। तस्मात् कर्मयोगः एव सारभूतः अर्थः इत्यर्थः। रणयति च भगवतः शब्दझंकारः—

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥
तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः।
छित्त्वैनं संशयं योगं आतिष्ठोत्तिष्ठ भारत ॥ इति।

॥ हरिः ॐ तत्सत् ॥

## अथ कर्मसंन्यासयोगः।

चतुर्थाध्याये भगवान् श्रीकृष्णः "कुरुकर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतं" इति कर्मकरणं शास्ति। अन्ते च योगसंन्यस्तकर्माणं ज्ञान-संछिन्नसंशयम् "इति अत्र कर्मसंन्यासं विदधाति। विरुद्धं चैतत्। इमां पूर्वपक्षभूमिकां सूचयन्नाह—

## उभयोः शंसनात् प्रश्नः ॥ १ ॥

सूत्रार्थः—उभयोः = कर्मयोगस्य च कर्मसंन्यासस्य च उभयोः शंसनात् = स्तवनात् प्रश्नः = अनिश्चितश्रेयसः संदिग्धस्य अर्जुनस्य आदौ प्रश्नः इत्यर्थः

भाष्यम्—कर्मयोगः संन्यासश्च युगपत् न संभवतः विरोधात्। भगवान् च उभयं एकश्वासेन शंसति। अतः शंकोत्पादकं भगवतः वचनं भाति। अतः संदिग्धचेताः अर्जुनः स्वसंशयं पुरस्करोति। तथा च अर्जुनस्य उक्तिः—

संन्यासं कमणां कृष्ण पुनर्योगं च शंससि।
यच्छ्रेयः एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥

संशयजनकानि च वचनानि उपर्युपन्यस्तान्येव। अतः उचितः शिष्यप्रश्नः इत्यर्थः ॥ १ ॥

शंकां निरस्यन् आह—

## कर्मयोगस्य वैशिष्ट्यं नित्यसंन्यासावहत्वात् ॥ २ ॥

सूत्रार्थः-कर्मयोगस्य=फलसंन्यासस्वरूपस्य कर्मयोगस्य वैशिष्ट्यं= कर्मसंन्यासाख्यसंन्यासात् विशिष्टता। कुतः? नित्यसंन्यासावहत्वात्= कादाचित्ककर्मसंन्यासापेक्षया सदासंन्यासानयनत्वात् इत्यर्थः।

भाष्यम्:—द्विविधः खलु कर्मसंन्यासः, फलतः स्वरूपतश्च। योऽयं स्वरूपतः कर्मसंन्यासः सः कनिष्ठः कादाचित्कत्वात्। यश्च फलतः संन्यासः स उत्तमः नित्यसंन्यासावहत्वात्। अतः फलतः संन्यासं एव भगवान् बहु मन्यते उभयोः निः श्रेयसकरत्वेऽपि कर्मसंन्यासात् कर्मयोगः विशिष्यते इति विस्पष्टं भगवद्वचनं समस्तसंशयशमनशीलम्। न हि कर्मत्यागः संन्यासलिंगम्। रागद्वेषयोः त्यागः हि संन्यासलिंगम्। कमयोगी च रागद्वेषयोः उदासीनः सन् नित्यसंन्यासी। न अतिशंकनीयं भगवद्वचनं स्पष्टतमम्। न कर्मजाड्यं तत्वज्ञानस्य फलम्। तद्धिजाड्यं स्त्यानस्वरूपं सत् ज्ञानस्यान्तरायतया उक्तम्। न वा प्रमादः वा आलस्यं वा तत्त्वज्ञानस्य फलम्। अतः भ्रमः एव अयं यत् तत्त्वज्ञानं कर्मसंन्यासफलम् इति। तत्त्वज्ञानं हि समीकरणफलम्। रागद्वेषादि क्लेशमूलकयोः द्वंद्वयोः सुखदुःखाद्यात्मकयोः प्रारब्धानतयोः समवर्ती

भवन् तत्रभवान् कर्मयोगी न किमपि वाञ्छति सुखं सुखसाधनं वा। न किमपि द्वेष्टि दुःखं दुःखसाधनं वा। तत्त्वज्ञानाच्च क्लेशप्रहाणिः। उत्खातक्लेशो हि करोति कर्माणि सर्वाणि यावदायुः न च जागर्द्धि। अतः ज्ञानबलात् दग्धसंचितकर्मा, अनासक्तिबलात् अस्पृष्टक्रियमाणकर्मा समीकरणबलात् च प्रभग्नप्रारब्धवेगधर्मा अयं भगवान् कर्मयोगी, सुखेन प्रारब्धावसाने सरिदिव समुद्रं प्राप्नोति परमात्मानं इत्यर्थः। तस्मात् कर्मयोग एव भगवदभिप्रेतः इत्यर्थः। यथाह भगवान् देवकीनन्दनः—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात् कर्म योगो विशिष्यते॥
ज्ञेयःस नित्यसंन्यासी योनद्वेष्टि न कांक्षति।
निर्द्वंद्वो हि महाबाहो सुखंबन्धात् प्रमुच्यते॥

अत्रार्थे हेत्वन्तरं आह—

कार्यकारणभावाच्च॥ ३॥

सूत्रार्थः—कार्यकारण० = हेतुहेतुमद्भावत्वेन कर्मसंन्यासकर्मयोगयोः वर्तमानत्वात् च = अपि कर्मयोगः एव भगवदभिमतः इत्यर्थः।

भाष्यम्ः—कर्मसंन्यासकर्मयोगयोः कर्मयोग एव विशिष्यते यतः तयोः मध्ये कार्यकारणभावः वर्तते। कर्मयोगः हि कारणं। कर्मसंन्यासश्च कार्यम्। कर्मसंन्यासेन तावत् किमभिप्रेतं? समेषां कर्मणां स्वरूपतः त्यागो वा कतिपयानां त्यागः? कतिपयानां च अवर्जनीयांणां अत्यागः वा? न तावद् आद्यः संभवति। अशक्यत्वात्। प्रकृतिक्षेत्रे अकर्मकरणस्थितिः तावत् अतोष्या। कतिपयानां त्यागः अपरिहार्याणां च करणं अर्धजरतीयन्यायं आनयति। अतः अभिलषन्नपि संन्यासी संन्यासं नैव अधिगच्छति। यत्तु असौ चिकीर्षति तत् कर्मयोगेनैव सुकरं भवति। कर्मयोगो हि फलत्यागं ध्यायन् कर्माणि अकर्माणि करोति। अकर्माणि च भवन्ति तानि कर्माणि तात्त्विकं संन्यासं समर्पयन्ति। अतः यां स्थितिं कामयते संन्यासी सा तु कर्मयोगिना एव उद्भाव्यते। अतः संन्यासोऽपि तात्त्विकतया कर्मयोगमूल एव। तथा च बुद्धिमतां वरिष्ठस्य भगवतः वचनम्—

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ इति ।

तस्माद् फलसाम्येऽपि विशिष्टः कर्मयोगः ।

ननु कर्माचरन्नपि योगी कस्मात् मुच्यते ? कस्माच्च संसारं न अधिगच्छति ?

## योगफलं तत्त्वज्ञानं तदधीनत्वात् ॥ ४ ॥

सूत्रार्थः— योगफलं = योगरूपफलवत्– कर्मयोगाख्यफलपरिणममानं तत्त्वज्ञानं = तत्त्वस्य असंदिग्धानारोपिताबाधिततत्त्वस्य ज्ञानं–तत्त्व ज्ञानं तत् भवति तदधीनत्वात् = तत्त्वज्ञानाधीनत्वात् योगस्य इत्यर्थः ।

भाष्यम्ः—योगफलं इति हि विशेषणं तत्त्वज्ञानस्य । योगो हि फलं तत्त्वज्ञानस्य । यो हि तत्त्ववेत्ता स भवत्येव कर्मयोगी । यथा भगवान् शंकराचार्यः । तत्त्वज्ञानललामभूता इमे भगवत्पादाः क्षणमपि न स्त्यानदुष्टं निन्युः । संन्यासस्य बलवद् पक्षपातिनः इमे तावत् लोकैः मन्यन्ते । आकैलासात् आ च द्वारिकायाः आच ब्रह्मदेशं दशदिक्षु जीवजाततापनिवारणार्थं व्यजनव्रतिनः सन्तः भ्रमन्तः इमे तत्रभवन्तः स्वाचरणात् इदमेव प्रतिपादयन्ति यत् तत्त्वज्ञानं हि योगफलम् । ज्ञानाधीनो हि कर्मयोगी स विशुद्धान्तकरणः स्वाधीनविग्रहः, जिताक्षः सर्वभूतात्मभूतात्मा सन् कुर्वन्नपि न लिप्यते इति वदता भगवताऽपि योगफलं तत्त्ववेदनाधीनं इति प्रतिपादितम् । तथा हि तद्वनस्य भगवतः वचनं—

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।

सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ इति, तस्मात् बन्धसामग्रीविरहात् असौ मुच्यते, मुच्यमानः च ततः एव न संसारं अधिगच्छति इत्यर्थः ॥ ४ ॥

तत्रभवतः तत्त्वविदः कर्मयोगिनः कर्मकरणेऽपि अबन्धनं प्रतिपादयन् सिद्धान्तं दृढयन्नाह—

## संगत्यागात् अहंभावाभावाच्च कर्मालेपः ॥ ५ ॥

सूत्रार्थः—संगत्यागात् = संगस्य = विकारकारकस्य संबंधस्य

त्यागात् = हानात् स्वाभाविकात् च = तथा अहंभावाभावात् = कर्मसु अहंकर्तृत्वस्य प्रध्वंसाभावात् कर्मालेपः = कर्मणां अप्रसक्तिः इत्यर्थः ।

भाष्यम्ः—असंगस्य, स्वरूपेणैव च परिसमाप्ताखिलकामस्य आत्मनः ज्ञानात् संगत्यागः स्वाभाविको भवति । "असंगो ह्ययं पुरुषः" "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" "आत्मानं चेद् विजानीयात् अयमस्मीति पुरुषः। किमिच्छन् कस्य कामाय शरीरं अनुसंज्वरेत्" इत्यादिश्रुतिवचनात् स्वरूपेणैव असंगः = विकारकारक-संबंधरहितः आत्मा । तस्य यथार्थज्ञानात् साक्षात् विलीनाति संगः अनृतरूपः, प्रध्वंसते च अहंभावः मिथ्याप्रत्ययरूपः। यस्य च संगः तिलोदकतां नीतः प्रेतः, अहंभावश्च निवापाञ्जल्युउच्चितः प्रध्वंसतामितः तस्य स्वप्नेऽपि कर्मलेपो न प्रसज्यते । अतः मुच्यते एवासौ न बध्यते । उक्तं हि भगवता मोक्षरहस्यविज्ञेन—

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् ॥
प्रलपन् विसृजन् गृह्णन् उन्मिषन् निमिषन् अपि ।
इन्द्रियाणि इन्द्रियार्थेषु वर्तंत इति धारयन् ॥ इति ॥ ५ ॥

ननु आस्तां तावद् तत्त्वविदः कथा । यो हि अतत्त्वविद् अस्ति तत्त्वबुभूषुश्च तेन किं कर्तव्यम् ? आह—

कर्मणः शुद्धिः ततश्च शान्तिः ॥ ६ ॥

सूत्रार्थः—कर्मणः = ईश्वरार्पितात् कर्मणः शुद्धिः = हृदयस्य शुचिता भवति । च = तथा । ततः = सत्त्वशुद्धेः शान्तिः = विक्षेप-निवृत्तिः भवति । तस्मात् करणीयं कर्म ब्रह्मार्पणभावेन इत्यर्थः।

भाष्यम्ः—यो हि तत्त्वं न जानाति तत्त्वस्य च जिज्ञासुः अस्ति तेन ब्रह्मार्पणबुद्ध्या निखिलं कर्तव्यं कर्म यथाविधि संगं त्यक्त्वा कर्तव्यं भवति । तथाचरणात् चित्तस्य वैमल्यं प्रादुर्भवति । वैमल्यात् च शान्तिं विक्षेपनिवृत्तिरूपां प्राप्नोति । शान्तः सन् तत्त्वानुसंधानप-रायणो भूत्वा मुक्तियोग्यो भवत्येव । तस्मात् कर्तव्यं कर्म यथाविधानम्। तथा च लोकहृदययातनावेत्तुः भगवतः वचनम्—

ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

काये‌न मनसा बुद्ध्या केवलैः इन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति संगं त्यक्त्वाऽऽत्मशुद्धये ।
युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ॥ इति ॥ ६ ॥

स्यादेतत् । कर्तृत्वादिकं तावत् आत्मनः स्वाभाविकं प्रत्यक्षत्वात् । सर्वो हि कर्ता "अहं करोमि" इति अहंकारकर्ता दृश्यते । मम इदं इति संगं कुर्वन्नपि निभाल्यते । अतः स्वभावतः एव कर्तृत्वादिकं अस्तु । प्राप्तदर्शनाः अपि अहंकारममकारौ आस्थीयमानाः विलोक्यन्ते । माहात्म्यं च प्रत्यक्षस्य ज्येष्ठम् । अतः अलं कुत्रापि अदृष्टचरेण निरहंकारेण, निर्ममकारेण वा । कथं मुधा समस्तजगदनुभवविरुद्धं प्रतिपाद--यन् न शंकसे ? एवं प्राप्ते आत्मनः कर्तृत्वादिकं निरस्यन् आह—

न आत्मनः कर्तृत्वादिकं अध्यासस्य तत्त्वास्पर्शित्वात् ॥ ७ ॥

सूत्रार्थः-आत्मनः= परमात्मस्वरूपस्यआत्मनः कर्तृत्वादिकं—कर्तृत्वं, कारयितृत्वादिकं न = नास्ति, कुतः ? अध्यासस्य = आरोपस्य तत्त्वास्पर्शित्वात् = स्वरूपासंपृक्तत्वात् इत्यर्थः ।

भाष्यम्—प्राप्तदर्शनस्यापि अहंकारादिदर्शनात् आत्मनः स्वाभाविकं कर्तृत्वं इति मन्यमानः अद्यापि न तत्त्वप्रदेशं प्रविष्टः। न खलु रज्जुना बद्धो मतंगजः दृष्टः अतः तयैव दग्धया दृष्ट्वाऽपि असौ बन्धमेष्यति इति सत्रपं वचः । स्वाभाविकं चास्तु कर्तृत्वादिकं वयमपि तन्मन्महे । आत्मनः तत् स्वाभाविकं इति तु प्राणैरपि शपामहे । समाधि-सुषुप्ति मोक्षेषु अदर्शनात् । स्वभावं परित्यज्य वर्तमानो भावः अद्यावधि न केनापि दृष्टः । दृश्यते च अयमात्मभावो वर्तमानः स्वाभाविकत्वेन तवानुमतं कर्तृत्वादिकं विहाय समाध्याद्यासु अवस्थासु । निष्प्रपंचे आत्मनि अयं प्रपंचो अध्यस्तसद्भाव एव । न च अध्यासेन अध्यस्तस्य अणुमात्रेणापि विकृतिः भवति । न खलु सर्पाध्यासेन रज्जुः सर्पायते । अध्यासो हि तत्त्वास्पर्शी भवति । यत् तु उक्तं प्राप्तदर्शना अपि अहंकुर्वाणाः दृश्यन्ते तदपि फल्गु । यावज्जीवं सात्विकाहंकारस्य रागद्वेषादिविषशून्यस्य अवर्जनीयत्वात् तस्य च गरलशून्यस्य अहेः इव निर्वीर्यत्वात् शिवस्वरूपवेष्टितस्य च तस्य अवतंसत्वात् निर्दोषत्वमेव । अतः न आत्मनः स्वाभाविकं कर्तृत्वादिकम् ।

ननु कस्य तर्हि कर्तृत्वादिकं ? स्वभावस्य एव । स्वभावश्चात्र त्रिगुणात्मिका प्रकृतिः । स च स्वभावः वासनारूपेण कारयिता, कार्ये

करणसंघातरूपेण कर्ता, नियतिरूपेण च फलप्रापयिता। अतः न आत्मनः न वा परमात्मनः कर्तृत्वादिकं सिद्ध्यति। अज्ञानस्यैव इदं अनवगाह्यं माहात्म्यम्। ज्ञानस्य तु ततोऽपि अधिकं महित्वम्। यतः अज्ञानभासितं ज्ञानमेव बाधते। अज्ञानविलसितं च कर्तृत्वादिकम्। ज्ञानेनैव बाध्यते तत्त्वस्पर्शिना इत्यर्थः। उक्तं हि तत्त्वविज्ञेन भगवता—

"न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥ इति ॥ ७ ॥

कस्तर्हि अज्ञानस्य हानोपायः? वक्ति—

ज्ञानाद् अध्यासप्रहाणिः विरोधित्वात् ॥ ८ ॥

सूत्रार्थः—ज्ञानाद् = यथार्थदर्शनात् अध्यासप्रहाणिः = अज्ञान समारोपस्य प्रणाशः विरोधित्वात् = प्रतिपक्षित्वात् इत्यर्थः।

भाष्यम्—अज्ञानप्रभूतस्य कर्तृत्वादिप्रेरकस्य अध्यासस्य प्रहाणिः तत्त्वदर्शनादेव भवति। तत्त्वं च आत्मा। आत्मनः सम्यक् ज्ञानेनैव आत्मनि निरर्थकं अध्यस्तं कर्तृत्वादिकं जन्ममरणसन्तानपोषकं नश्यति। यतः विरोधि ज्ञानं अज्ञानस्य तमसः इव तेजः। सबलं ज्ञानं निर्बलं च अज्ञानं। सालंबनं ज्ञानं निरवलंबनं च अज्ञानं। सनाथं ज्ञानं अनाथं च अज्ञानम्। अतः ज्ञानेन नश्यति अज्ञानम्। उक्तं च ज्ञानप्रियेण भगवता—

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्।
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः॥
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः।
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।
शुनिचैवश्वपाके च पण्डिताः समदर्शिनः॥ इति ॥ ८ ॥

ननु ज्ञानस्य अज्ञाननाशः एव फलं ततोऽपि अधिकं वा? अधिकं इति निदर्शयन्नाह—

ततः ब्रह्मणाऽभेदः तस्य निर्दोषत्वात् समत्वाच्च ॥ ९ ॥

सूत्रार्थः—ततः = आत्मज्ञानात् ब्रह्मणा = परमात्मना अभेदः = जीवस्येव अविशेषः कुतः? तस्य = ज्ञानिनः निर्दोषत्वात् = रागादिनिखिलदोषरहितत्वात्, च = तथा समत्वात् = एकरसत्वात् इत्यर्थः।

भाष्यम्—ज्ञानं हि ब्रह्मस्वरूपप्रापकं भवति। ब्रह्मविद् ब्रह्मैव भवति इति श्रुतेः। आत्मज्ञानी हि यावज्जीवं स्वात्मनि स्थितोऽपि ब्रह्मण्येवावस्थितो भवति। ततः ऊर्ध्वं तु मुक्तः एव। विदेहमुक्तिः तु साधारणी। अतः न सा शंकनीया। कुतः एतत्? निर्दोषत्वात् समत्वाच्च। रागद्वेषादिकं दोषजातं तावत् अस्य ज्ञानिनः चित्ते नाधुना भवति दोषावहम्। ब्रह्मापि निर्दोषम्। अतः शुद्धे जले सिक्तं शुद्धं जलं यथा तादृगेव भवति तथा शुद्धे ब्रह्मणि निष्ठः अयं महात्माऽपि ब्रह्मरूप एव भवति। समत्वं च सर्वत्रस्थितस्य एकरसस्य अभिन्नस्य ब्रह्मणः भानम्। तद् भानाच्च विगलितभेदसंस्कारः शरीरादिभेदसत्वेऽपि प्राणिषु आत्मदृष्ट्या भेदं नैवानुभवति। इदं अपि तस्य द्वितीयं ब्रह्मलक्षणम्। तस्मात् ब्रह्मभावः ज्ञानस्य फलं साम्यातिशयवर्जितम् इत्यर्थः। तथा च निर्दोषस्य समस्य भगवतः वचनं—

इहैव तैर्जितः सर्गः येषां साम्ये स्थितं मनः
निर्दोषं हि समं ब्रह्म तस्मात् ब्रह्मणि ते स्थिताः। इति ॥ ९ ॥

किञ्चान्यत्?

## प्रकृतिस्पर्शस्य दुःखयोनित्वात् तत्त्वे एव रमणम् ॥ १० ॥

सूत्रार्थ :—प्रकृति०= प्रकृत्याः देहेन्द्रियविषयरूपेण परिणतायाः संबंधस्य दुःखयोनित्वात् = त्रिविधदुःखकारणत्वात् तत्त्वे = आत्मनि एव सुखस्वरूपे रमणम् = शाश्वती रतिः भवति तत्रभवतः ब्रह्मरूपस्य कर्मयोगिनः इति।

भाष्यम्:—प्रकृतिस्पर्शो हि दुःखयोनिः। स च हेयः। तद् हानं च आत्मनि रमणादेव। आत्मनः सुखस्वरूपत्वात्। येन हि आत्मा न गृह्यते न जातुच्चित् तेन रमणीया प्रकृतिः परित्यज्यते। एवं जानन् अयं कर्मयोगी महात्मा देहेन्द्रियविषयादिरूपेण परिणतां प्रकृतिं अस्पृशन्नेव अस्पृश्यां दुःखनिदानभूतां, स्वात्मनि एव रमते। स्वात्मरतिः सुखावहा। इयं शाश्वती स्वरूपानन्दानुभूतिः ज्ञानस्य अधिकतरं फलम् इत्यर्थः। उक्तं हि सुखसागरेण भगवता—

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्।
स ब्रह्मयोगयुक्तात्मा सुखं अक्षय्यमश्नुते ॥
ये हि संस्पर्शजाःभोगाः दुःखयोनय एव ते।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥

शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ।
योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ इति ॥ १० ॥
कर्मयोगमहिमानं प्रशंसन् अध्यायार्थसमाप्तिं आह—

विदितात्मनः जीवन्मुक्तिः एव ॥ ११ ॥

सूत्रार्थः—विदितात्मनः = ज्ञातात्मतत्त्वस्य = जीवन्मुक्तिः = जीवन्नेव मोक्षः का कथा तु विदेहमुक्तेः इत्यर्थः ॥

भाष्यम्—यो हि आत्मानं जानाति जानानश्च कर्मयोगमारूढो भवति सः जीवन्नेव मुक्तिं अनुभवति । जीवन्मुक्तिश्च विदेहमुक्तिं निःसंशयां करोति । अतःमुमुक्षुणा कर्मयोगफलप्रसु आत्मज्ञानं अधिगन्तव्यमित्यर्थः । उक्तं च सदा मुक्तेन भगवता—

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥
स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥
यतेन्द्रियमनो बुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छभयक्रोधः यः सदामुक्त एव सः
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरं
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ इति ॥ ११ ॥
॥ इति कर्मसंन्यासयोगः ॥

## अथ आत्मसंयमयोगः ॥

कर्मयोगो हि जीवनदर्शनम् । आत्मनः यथार्थं ज्ञानं प्राप्तव्यं, विश्वप्रेम्णि स्नातव्यं, फलनिरपेक्षतया च यावज्जीवं वर्तनीयं इति हि जीवनदर्शनम् । तच्च दर्शनं योगापेक्षम् । योगश्चात्र मनसः समाधिः । स्थूलात् स्थूलस्यापि वस्तुनः तत्त्वं असमाहितस्य कालत्रयेऽपि नोपावर्तते । सूक्ष्मात्सूक्ष्मतमस्य परमात्मस्वरूपात्मनः दर्शनं तन्मूलं च विश्वप्रेम्णः स्थैर्यं, तद्भवं च कर्मयोगस्य आचरणं विना योगेन सिध्यति

इति तु किमु वक्तव्यम्। तस्मात् अपेक्ष्यते योगाभ्यासः। सर्वेषां योगानां पृष्ठभूतं तं योगं व्याचिख्यासुः निखिलजगदुद्दिधीर्षया जगद्गुरुः श्रीकृष्णः सकलयोगप्रवीणः पूर्वभूमिकां प्रणयन् पूर्ववृत्तं तावत् स्मारयति इति उपन्यस्यन् आह:—

त्यागो हि फलस्य न कर्मणः शक्यस्यैवोपदेशात् ॥ १ ॥

सूत्रार्थ—त्यागः = परिहारः फलस्य हि = एव न = न तु कर्मणः = प्राप्तस्य कर्तव्यस्य, कुतः ? शक्यस्यैवोपदेशात्=संभाव्यस्य एव उपदेष्टुं उचितत्वात् इत्यर्थः ॥ १ ॥

भाष्यम्—शक्यं हि उपदिश्यते न अशक्यम्। शक्यं च कर्मणः फलाननुसंधानम् न कर्मणः स्वरूपतः परिवर्जनम्। अतः श्रेयोर्थी कर्मफलं जह्यात् न तु कर्म। तथा च उक्तं भगवता यदुनन्दनेन—

अनाश्रितः कर्मफलं कार्यं कर्म करोतियः

स संन्यासी च योगीच न निरग्निः न चाक्रियः ॥ इति ॥ १ ॥

ननु न अभिलाषमात्रेण फलस्य त्यागः संभवति। फलानुसंधानं च न केवलं स्वाभाविकं न केवलं नैसर्गिकं एव अपि तु कर्मप्रयोजकम्। न हि फलमननुसंधाय कोऽपि व्याप्रियमाणः दृश्यते। अतः फलत्यागस्य कः उपायः। एवं प्राप्ते ब्रूते—

त्यागस्य योग्यता योगात् ॥ २ ॥

त्यागस्य = कर्मफलपरिहारस्य योग्यता = अधिकारः योगात् = मनसः समाधिरूपात् योगात् संभवति इत्यर्थः

भाष्यम्—सत्यम्। फलाननुसंधानं न केवलं अभिलाषोपनीतं भवति। स्वाभाविकः एव स्फुरति फलविचारः। न तेन कोऽपि प्रत्यवायः। न खलु गीतोपदेशः फलविचारं वारयति निषेधयति वा। प्रत्युत कर्मारंभात् प्राक् पूर्णविचारं विवेकं च विदधाति। न हि असमीक्ष्यकारिता विचाररमणीया। विवेकवधावहत्वात्। यच्च कर्मयोगः कथयति तच्च विचाररमणीयम्। पूर्वं अमुकस्य कर्मणः अमुकं फलं भविष्यति इति यावद्बुद्धिबलोदयं विचार्य पश्चात् योगमयेन चेतसा सहृदयभावेन फलविचारं परित्यज्य वैज्ञानिक्या रीत्या निवर्तयितव्यं सकलं कर्तव्यतया प्राप्तं कर्म। कृत्वा च यथार्थतया कर्म विस्मरणीयं तत्। यतः

कृतस्य कर्मणः फलं देशकालनिमित्तापेक्षं फलप्रदातुः भगवतः अन्तर्यामिणः योजनानुसारं भविष्यत्येव अतः अवश्यंभाविनः फलस्य प्रतीक्षां हित्वा द्वितीयक्षणप्राप्तस्य-कर्मणः कर्तव्यस्य करणे दत्तहृदयो भूयात् । न हि प्रतीक्षया, त्वरया, अस्माकं हठाग्रहेण वा, चित्तविक्षेपेण वा अतिचिन्तया वा भगवान् सर्वभूतहिते रतःआत्मनः योजनां परिवर्तयति । देशकालनिमित्तादिकं वा संक्षिपति । योजना च भगवतः भद्रतमा मंगलतमा च । अतः करणकाले ऊर्ध्वं वा फलानुसंधानं निरर्थकं विश्वयोजनां विक्षोभयति । विश्वविक्षोभकारी च न शांति लभते । अतः पूर्वं सुविचार्य कृत्वा यथाविधि, फलगर्धां संन्यस्य उत्तरोत्तरे कर्मणि प्रवर्तेत । अपि च फलप्राप्त्या स्वरूपे न कोऽपि आवापः उद्वापो वा भवति इत्यपि विचार्यम् । अस्पृष्टो हि कर्मणा फलेन वा सर्वेषां आत्मा सदाकालम् । अतोऽपि फलविषयां आकांक्षां मनसः कण्डूतिरूपां अशिष्टसुलभां ज्ञानबलेन विषहेत धीरः । योगाच्चेयं योग्यता आयाति । तस्मात् योगं युञ्जीत । यथाह भगवान् योगेश्वरः—

"यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।

न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन । इत्यारभ्य समबुद्धिर्विशिष्यते" इत्यन्तेन संदर्भेण ॥ १ ॥

ननु कोऽयं योगो नाम अत्र अभिप्रेतः ? कथं शंकसे ? अस्यार्थस्तु प्रसिद्धः एव । न । पंडिता अपि योगशब्दस्य अर्थावधारणे मुह्यन्ति च कलहायन्ते च । कलहायमानाश्च स्वान् स्वान् शंखान् पृथक् पृथगेव ध्मायन्ति । वराको लोकः च जिज्ञासुः भैरवेण तेषां निनादेन बिभ्यति । बिभ्यन् विप्रतिपद्यमानश्च अनर्थं ऋच्छति । अतः योगशब्दस्य अर्थावधारणं करणीयम् । ओम् इति स्वीकुर्वन्आह—

**सर्वेषु योगेषु अनुस्यूतत्वात् सर्वमूलत्वाच्च योगोऽत्र पातञ्जलोक्तः ॥२॥**

सर्वेषु = सकलेषु योगेषु = योगनाम्ना विख्यातेषु ज्ञानादिषु जीवन निरीक्षणवर्तननिष्ठासु अनुस्यूतत्वात् = प्रोतत्वात् च = तथा सर्वमूलत्वात् = समेषां योगानां मूलत्वात् = जन्मभूमित्वात् अत्र = अस्मिन् षष्ठाध्याये इतरत्रापि च योगः = समाधानरूपः द्विविधो योगः पातंजलोक्तः = पातंजलयोगदर्शनोक्तः वेदितव्यः इत्यर्थः ।

भाष्यम्—मा नाम कोऽपि अनर्थं एतु मा च भीतिं गच्छतु विदुषां वाचो वैचित्र्यात् । यतः विदुषां किमशोभनं । परंतु विप्र-

तिपत्तौ स्वानुभवो वा विवेको वा गुरुः ज्ञेयः। चर्चादशायां या विप्रतिपत्तिः भासते विलीयते सा प्रयोगदशायाम्। अतः सर्वैः यथाशक्ति प्रयोगवीरैः भवितव्यम्। योगश्च अत्र पातंजलोक्तः ज्ञातव्यः। यतः सर्वेष्वपि ज्ञानयोग–कर्मयोग भक्तियोगादिषु योगेषु पातंजलयोगस्य व्याप्तिः दृश्यते। न केवलं तस्य तेषु प्रोतत्वमेव मूलं अपि सर्वेषां असौ एव। विना समाधिं एकोऽपि योगः स्वरूपमेव न लभते। तस्मात् अत्र इतरत्र सर्वत्र च ओतप्रोतत्वात् समेषां योगानां श्रीगणेशत्वाच्च पातंजलो योगः अत्र ग्राह्यः।

स च पातंजलो योगः प्रमाणादिवृत्तिनिरोधरूपः अभ्यासवैराग्योपायकः सम्प्रज्ञातासंप्रज्ञातभेदभिन्नः कैवल्यप्रयोजनकः सर्वथा आदरणीयः सर्वैरेव मतिमद्भिः जिज्ञासुभिः गीतायाः अर्थस्य। यतः भगवती गीता तस्यैव योगस्य परममनोहरं फलं वर्तते। असम्प्रज्ञातसमाधिदशायां लब्धपरमात्मदर्शनो हि महाभागो मानवः तदपेक्षया व्युत्थानभूतायां सम्प्रज्ञातदशायां वर्तमानो हि यावदायुः ज्ञानी इति भक्तः इति तत्रभवान् कर्मयोगीति च व्यवह्रियते—

अरुरुक्षोः मुनेर्योगं कर्मकारणं उच्यते

योगारूढस्य तस्यैव शमः कारणमुच्यते, इत्यारभ्य "शान्ति निर्वाणपरमां मत्संस्थामधिगच्छति इत्यन्तम्। इतरत्रापि च भगवता योगिजनहृदयनिकेतेन यद् उक्तं संक्षेपेण तत् व्यासेन दृष्टव्यं पातंजलयोगदर्शने इत्यलं अत्र पल्लवितेन। इष्टोऽपि अत्रत्यो विस्तरः ग्रन्थगौरवभिया परित्यज्यते। कर्णहृत्या आलोचनं तु अस्माकं योगपत्रावल्यां दृष्टव्यम्॥ ३॥

ननु योगं व्याचिख्यासुना भगवता आहारादीनां मीमांसा कथं क्रियते? अप्रस्तुता इयं भाति। अतः उत्तरं पठतिः—

### योगे युक्ततायाः आग्रहः फलसाधकत्वात्॥ ४॥

योगे = योगाभ्यासे युक्ततायाः = आहारविहारादीनां मितताया: आग्रहः। कुतः? फलसाधकत्वात् = योगफलस्य दुःखहानेः प्रापकत्वात् इत्यर्थः

भाष्यम्—सर्वासु कलासु तावत् जीवनकला श्रेष्ठतमा वर्तते। जीवनकला हि सर्वासां तासां एकायनं समुद्रः इव सरिताम्। कला च व्यवस्थिति–समप्रमाणतादिकं अपेक्षते। समप्रमाणविधुरा व्यवस्थिति-

रहिता च कृतिः न कलाभिधानं लभते। अतः कलाकृतौ, घटकेषु अवयवेषु समप्रमाणतादयः अपेक्ष्यन्ते। जीवनं अपि कला, अतः तस्याः जीवन-कलायाः अपि घटकेषु अवयवेषु आहारविहारादिषु शयनजागरणादिषु च युक्तता भवितुमर्हति। तदभावे च कदर्थिता स्यात् कला। दुःखहानिः हि युक्ततायाः योगे फलम्। अतः अतीवोचितः युक्ततायाः आग्रहः इति मन्तव्यम्। तथा च सकलकलाकोविदस्य भगवतः वचनम्ः—

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥ इति॥ ४॥

स्यादेतत्। योगाभ्यासनिम्नं अपि मनः न द्रागित्येव वशमायाति। क्वचित् सत्त्वे क्वचित् रजसि क्वचित् च तमसि रममाणं पलमिते कालेऽपि विषयाद् विषयं गच्छत्, निमिषमात्रेण व्योम्नः पातालं पातालाच्च व्योम्नि दोलायमानं मनः, न स्थेमानं भजति विषादं च जनयति, अभ्यासे विरागं च उत्पादयति, निर्विण्णतां च उत्साहशातिनीं आवहति, संचितां अपि महतीं पुण्यसंपत्तिं क्षणेन विधमति। अतः अनुपायो योगः मनसः समाधौ। एवं प्राप्ते आश्वासयन् आहः—

फलान्तयोगाभ्यासाग्रहः दुःखवियोगकरत्वात् ॥ ५ ॥

फलान्त० = विपाकान्तः योगाभ्यास–आग्रहः रक्षितव्यः कुतः? दुःखवियोगकरत्वात् = फलान्तो योगाभ्यासः दुःखवियोगकरो भवति तस्मात् इत्यर्थः।

सत्यं। मनश्चरितं तावत् दुर्ललितम्। सर्वदमनं मनः दान्तं भवत्येव चेत् फलान्तस्य अभ्यासस्य आग्रहः रक्षितः स्यात्। दान्ते च मनसि दुःखवियोगः भवत्येव। अतः न विरन्तव्यम्। यावत्फलप्रसूतिः अभ्यासः कर्तव्यः। फलं च वक्ष्यते। एवं अनिर्विण्णेन चेतसा अभ्यस्तोयोगः दुःखवियोगकरो भवति। तस्मात् अभ्यस्यः योगः इत्यर्थः। उक्तं च वशीकृतात्मना भगवता—

यदा विनियतं चित्तं आत्मन्येवावतिष्ठते।
निस्पृहःसर्वकामेभ्यः युक्त इत्युच्यते तदा॥

यथा दीपो निवातस्थो नेङ्गते सोपमास्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपिविचाल्यते ॥

तं विद्याद्‌ दुःखसंयोगवियोगं योगसञ्ज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ इति ॥ ५ ॥

ननु एवं भूरिपरिश्रमेण अभ्यस्तस्य योगस्य किं फलम् ? तत्राह:-

## योगपरिपाकात् आत्मदर्शनम् ॥ ६ ॥

सूत्रार्थः-योगपरिपाकात् = योगस्य परितः पाकात् सिद्धात् योगात् आत्मदर्शनम्=आत्मनःपरमात्मस्वरूपेण दर्शनम्-अनुभूतिःभवति इत्यर्थः।

भाष्यम्:—यदा योगः परिपक्वो भवति भवति तदा आत्मनः सुस्पष्टं दर्शनम्। निर्मले दर्पणे यथा प्रतिबिम्बः तथा विमले सति हृदये आत्मा दृश्यते। तदिदं योगस्य सिद्धिंगतस्य परमं फलम्। अयमर्थः। विरामप्रत्ययाभ्यासपूर्वकः संस्कारशेषरूपः असम्प्रज्ञातो योगः निर्बीज-समाधि-अपरपर्यायो यदा सहजो भवति तदा आत्मनः कुसुमापाये मणेरिव कुलीनस्य स्वरूपावस्थितिः भवति। तदा च गुणाधिकारः अस्तमेति। क्लेशाश्च दग्धाः भवन्ति। कर्माशयश्च वंध्यवीर्यो जायते। विपाकश्च कर्मणां छिन्नपर्वा भवति। स्वरूपावस्थित्यनुभूतिसमृद्धश्च सर्वभूतेषु आत्मनि च अन्तर्यामिरूपेण अवस्थितं परमात्मानं साक्षात्करोति। तदानन्दं च भुञ्जानः संप्रज्ञातरूपव्युत्थाने यथावकाशं आचरन् कर्मयोगं यावज्जीवं तिष्ठति। नाधुना तस्य कर्मणः भीतिः। भित्तिलग्न-प्रकाशवत् तस्य चित्तं तावत् निर्वासनं सत् निरंजनं सत् न कुत्रापि स्वप्नेऽपि सज्जते। परमात्मनि गंगौघः इव समुद्रे विलीनो भवति। परमात्मनि निमज्जनं उन्मज्जनं च तस्य अधुना स्वाधीनम्। एवंभूतो योगी तावत् भगवत्याः वसुंधरायाः सौभाग्यतिलकरूपः भवति। ब्रह्मात्मानुभवावसाना हि योगविद्या। तस्मात् आत्मदर्शनं

हि परमलोभनीयं फलं संसिद्धस्य योगस्य। तथा च उक्तं भगवता आनन्दाब्धिना—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ इति ॥ ६ ॥

स्यादेतत् । स्वरूपावस्थितिः योऽत्रस्य परमो लाभः। सा च स्वरूपेणैव आनन्दमयी। तां नित्यनिरतिशयनिरुपाधिकानन्दमयीं अवस्थां हित्वा को हि स्यात् यो दुःखबहुले लोकेऽस्मिन् संप्रज्ञातावस्थायामपि आगन्तुं इच्छेत्। न खलु हृद्हिमालयनिष्ठः जगज्ज्वालामुखे आत्मानं निरर्थकं निपातयति। निपातयन् वा प्राज्ञो भवति। तस्मात् योगोत्तरं संन्यासः एव रूपान्तरेणायातः। आगच्छतु स्वाभाविकश्चेत् संन्यासः। एतु च वराकः कर्मयोगः हठात् प्रतिपाद्यमानः आगन्तुं अनिच्छन् अपि बलाद् आनीयमानः। एवं प्राप्ते आह—

## योगस्य प्रान्तभूमित्वात् आत्मौपम्येन वर्तनं श्रेष्ठम् ॥ ७ ॥

योगस्य = संसिद्धस्य समाधेः प्रान्तभूमित्वात् = चरमसीमत्वात् आत्मौपम्येन = स्वदृष्टान्तेन वर्तनं = वृत्तिः आचरणं श्रेष्ठम् = अनुत्तमम् इत्यर्थः ॥

भाष्यम्ः—संसिद्धस्य योगस्य प्रान्तभूमिः तावत् आत्मौपम्येन वर्तने कृतकृत्यतां प्राप्नोति। न खलु प्राप्तात्मानन्दः कृपणो भवति। आत्मानन्दश्च समेषां साधारणी संपत्। अतः आत्मानन्दवितरणं हि ज्ञानिनः सदाव्रतम्। तद्वितरणं च न हिमालयस्य कस्यामपि गुहायां वासेन, वा समाजस्य उपकारकर्तुः परिहारेण वा दुःखनिम्नस्य लोकस्य वा तर्जनेन सिध्यति। आत्मदर्शी च न किमपि विजुगुप्सते। अतः स्वरूपभूते जगति वसन् समाजे च परिभ्रमन्—लोकस्य सुखं गुणयन्, दुःखं च विभजन्, आत्मौपम्येन सर्वत्र चराचरेषु समं पश्यन्, त्रिगुणस्वतंत्रोऽपि वेदापराधीनोऽपि विधिनिषेधं योग्यं परिपालयन्, लोकमर्यादां रक्षन्, यावज्जीवं सुखमग्नो भवन् अन्यान् अपि आनन्दद्रिद्रान् आनन्दसमृद्धान्

कुर्वन् वर्तते। अतः मंगलमयः कर्मयोगी एव श्रेष्ठः इत्यतिरोहितं मतिमतां इत्यर्थः । तथा च सर्वभूतात्मभूतात्मभावेनवर्तनशीलस्य भगवतः वचनम्—

आत्मौपम्येन सर्वत्र समंपश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं सयोगी परमो मतः ॥ इति ॥ ७ ॥

ननु चारुतमं दृश्यते योगस्यमाहात्म्यम्। फलश्रुतिरोचना च इयं योगवाक्। तथापि योगस्य सिद्धिः न बाललीला । परिद्धानः एव जानाति उपानच्छूलम्। अर्जुनमुखेन प्रकटितां इमां समस्तस्य जगतः वेदनां पूर्वपक्षयन् समाधत्ते—

असाध्यो योगः चांचल्यादिविघ्नत्वात्
इति चेन्न वैराग्याभ्यासाभ्यां साध्यत्वात् ॥ ८ ॥

असाध्यः = साध्यतां अतिक्रान्तो-दुःसाध्यः योगः = समाधि-अपरपर्यायो समवर्तनरूपो योगः । कुतः ? चांचल्यादिविद्धत्वात् = चापल्यादिविद्धत्वात् मनसः इति चेत् = एवं चेत् आस्थीयेत तर्हि न = नैवं अंगीकर्तव्यम् । कुतः ? वैराग्या० = वैराग्याभ्यासाभ्यां समुच्चिताभ्यां साध्यत्वात् इत्यर्थः ।

भाष्यम्—सत्यम्। योगस्य सिद्धिः न अभिलाषमात्रसुलभा। यतः मनः चंचलं, प्रमथनशीलं दुर्भेद्यं च विद्यते। पारदस्य इव चंचलस्य, महिषस्य इव प्रमथनशीलस्य, वज्रस्य इव दुर्भेद्यस्य मनसः समाधिः चेत् अभिलाषमात्रोपनीता स्यात् वायोः अपि मुष्टिग्राह्यत्वं भवेत्। दुष्करत्वात् च वशीकारस्य असाध्यो योगः। इयं हि वेदना भूतमात्रस्य। तथापि पंगूकृतपराक्रमो मा भूयाः। मा च काल्पनिकेन पराजयेन आत्मविश्वासं त्यजेः। अद्य वा अब्दशतान्तेऽपि वा मनसः समाधिः साध्यः भविष्यत्येव। उपायौ च विद्येते। उपायं अविनियुञ्जानः चर्चया एव चेत् हृतसत्वो भविष्यति ध्रुवं मनसः विजयं आत्मपराजयं च स्वीकरिष्यसि। अतः खेदं परित्यज्य, उत्साहं परिष्वज्य, उपायानुष्ठानतत्परो भूया-इत्यर्थः। उपायौ च वैराग्याभ्यासौ स्तः। दीर्घकालनैरन्तर्यसत्कारासेवितेन अभ्यासेन यमनियमादीनां बलीयसा च वितृष्णतारूपेण वैराग्येण दृढीभूतेन अवश्यं वशमेति मनः। तस्मात् मा खिदः। आत्म-विश्वासनिर्भरः सन् विजयप्रस्थानं कुरु इत्यर्थः। तथा च अर्जुनस्य खिन्नस्य भगवतः च अज्ञातखेदस्य वचनानि—

" योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन...
तस्याऽहं निग्रहं मन्ये वायोरिव सुदुष्करम् "
चञ्चलं हि मनः कृष्ण । प्रमाथि बलवद् दृढम् ॥
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥
असंशयं महाबाहो ! मनोदुर्निग्रहं चलम् ॥
अभ्यासेन तु कौन्तेय ! वैराग्येण च गृह्यते ॥ इति ॥ ८ ॥

ननु नायं योगप्रयोगः अतिरुद्रादिप्रयोगवत् एकादशाहः साध्यः। जन्मजन्मान्तरविस्तीर्णोऽयं निसर्गतः एव श्रद्धां च वीर्यं च उत्साहं च प्रज्ञां च शिथिलयिष्यति । न च एतावदेव । योगपथि प्रस्थितः मध्ये एव कदाचित् विरमेत । प्रमादेन वा आलस्येन वा श्रद्धाभंगेन वा बलाभावेन वा इतरेण वा केनचित् निमित्तेन अदृष्टेन वा दृष्टेन वा मृत्युना वापि ग्रस्येत । एवं सति अतोभ्रष्टस्य ततोभ्रष्टस्य अस्य वराकस्य दयनीया स्थितिः भविष्यति । अतः तमसि गाढे प्लवनं विवेकविधुरं एव सेत्स्यति । स्वयंवरे अवृतानां इव राजकुमाराणां तेषां दशा साधुशोच्या भविष्यति । अतः अलं भयावहेन अनिश्चित-फलेन योगाभ्यासेन । एवं प्राप्ते कर्मयोगमाहात्म्यं पुनः श्रावयन्नाहः—

कृतस्याविनाशात् सत्वाच्च आत्मनः न योगभ्रेषाद् हानिः ॥ ९ ॥

सूत्रार्थ—कृतस्य = आचरितस्य अविनाशात् = अलोपात् च = तथा आत्मनः = स्वरूपभूतस्य हानोपादानरहितस्य आत्मनः सत्वात् = त्रिकालाबाधितत्वात् हेतोः योगभ्रेषात् = योगस्य च्यवनात् न हानिः = न कोऽपि अलाभः भवति इत्यर्थः ।

भाष्यम्:—कल्याणपथप्रवासिनस्तावत् न कदापि दुर्गतिः भवति । योगमार्गश्च कल्याणपूर्णः अतः तत्र प्रस्थितस्य मध्ये भ्रेषादपि मरणेन वा इतरेण वा केनचिद् कारणेन वा न श्रेयोहानिः भवति । कुतः ? कृतस्य अविनाशात् । कृतं हि सुकृतं वा दुष्कृतं वा आमोक्षं तिष्ठति न नश्यति । कृतस्य नाशे हि अनवस्था प्रसज्येत । कृतं हि उपतिष्ठति जन्मजन्मान्तरे । वत्सः इव गां कृतं कर्म कर्तारं अन्विष्य फलरूपेण परिष्वजते एव । तस्मात् आरब्धस्य अविनाशात् तस्य च जन्मान्तरे उपस्थानात् न क्वापि हानिः । किंच आत्मनः सत्वादपि कृतं नैव विनश्यति । कालत्रयेऽपि अविनश्वरः आत्मा स्वकृतं स्वयमेव

प्राप्नोति । अतः अर्धकृतेऽपि अपूर्णेऽपि मध्ये पातात् न हानिः । इदमेव माहात्म्यं कर्मयोगस्य यत् अत्र अभिक्रमस्य नाशो नास्ति प्रत्यवायस्य च प्राप्तिः नास्ति, स्वल्पमप्यस्य धर्मस्य महतो भयात् त्रायते इति । तथा च शंकासमाधानरूपाणि शिष्यगुरुवचनानिः—

अयतिः श्रद्धयोपेतः योगाच्चलितमानसः
अप्राप्य योगसंसिद्धिम् कां गतिं कृष्ण गच्छति ।
कच्चिन्नोभयविभ्रष्टः छिन्नाभ्रमिव नश्यति
अप्रतिष्ठो महाबाहो विमूढः ब्रह्मणः पथि ॥
पार्थ ! नैवेह नामुत्र विनाशस्तस्य विद्यते
न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति ॥
प्राप्यपुण्यकृतां लोकानुशित्वा शाश्वतीः समाः
शुचीनां श्रीमतां गेहे योगभ्रष्टोभिजायते ॥
अथवा योगीनामेव कुलेभवति धीमतां
एतद्धि दुर्लभतरं लोके जन्म यदीदृशमित्यन्तानि ॥ ९ ॥

किञ्च ?

**पौर्वदेहिकबुद्धिसंयोगस्य लाभात् पुनरनुसंधानं सुप्तोत्थितवत् ॥१०॥**

सूत्रार्थ—पौर्वदेहिक. = पूर्वस्मिन् देहे भवः पौर्वदेहिकः यो बुद्धेः = संयोगः तस्य लाभात् = अन्यस्मिन् जन्मनि प्राप्तेः पुनरनुसंधानम् = पूर्वदेहेत्रुटितायाः योगसाधनायाः पुनः अनुसंधानं भवति सुप्तोत्थित-वत् = पूर्वेद्युः सुप्तस्य अपरेद्युः उत्थितस्य च यथा अपूर्णस्य कर्मणः अनुसंधानं भवति तद्वत् अत्रापि ज्ञेयं इत्यर्थः ।

भाष्यम्—पूर्वजन्मनि कृतं न केवलं उपतिष्ठते अपितु यतः अव-शिष्टं ततः ऊर्ध्वं आरभते स्वविकासं योगभ्रष्टः । यतः पौर्वदेहिकस्य बुद्धिसंयोगस्य लाभं प्राप्नोति जीवात्मा । भूयः च संसिद्धौ यत्नवान् भवति । अतः भ्रष्टः अपि अशोच्यः एव । तत्र उदाहरणं सुप्तोत्थितस्य पुरुषस्य । यथा सुप्तः उत्थाय पुनरारंभं करोति तथा अयमपि मृत्यु-निद्रानिमीलितनयनः ततः जन्मान्तरे अपूर्वे देहे च ईश्वरलीलायोजना-नुसारं उन्मीलितनयनः सन् आसिद्धि यतते दर्शनाय । दर्शनसंपन्नश्च भूत्वा विमुच्यते इत्यर्थः । तथा च उक्तं अप्रतिहतदृष्टिवता भगवता—

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परांगतिम् ॥ १० ॥

ननु सर्वेषु योगिषु कः श्रेष्ठः ? आहः—

स्वरूपावस्थितः श्रेष्ठः अवधिदर्शनात् ॥ ११ ॥

सूत्रार्थः—स्वरूपावस्थितः = परमात्मावस्थितः योगी श्रेष्ठः = सर्वोत्तमः कुतः ? अवधिदर्शनात् = काष्ठादर्शनात् = इत्यर्थः

भाष्यम्:— सर्वेषु योगिषु तावत् स्वरूपभूते परमात्मनि विश्वरूपे वर्तमानः कर्मयोगी सर्वोत्तमः । पुरुषात् न परं किञ्चित् सा काष्ठा सा परागतिः इति काष्ठायाः श्रुतौ दर्शनात् । परमात्मनि वर्तनं हि कर्मयोगः परमात्मा च विश्वरूपः । अतः विश्वरूपेण वर्तमानस्य परमात्मनः स्वरूपे नित्यसंस्थितः कायेन वाचा मनसा तमेव तर्पयन् कर्मयोगी सर्वेषु योगिषु मूर्धन्यः । तथा च आह योगिशिरोमणिः भगवान्—

तपस्विभ्योऽधिको योगीज्ञानिभ्योऽपिमतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां समे युक्ततमो मतः ॥ इति ॥ ११ ॥

॥ इति आत्मसंयमयोगः ॥

## अथ ज्ञानविज्ञानयोगः ॥

योगिहृत्पंकजावासो भगवान् पूर्वाध्यायान्ते " यो मां भजते सः मे युक्ततमः मतः " इति उपदिदेश । भजनं च स्वरूपविज्ञानापेक्षम् । योहि यं न जानाति न स तस्मिन् रज्यते । रागाभावे च न भजति । अतः स्वरूपज्ञानं हि भक्तिपात्रस्य अनिवार्यम् । स्वरूपविज्ञानं च दुर्लभं इति सूचयन् स्वस्य अपरिमितं कारुण्यं व्यंजयन् यदाह भगवान् तदनुवदन् सप्तमाध्यायं प्रक्रमते—

## दुर्लभतमं तत्त्वज्ञानं सौक्ष्म्यावधेः ॥ १ ॥

सूत्रार्थः—तत्त्वज्ञानं = स्वरूपस्य ज्ञानं दुर्लभतमं = दुःखेन लभ्यतमं दुष्प्रापतमं, कुतः ? सौक्ष्म्यावधेः = सौक्ष्म्यस्य-सूक्ष्मतत्वस्य अवधेः = प्रान्तभूमित्वादित्यर्थः ।

भाष्यम्ः—ज्ञानपूर्विका हि भक्तिः । सेवाप्रधानं भजनं सेव्यस्य ज्ञानं अपेक्षते । ज्ञानाद् भक्तिः ततः तस्याः अनुरूपं महिमामयं वर्तनं भवति अतः भक्तेन भक्तव्यस्य ज्ञानं संपादनीयं भवति । ज्ञानं च प्रकृतं अतिदुर्लभम् । न हि स्वरूपभूतस्य परमात्मनः ज्ञानं द्रागित्येव सर्वेषां सुकरम् । यतः स्वरूपभूते परमात्मनि सौक्ष्म्यस्य अवधिः वर्तते । सूक्ष्मा प्रकृतिः । सूक्ष्मतरश्च प्रत्यगात्मा । सूक्ष्मतमश्च प्रत्यगात्मस्वरूपभूतः अंतर्यामित्वेन वर्तमानः परमात्मा समेषां साक्षीभूतः । तस्य परमात्मनः स्वरूपविज्ञानं स्थूलमतिभिः अप्राप्यमेव । सूक्ष्मबुद्धिमतां पण्डितानामपि प्रतिकारकरं स्वरूपविज्ञानं, का कथा तु निरंतरस्थूलतमनिष्ठावतां साधारणजनानाम् । अतः सूक्ष्मतमत्वात् दुर्ज्ञेयः परमात्मा । ततश्च दुराराध्यः प्राकृतानाम् । अतः परमकारुणिकः भगवान् स्वरूपविज्ञानं स्पष्टयन् समेषां हितचिन्तको विज्ञेयः ॥ तथा च तस्य वचनम्—

मय्यासक्तमनाः पार्थ योगं युञ्जन् मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञानस्यसि तच्छृणु ॥
ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानाम् कश्चिन्मां वेत्ति तत्वतः ॥ इति ॥ १

भगवत् स्वरूपं विवृण्वन् आह:—

## सर्वशक्तिमत्त्वं भगवतः उत्पत्त्यादेः ॥ २ ॥

सूत्रार्थः—भगवतः = "ऐश्वरस्य समग्रस्य" इति न्यायेन षडैश्वर्यसमन्वितस्य परमपुरुषस्य परमात्मनः सर्वशक्तिमत्त्वं = सर्वबलवत्त्वं ज्ञेयं कुतः ? उत्पत्त्यादेः = सर्वजगत्सृष्ट्यादिकारणत्वात् इत्यर्थः ।

भाष्यम्ः—कार्यं हि इदं जगत् प्रकृतिपुरुषात्मकम् । कार्यधर्माणां तत्र अनुभूयमानत्वात् । यादृशं च कार्यं तादृशेनैव कारणेनापि भवित

व्यम्। गुरुतरसंरंभात्मकं हि कार्यं तादृशं एव कारणं अनुमापयति। तादृशं च कारणं सर्वशक्तिमत् एव भवितुमर्हति। यत्र हि सर्वशक्तिमत्ता स्वाभाविकी स एव जगदुत्पत्तिस्थितिलयलीलः भगवान्। अनुमानं तु श्रुतिगौणम्। श्रुतिरपि इममेवार्थं वदति। "यतो वा इमानि भूतानि जायन्ते" इत्यादिः। श्रुत्यर्थं अनुवदन् हि तर्कः अवधेय-वचनो भवति। तस्मात् श्रुतेः अनुमानाच्च भगवतः कारणत्वात् सर्वश-क्तिमत्वं सिद्धमेव। यो हि सर्वज्ञः सर्वशक्तिमान् कर्तुमकर्तुमन्यथाकर्तुं समर्थः स्वतंत्रश्च निरंकुशैश्वर्यसमन्वितः अनन्तकल्याणगुणसंपन्नोऽपि निर्गुणः स एव भगवान् विचित्रया आत्मशक्त्या प्रकृतिपुरुषरूपया रममाणः स्वयोजनानुसारं क्वचित् स्पष्टः क्वचिदस्पष्टः क्वचिद् आवि-र्भूतः क्वचित् च तिरोभूतः स्वात्मन्येव स्वात्मानं विभजन् स्वात्मार्थमेव स्वात्मनैव करोति विकरोति च। दुर्विभाव्या चेयं तस्य लीला कार्यकारणभावमपि अतिक्रम्य वर्तमाना मोहयति मनांसि विदुषामपि। तथा च आह अनवगाह्यमाहात्म्यो भगवान् देवकीनन्दनः करुणावतां अग्रेसरो जगद्गुरुः—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च<br>
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥<br>
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।<br>
जीवभूतां महाबाहो ययेदं धार्यते जगत्॥<br>
एतद्योनीनि भूतानि सर्वाणीत्युपधारय<br>
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥ इति॥ २॥

ननु सोऽयं सर्वसमर्थः भगवान् कुत्र वसति? वैकुण्ठे वा गोलोके वा ब्रह्मलोके वा? एवं सति एकदेशस्थस्य भगवतः ऐश्वर्यं व्याहन्येत। उत्तरं पठन् आह—

## सर्वव्यापित्वं कारणत्वात्॥ ३॥

सूत्रार्थः—सर्वव्यापित्वं = सर्वत्र ओतप्रोतत्वं तस्य भगवतः ज्ञेयं कुतः? कारणत्वात् = अभिन्ननिमित्तोपादानत्वात् इत्यर्थः।

भाष्यम्—कथं विडंबयसि वैकुण्ठे वा गोलोके वा ब्रह्मलोके वा-वसन्तं भगवन्तम्? यो हि सर्वव्यापी स युगपत् सर्वत्रैव वसति। अस्ति भगवतः सर्वव्यापिता। निखिलस्य स्थावरजंगमात्मकस्य जगतः

अभिन्ननिमित्तोपादानत्वात्। भगवान् हि उभयविधं कारणं, न केवलं उभयविधं, कारणभावस्य यावतीः विधाः परिकल्प्येरन् तावतीभिः सर्वाभिः कारणत्वं तस्य न दुष्यति। सर्वशक्तिमत्वात्। अतः अभिन्नोपादानकारणो हि भगवान् स्थिरजंगमेषु सर्वेषु भूतेषु उत्पन्नेषुवा अनुत्पन्नेषु वा भव्येषु वा भूतेषु वा वर्तमानेषु वा अनागतेषु वसति। अतः न एकदेशीयो भगवान् अपि तु सर्वदेशीयः। न केवलं सर्वदेशीयः अपि तु त्रिविधपरिच्छेदशून्यः देशकालादीनां तत्र गत्यभावात्। एकांशेन प्रकटीभूतः भगवान् जगद्रूपेण भासमानः आत्मैश्वर्यस्य कणिकामात्रमपि न पूर्णतया व्यनक्ति। अत्यतिष्ठद् दशांगुलं इति श्रुतेः भगवतः तस्य आनन्त्यदर्शनात्। तस्मात् सर्वदेशीयो भगवान् ततः अपि अपरिच्छिन्नः सर्वत्रैव वर्तते। अनुल्लंघनीया तस्यास्तिः इत्यर्थः॥ ३॥

ननु तथाविधस्य सर्वज्ञस्य सर्वशक्तेः सर्वव्यापिनः भगवतः अपि परः कश्चित् स्यात् कार्यकारणभावस्य अनन्तत्वात्। न इति सहेतुकं समादधन् आह—

## पराभावः अनवस्थाप्रसंगात्॥ ४॥

सूत्रार्थः—पराभावः = भगवतोऽपि परस्य उत्कृष्टस्य अन्यस्य अभावः अविद्यमानता, ज्ञेयः कुतः? अनवस्थाप्रसंगात् = अनिष्टस्य शास्त्रविरुद्धस्य अनवस्थापातदोषस्य प्रसक्तेः इत्यर्थः।

भाष्यम्—कार्यकारणभावेनापि कुत्रचित् विरंतव्यम् एवं। न हि अविरामे तस्य किमपि सिध्यति। अतः सत्यां व्यवस्थायां अनवस्थादोषः मतिमतां अनादरणीयः, भवति च व्यवस्था। भगवति तस्मिन् भवति प्रतिष्ठा कार्यकारणभावस्य निखिलस्य। अतः ततोऽपि परः तस्यापि कारणभूतः अस्ति इति मन्तव्यं तु निरवलंबनमेव। ईश्वरस्यापि ईश्वरान्तरकल्पने यस्य ईशितृत्वं तस्यैव ईश्वरत्वं आयाति ईशितव्यस्य ऐश्वर्यव्याघातात्। अतः एकः एव ईश्वरः ईश्वरान्तरासहः तर्केणापि समर्थ्यते। अतः न भगवतः परोभाव कश्चित् कल्पयितुं शक्यते। तथा च तस्य परमेश्वरस्य वचनं—

> मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय।
> मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥
>
> रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः
> प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥
बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ इति ॥ ४ ॥

भक्तव्यस्य परमात्मनः ऐश्वर्यान्तरं सूचयन्नाह—

निराधारोऽपि सर्वाधारः अधिष्ठानत्वात् ॥ ५ ॥

सूत्रार्थः—निराधारोऽपि = स्वयं आधारान्तर रहितोऽपिपूर्णत्वात् सर्वाधारः = सर्वेषां आत्मभूतानां प्रकृतिपुरुषरूपाणां पदार्थानां आधारः अवलंबः भगवान्, कुतः ? अधिष्ठानत्वात् आश्रयभूतत्वात् इत्यर्थः ।

भाष्यम्ः—स्वमहिम्नि प्रतिष्ठितो हि भगवान् आधारान्तररहितः वर्तते । न हि स्वयं पूर्णस्य परमात्मनः आधारान्तरो भवितुमर्हति । अनीश्वरत्वप्रसंगात् । अतः स्वमहिम्नि एव प्रतिष्ठितो भगवान् सर्वाधारो भवति । आधारश्च अधिष्ठानत्वात् । भगवान् हि पृष्ठं यत्रेदं विश्वं धार्यते । भगवदवलंबना हि सृष्टिः । भगवति सच्चिदानन्दात्मिके अवलंबनभूते हि सृष्टिः स्फुरति । स्फुरिता च ध्रियते । ध्रियमाणा च अवतिष्ठते । अवतिष्ठन्ती च तत्रैव लयं याति । अतः सर्वपृष्ठभूतो हि भगवान् स्वयं पृष्ठरहितः स्वात्मन्येव स्वात्मानं स्थापयन् विस्मयानन्त्य जनयति । तथा च सर्वविस्मयनिधेः तत्रभवतः वचनम्—

ये चैव सात्विका भावाःराजसास्तामसाश्च ये
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ इति ॥ ५ ॥

ननु एतादृशः स्वमहिमप्रतिष्ठितः भगवान् न कुत्रापि दृश्यते । सन् च प्रमाणैरवगम्येत । न च अवगम्यते अतः कथं तस्य सत्त्वं जानीमहे ? उत्तरं आह—

अप्रमेयः, प्रमाणानां तत्र अप्रवृत्तेः ॥ ६ ॥

सूत्रार्थः—अप्रमेयः = प्रमाणैः मातुं अशक्यः भगवान् । कुतः ? तत्र = भगवत्स्वरूपे प्रमाणानां–प्रत्यक्षादीनां प्रमाणानां अप्रवृत्तेः = अयोग्यत्वेन प्रवृत्त्यभावात् इत्यर्थः ।

भाष्यम्:—"तदेतत् अप्रमेयः ध्रुवः" इत्यादि श्रुतिप्रामाण्यात् भगवान् अप्रमेयः एवास्ति । न हि भगवत्स्वरूपनिर्णये प्रमाणानि प्रवर्तन्ते । ननु प्रमाणागोचरश्चेत् भगवान् न भवितुमर्हति । स्थितस्य प्रमाणैः प्रमेयत्वात् । न । न सर्वः एव पदार्थः प्रमाणेन गम्यते । अस्ति च प्रमाणानामपि मर्यादा । अयोग्यत्वात् अप्रवृत्तानि प्रमाणानि भगवन्तं मातुं न शक्नुवन्ति न भगवतः अभावात् । प्रमाणानि अपि भगवता एव प्रमाणितानि सन्ति स्वरूपं लभन्ते । अतः स्वात्मनिवृत्तिविरोधात्, प्रमाणानां आत्मत्वात् न भगवान् प्रमाणगोचरः। प्रमाणानि प्रमाणीकुर्वन् हि भगवान् अप्रमेयः एव । अतः सन् अपि भगवान् प्रमाणानि प्रतिकरोति ।

ननु असंगतं इदं सूत्रं । अत्र प्रतिपादितस्यार्थस्य पूर्वत्र अवधारणात् । पुनरावृत्तेः च प्रसंगाभावात् न खलु अवसरमंडितं सूत्रमिदं । कुतः अकस्मात् प्रवृत्तम् ? इति चेत् न। गुणमयैः शरीरेन्द्रियविषयरूप परिणतैः भावैः सर्वस्य जगतः मोहितत्वेन एभ्यः परत्वेन वर्तमानस्य भगवतः तत्त्वज्ञानाभावात् । सर्वो हि प्रमाणप्रमेयव्यवहारभावो गुणान्तः । निर्गुणे च भगवति सर्वेभ्यः परे, गुणकृतप्रमाणादिभावस्य अप्रवृत्तेः मा नाम तस्य कश्चिद् असत्वं शंकिष्ट इति उचितम् भगवतः अप्रमेयत्वप्रतिपादनम् इत्यर्थः । अप्रमेयत्वेऽपि भगवतः तस्य सत्वं जानन् गुणेभ्यः परो भवेत् न अजानन् । तस्मात् अचोद्यं अकस्मात् प्रवृतिः इति अर्थः ॥ ६ ॥

ननु भगवत्तत्वस्य सतः अपि कथं अवबोधो न भवति ? आह—

**तत्त्वानवबोधः मायायाः आवरकत्वात् ॥ ७ ॥**

सूत्रार्थः—तत्त्व० = तत्त्वस्य भगवतः स्वरूपस्य अनवबोधः = अप्रतीतिः भवति कुतः ? मायायाः आवरकत्वात् = त्रिगुणमय्याः देहेन्द्रियविषयादिरूपेण परिणतायाः प्रकृतेः ज्ञानावरणशीलत्वात् इत्यर्थः ॥ ७ ॥

भाष्यम्—सतः अपि भगवत्तत्त्वस्य अनवबोधः मायायाः आवरकत्वात् विज्ञेयः । माया हि भगवतः अचिन्त्यप्रभावा कापि विचित्रा शक्तिः । सेयं शक्तिः सृज्यमानप्राणिधर्मापेक्षया तस्य योजनानुसारं प्रवर्तमानदेहेन्द्रियादिरूपैः परिणता सती आत्मनः दर्शनं आवृत्य सर्वान् एव जन्तून् विमोहयति । ज्ञानमावृत्य वर्तमाना इयं शक्तिः सर्वानेव सामान्यतः सविशेषेण अन्धान् करोति । अतः मायया पिनद्ध-

चक्षुः लोकः स्पष्टमपि अनावृतमपि भगवत्तत्वं न जानाति। अजानन् च तं भगवन्तं न भजति। अभजन् च देहात् देहं प्रव्रजति। संसारं च ऋच्छति। अतः मायया विहतज्ञानालोको लोकः भगवन्तं नाभिजानाति। तथा च उक्तं भगवता माधवेनः—

त्रिभिः गुणमयैः भावैः एभिः सर्वमिदं जगत्
मोहितं नाभिजानाति मामेभ्यः परमव्ययम्॥ इति॥ ७॥

सेयं गुणमयी भगवतो माया कथं तर्हि संतरणीया? उच्यते—

## मायासंतरणं प्रपत्तेः॥ ८॥

सूत्रार्थः—मायासंतरणं = मायायाः परतीरगमनं सुखेन प्रपत्तेः = शरणागतेः भवति इत्यर्थः।

भाष्यम्—भगवतः विचित्रायाः मायायाः संतरणोपायस्तु भगवत्प्रपत्तिरेवास्ति। प्रपत्तिश्च श्रद्धाभक्तिप्रकर्षपूर्विका शरणागतिः। सर्वभावेन भगवच्छरणगमनं हि सुखेन मायायाः तरणे उपायभूतम्। तां प्रपत्तिं विहाय न कोऽपि सुकरः उपायान्तरः अस्ति इत्यर्थः। प्रपत्या प्रसन्नेन भगवता वृतो हि जीवो मायां संतरति न केनापि कतमेनापि क्रियतापि केवलेन आत्मप्रयत्नेन इत्यर्थः। भगवदनुकंपाकंपितो हि पुरुषार्थः साफल्यं अश्नुते न तदनुकंपाननुकंपितः इत्यर्थः। तथा च श्रुतिः—"यमेव एष वृणुते तेनैव लभ्यः तस्यैष आत्मा विवृणुते तनुं स्वाम्" वरणं च भगवतः प्रपत्यपेक्षम् इत्यर्थः। तस्मात् प्रपत्तिः मायासंतरणोपायः इत्यर्थः। उक्तं च भगवता करुणावरुणालयेन—

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥ इति॥ ८॥

ननु केयं प्रपत्तिः नाम? स्वप्रपत्तिं आशासानो भगवान् हि सत्ता लोलुपः प्रतिभाति। ततश्च विषमो निर्दयोऽपि। समादधन् वक्ति—

## प्रपत्तिः ईश्वराज्ञापालनम्॥ ९॥

सूत्रार्थः—प्रपत्तिः = श्रद्धाभक्तिप्रकर्षेण भगवत् शरणगमनं नाम ईश्वराज्ञापालनं = ईश्वरस्य भगवतः याः आज्ञाः तासां यथाशक्ति परिपालनं सहृदयं ज्ञेयमित्यर्थः।

न खलु प्रपत्तौ ईश्वरस्य सत्तालोलुपता निर्दयता विषमता वा वाच्या। सत्यप्रतिपादनं हि श्रेयस्करम् आपाततो कठोरं अपि अमधुरं अपि। प्रपत्तिं विदधानो हि भगवान् सत्यमेव प्रतिपादयति। यतः सत्यस्वरूपो हि भगवान् असत्यं नैव सहते। ईश्वराज्ञापालनं हि मायायाः संतरणोपायः इति। सत्यं। सा एव मुख्या भक्तिः। तत् सत्यं अकामेनापि स्वीकर्तव्यम् भवति। यतः सत्यमेव जयते नानृतं इति श्रुतिः कथयति। यमनियमादीनां अनुष्ठानं हि ईश्वराज्ञापालनम्। अनुसरणाच्च तासां सत्त्वसत्त्वशुद्धिं संपादयन् जीवः ईश्वरस्य प्रसन्नस्य कृपया लब्धबलः भवन्सुखेन दुस्तरां मायां तरति अन्यांश्च तारयति। अतः ईश्वराज्ञापालनरूपां प्रपत्तिं प्रपद्यमानः तस्यानुकंपया उत्तीर्णमायो भवति इत्यर्थः। तथा च तारणकुशलस्य भगवतः वचनम्-मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति ॥ ९ ॥

ननु ईश्वराज्ञापालने समेषां हृदयवृत्तिः कथं न भवति? बहवश्च इच्छन्तोऽपि तदनुसरणे शिथिलाः अनिच्छन्तोऽपि तद्भंगे बद्धपरिकराः एव दृश्यन्ते। आह—

## अप्रपत्तिः मौढ्यात् ॥ १० ॥

सूत्रार्थः— अप्रपत्तिः = ईश्वराज्ञापालनशैथिल्यं मौढ्यात् = विवेकाभावात् भवति इत्यर्थः

भाष्यम्:—सत्यं। बहवोऽपि ईश्वराज्ञाः विलंघयन्तः एव दृश्यन्ते न तेन सिद्धान्तस्य हानिः। विरला एव भवन्ति ये मायया अनपहृतज्ञानाः सन्तः दैवीं प्रकृतिं आश्रिता भवन्तः नरोत्तमाः सुकृतिनश्च सन्तः परमेश्वराज्ञां पालयन्ति। इतरे तु मौढ्यात् देहात्मज्ञानरूपात् विवेकहापिताः अविवेकिनः सन्तः आत्महितं अपश्यन्तः आपाततः प्रियमेव भजन्तः स्वैराचारे एव रममाणाः विस्मरन्ति ईश्वरं संस्मरन्ति च संसारम्। तस्मात् ते अनुकम्प्याः इत्यर्थः ॥ १० ॥

ननु न सर्वे एव ईश्वराज्ञां त्यजन्ति। सन्ति ईश्वराज्ञानुसारिणोऽपि तत्रभवन्तः सज्जनाः। कथं तेषां इयं प्रपत्तिः आगता? आह—

## प्रबोधात् प्रपत्तिः ॥ ११ ॥

सूत्रार्थः—प्रबोधात् = विवेकात् अविप्लवात् प्रपत्तिः=शरणागतिः आयाति इत्यर्थः

भाष्यम्—सत्यं। न खलु रावणैरेव परिपूरितं जगत्। रामोऽपि दृश्यते। स च रामः प्रबोधप्रभावात् सुकृतिमान् ईश्वराज्ञां पालयति। पालयन् च ईश्वरसाहाय्येन पुण्यक्रीतेन मायां उत्तरति। प्रबोधो हि प्रपत्तिकारणम् इति संक्षेप इत्यर्थः ॥ ११ ॥

ननु प्रपत्तिं प्रपद्यमानेषु भक्तेषु अस्ति कश्चिद् विशेषः? यतः सुकृतित्वं तु समेषां साधारणम्। यत्तु असाधारणं तेषु भेदजनकं तत् वक्तव्यम्। आह—

चतुर्विधो भक्तः आर्तादिभेदात् ॥ १२ ॥

सूत्रार्थः—चतुर्विधः = चतुष्प्रकारः भक्तः = भगवद्भक्तः कुतः? आर्तादिभेदात् = आर्तः— जिज्ञासु आदिभेदात् इत्यर्थः।

भाष्यम्ः— येतावत् दुष्कृतिनः सन्ति तेषां तु भक्तिरेव न भवति। अतः ये सुकृतिनः सन्ति त एव भक्तौ अधिक्रियन्ते। सुकृतित्वात् ते शुध्धाः शुद्धाश्च भक्तिभावाविर्भावाय योग्याः। तेषु अपि चतुर्विधः भेदः अस्ति। कश्चिद् आर्त्या ग्रस्तःसन् भगवन्तं प्रपद्यते। अपरस्तु ज्ञातुमिच्छुः सन् भगवन्तं शरणं गच्छति। इतरस्तु अर्थेन अर्थीभवन् भगवतः चरणकमलं ऋच्छति। परस्तु ज्ञानी सन् भगवन्तं अवलंबते। सर्वे एव एते उदाराः। यतस्ते भगवन्मार्गप्रवासिनः सन्ति। तथा च भगवान् भक्तपरायणः—

—चतुर्विधाः भजन्ते मां जनाः सुकृतिनोऽर्जुन!
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ। इति ॥ १२ ॥

ननु तेषां चतुर्विधभेदभिन्नानां कः श्रेष्ठः? विशिष्टे च ज्ञाते तदनुकरणं सुकरं स्याद् इत्यतः आह—

तत्र ज्ञानिनः श्रेष्ठत्वं भगवदात्मत्वात् ॥ १३ ॥

सूत्रार्थः—तत्र = तेषु चतुर्विधेषु भगवद्भक्तेषु आर्तादिषु ज्ञानिनः = ब्रह्मात्मज्ञानिनः भक्तस्य श्रेष्ठत्वं = विशिष्टत्वं कुतः? भगवदात्मत्वात् = भगवतः स्वरूपभूतत्वाद् इत्यर्थः।

भाष्यम्ः—तेषु भक्तेषु ज्ञानी भक्तः सर्वश्रेष्ठः। सहि नित्ययुक्तः एकभक्तिः भगवत्प्रियश्च। इतरे तु न ईदृग्विधाः। तथा च आर्तः आर्तिं अतिक्रान्तः सन् भगवन्तं विस्मरेत्। पुनः आर्त्या ग्रस्यमानः सन् इतरं

देवं वा अन्यं वा कंचन प्रपद्येत। जिज्ञासुरपि तृप्तः सन् चरमं ज्ञानं च अलब्ध्वा मध्ये एव विरमेत्। अर्थार्थिनस्तु लज्जैव नास्ति। यो हि तस्य अर्थं पूरयेत् तस्य सः भक्तो भवेत्। अतः तेषु त्रिषु नित्ययुक्तत्वं एकभक्तित्वं भगवत्प्रियत्वं च नास्ति। अयं ज्ञानी तु भगवन्तं भजनीयतया जानन् सदैव तं भजति। न तस्य भक्तियुक्तत्वं कादाचित्कम्। सतीव पतिं सः एकभक्त्या भगवन्तं भजति। न च तस्य भावव्यभिचारोऽस्ति। किं च तस्य भगवान् प्रियो भवति तत्त्वज्ञानात्। प्रेम्णः विषयं स भगवन्तं एव जानाति। अतः भगवन्तं विहाय तस्य प्रेम्णः धारा नैव गच्छति अपरम् "तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मात् अन्तरतरं यदयमात्मा" इति श्रुत्युक्तरीत्या सः परमप्रेमास्पदं भगवन्तं एव भजति। अतः असौ एकभक्तः नित्ययुक्तः आत्मप्रियः भगवन्तं निरंतरं भजमानः सर्वश्रेष्ठः भवति। तथा च प्रेमयोगिनः भगवतः वचनम्—

तेषां ज्ञानी नित्ययुक्तः एकभक्तिः विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थं अहं स च मम प्रियः॥ इति ११॥

ननु एवंविधस्य ज्ञानिनः भक्तस्य दुर्लभत्वं भाति ! कुतः ? उत्तरं पठति।—

तादृशं दुर्लभत्वं साधनायाः दुष्करत्वात् तदृते च
ज्ञाननिष्ठायाः अलाभात्॥ १४॥

सूत्रार्थः—तादृशस्य = तद्विधस्य ज्ञानिनः भक्तस्य दुर्लभत्वं = दौर्लभ्यं, साधनायाः = ज्ञानसाधनाचरणस्य दुष्करत्वात् = असुकरत्वात् च तथा तदृते = तां साधनां विना ज्ञाननिष्ठायाः = ज्ञाने अविचलस्थितिरूपायाः = निष्ठायाः अलाभात् = अप्रापणात् ज्ञेयम् इत्यर्थः।

भाष्यम्:— यथा शैले शैले न माणिक्यं, गजे गजे वा न मौक्तिकं वने वने वा न चन्दनं सुलभं तथैव जने जने न तादृशानां भक्तानां सुलभत्वमस्ति। ज्ञानपूर्विकायाः भक्तेः अव्यभिचारिण्याः मनुष्याणां सहस्रेषु विरले एव दृश्यमानत्वात् दुर्लभत्वं च तस्याः साधनायाः दुष्करत्वात् ज्ञेयं। साधनाक्लेशो हि मानवं शिथिलं करोति। साधनायाः अपरिपक्वतायां च न तादृशस्य लाभस्य संभवः अस्ति। अतः सर्वत्र ब्रह्मदृष्टिः भक्तः कोटिषु अपि सुदुर्लभः एव। तथा च भगवतो सिद्धसकलसाधनस्य वचनं—

बहूनां जन्मनां अन्ते ज्ञानवान्मां प्रपद्यते

वासुदेवः सर्वमिति स महात्मा सुदुर्लभः । इति। यस्तु सुलभः स अल्पात्मा न महात्मा इत्यर्थः । ज्ञानसाधनानिर्भरत्वं हि महात्मनः महात्मत्वम् इति संक्षेपः ॥ १४ ॥

ननु परमात्मानं विहाय अन्यां देवतां भजमानाः तस्याः सकाशाच्च फलं लभमानाः सहस्रशः दृश्यन्ते । राजानुचरन्यायेन च भगवद्भिन्नानां देवतानां भजनं एव सुकरं । कृतं भगवतः भजनेन । एवं प्राप्ते आह—

## सर्वकर्मफलदातृत्वं सर्वज्ञत्वात् ॥ १५ ॥

सूत्रार्थः—सर्वकर्मफलदातृत्वं = समेषां जीवानां आब्रह्मस्तम्बपर्यन्तानां सर्वेषां कर्मणां फलस्य दातृत्वं भगवतः एव, न इतरासां देवतानां कुतः ? सर्वज्ञत्वात् = भगवतः तस्य सर्वज्ञत्वात् इत्यर्थः ।

भाष्यम्ः—सर्वज्ञो हि फलवितरणे अधिकृतो भवति। सर्वज्ञश्च भगवानेव केवलं एकलः । इतरा देवताः महर्षयो वा भगवदनुग्रहभाजो भवन्तः एव सापेक्षं सर्वज्ञत्वमिव धारयमाणाः दृश्यन्ते । न च भगवतः तेषां ज्ञानं अधिकं भवितुमर्हति । सापेक्षं सर्वज्ञत्वं हि तेषां भवेत् कदाचिद् भगवतः अनुग्रहेण । अतः न तेषां सर्वतंत्रस्वतंन्त्रं सर्वज्ञत्वं निरपेक्षम् । अतः फलदानं कुर्वन्तो दृश्यमाणाः अपि ते देवाः वा महर्षयो वा योगिनो वा न वस्तुगत्या फलदानं कुर्वन्ति । न खलु राज्ञः सचिवाः राजकार्यं कुर्वन्तो दृश्यन्ते इति राजाज्ञां विहाय वर्तन्ते । ईश्वरेण दत्ताधिकाराः देवाः वा इतरे वा कस्यचित् जन्तोः फलदानं विदधानाः अपि ईश्वराज्ञानुसारं एव ते तथा कुर्वन्ति । अतः इतरेषां अर्चनं तत्फलं अपि ईश्वरस्यैव सर्वज्ञस्य सर्वतंत्रस्वतंत्रस्य । अतः फलभेदात् फलदाने च ईश्वरनियम्यत्वात् देवानां ईश्वरस्यैव भजनं सुकरं न इतरेषां देवानाम् । प्रसन्नः इन्द्रः इन्द्रत्वादधिकं दातुं असमर्थः । प्रसन्नश्च परमेश्वरः ब्रह्माण्डाधिपत्यं दद्यात् । कस्तस्य निवारकः । अतः पूजायत्नसाम्येऽपि फलभेदात् ईश्वरस्यैव पूजा कार्या । अतः ईश्वरं विहाय अन्यान् अवलंबमानाः मोहमहिमानमेवाविष्कुर्वन्ति । कुर्वन्तु नाम । न तेन सिद्धान्तस्य हानिः इत्यर्थः । तथा च देववत्सलस्य भगवतः वचनम्—

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।

तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥

यो यो यां यां तनुंभक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते
लभते च ततः कामान्मयैव विहितान् हि तान् ॥
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्
देवान् देवयजो यान्ति मद्भक्ताःयान्ति मामपि ॥ इति ॥ १५ ॥

ननु भगवन्तं परित्यज्य अन्यदेवतापूजनप्रधानः अयं व्यापको व्यामोहः कथं भवति ? आह

सर्वसंमोहः द्वंद्वात् ॥ १६ ॥

सूत्रार्थः—सर्वसंमोहः = विदुषां अविदुषां वा समेषां जीवानां अयं संमोहः = मूढत्वं द्वंद्वात् = इच्छाद्वेषसमुत्थेन द्वंद्वेन भवति इति ज्ञेयंइत्यर्थः ।

भाष्यम्—अयं व्यापको मोहः इच्छाद्वेषजन्मना द्वंद्वेन भवति । रागद्वेषाभिभूतचेतसः खलु प्रायेण वर्तन्ते प्राणिनः अस्मिन् संसारे । रागानुकूलं मे भूयात् द्वेषप्रतिकूलं च अस्तु इति तीव्रेण अभिनिवेशेन प्रवर्त्यमानाः जन्तवः रात्रिंदिवा तत्रैव सक्ताः क्षणार्धमपि अवकाशं अलभमानाः न तत्त्वचिन्तामपि कुर्वन्ति । ततश्च व्यामोहेन सदैव आक्रान्ताः न भगवदभिमुखं भवन्ति । विमुखाश्च भगवतः कथं तं जानीयुः कथं च भजेयुः कथं च व्यामोहं उत्तरेयुः ? अतः द्वंद्व जन्मा अयं मोहः कदर्थयति सर्वान् अपि प्राणिनः । तथा च मोहविलासवेत्तुः भगवतः वचनम्—

इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ! इति ॥ १६ ॥

ननु सर्वे एव चेत् भगवन्तं न जानीयुः व्यर्थं स्यात् भक्तिशास्त्रम् ! अधिकारिणः एव अभावात् इति शंकाव्याजेन उपसंहरन्नध्यायार्थं समाधानं आह—

भजनान् मोक्षः ॥ १७ ॥

सूत्रार्थः—भजनात् = भगवतः भजनात् मोक्षः = मुक्तिः भवति इत्यर्थः ।

भाष्यम्—न खलु जगति मूढाः एव वसन्ति । अतः सर्वशब्दस्य संकुचितोऽर्थोऽत्र वेदितव्यः । सर्वशब्देन प्रायेण सर्वाणि भूतानि इति अर्थः ग्राह्यः । विदितवेदितव्यानां अपि जगति दर्शनात् । तस्मात् येषां सुकृतीनां पापं अवसन्नं ये च द्वंद्वाक्रमणान्मुक्ताः ते दृढव्रताः सन्तः भगवन्तं भजन्ति । भजन्तश्च मुच्यन्ते । वेदनाधीना हि मुक्तिः । सपरिवारस्य ब्रह्मणः ज्ञानात्, ते परिमुच्यन्ते । अतः सन्ति ज्ञानिनः इति न व्यर्थं भक्तिशास्त्रं अधिकारिणः सद्भावात् इत्यर्थः । तथा च भगवान् वासुदेवः—

येषां त्वन्तगतं पापं जनानाम् पुण्यकर्मणाम् ।
ते द्वंद्वमोहनिर्मुक्ताः भजन्ते मां दृढव्रताः ॥
जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ इति ॥ १७ ॥

॥ इति ज्ञानविज्ञानयोगः ॥

## ॥ अथ अक्षरब्रह्मयोगः ॥

एवं गताध्यायान्ते भजनात् मोक्षं भगवान् उपदिदेश । भजनं च ज्ञाननिबन्धनम् । ज्ञानं च ज्ञेयसापेक्षम् । ज्ञेयत्वेन च सप्तपदार्थाः भगवता वीताध्यायान्ते परिकीर्तिताः । सप्तपदार्थविषयकार्जुनप्रश्नरहस्यं आदौ स्पष्टयन् आह—

**अर्जुनस्य प्रश्नसप्तकं व्यवहारनियामकत्वात् तत्त्वज्ञानस्य ॥ १ ॥**

सूत्रार्थः—अर्जुनस्य = पार्थस्य प्रश्नसप्तकं = सप्तानां प्रश्नानां समूहः तत्त्वज्ञानस्य = यथार्थज्ञानस्य व्यवहारनियामकत्वात् = लोकव्यवहारस्य नियन्तृत्वादित्यर्थः ।

भाष्यम्ः—सर्वो हि लोकव्यवहारः तत्त्वज्ञाननिष्ठामूलको भवति । यत्र तत्त्वज्ञानं पीठभूतं न स्यात् तत्र लोकव्यवहारः न निर्मलो भवति । नाऽपि दृढो भवति । तत्त्वज्ञाननियमितो हि लोकव्यवहारः परंपरया श्रेयःसाधको भवति । अभ्युदयनिःश्रेयससाधको हि लोकव्यवहारः जीवनदृष्टि + आख्येन तत्त्वज्ञानेन व्याप्तो भवितुमर्हति । अतः तत्त्वज्ञानं

अतीवोपयुक्तं तदर्थं च अर्जुनस्य प्रश्नसप्तकम् । प्रश्नसप्तके हि समग्रस्य जीवनव्यवहारज्ञानस्य समाप्तिः भवति । तथा च जिज्ञासोः अर्जुनस्य वचनानि—

किं तद् ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तं अधिदैवं किमुच्यते ॥

अधियज्ञः कथं कोऽत्र देहेऽस्मिन् पुरुषर्षभ ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ १ ॥

ननु भगवतः प्रतिवचनं प्रतिप्रश्नं अतीव संक्षिप्तं । संक्षेपेण च न तत्त्वज्ञानस्य सपरिवारस्य द्योतनं । अतः जिज्ञासितं न सुसंपन्नं भवति । तद्भावे च समाधानं अपि असमाधानमेव । अतः आह—

प्रतिवचनं षट्कस्य समासेन व्यासस्य अन्यत्र दृष्टत्वात् ॥ २ ॥

सूत्रार्थ—षट्कस्य = सप्तमवर्जितस्य आदिप्रश्नषट्कस्य प्रतिवचनं= प्रत्युत्तरः भगवता समासेन = संक्षेपेणैव कृतः कुतः ? व्यासस्य = विस्तरस्य अत्रत्यस्य अन्यत्र दृष्टत्वात् = इतरत्र अवलोकितत्वात् ।

भाष्यम्—प्रथमप्रश्नषट्कस्य भगवता संक्षेपेणैव समाधानं समर्पितम् । न तेन कोऽपि अपराधः । संक्षेपोक्तिस्तु शोभना । संक्षिप्ता स्यात् विस्तृता वा स्याद् उक्तिः तु असंदिग्धा भवितुमर्हति । असंदिग्धत्वे सति संक्षेपेणोक्तिः तु शोभना । सत्यप्रसादकत्वात् निरर्थकगौरवहानाच्च । अपि च अत्रत्यः विस्तरस्तु अन्यत्र दृष्टः । तथा हि "किं तद्ब्रह्म" इत्यादिप्रश्नानां वेदान्तादिषु शास्त्रेषु दृष्टः विस्तरः । अपूर्वस्य दर्शनं हि व्यासमपेक्षते । दृष्टस्य स्पर्शमात्रेणैव उल्लेखः उचितः । अतः अपूर्वस्य सप्तमप्रश्नस्य गतिविषयकस्य विस्तरेण विवेचनं तावत् भगवतः दृष्टौ मुख्यम् । अतः सप्तमस्यैव प्रश्नस्य समाधानरूपोऽयं अध्यायः मृत्युंजयमन्त्रोपशिक्षकः वेदितव्यः इत्यर्थः॥२॥

ननु अंतकाले भगवतः एव स्मरणं कथं कर्तव्यम् ? स्वाभाविकं हि स्मरणं अनुभूतस्य भवति । अतः स्वाभाविकस्य स्वाभाविकं एव स्मरणं भवतु । अलं कृत्रिमस्य स्मरणायासेन अदृष्टचरेण । आह—

मतिनियम्या गतिः प्रेरकत्वात् ॥ ३ ॥

सूत्रार्थः—मतिनियम्या = बुद्धिनियम्या गतिः = मरणोत्तरा गतिः

भवति। कुतः? प्रेरकत्वात्=मतेः गतिप्रेरकत्वात् तस्मात् उच्चतमविषया एव मतिः भवितुमर्हति इत्यर्थः।

भाष्यम्—यस्य यादृशी मतिः तस्य तादृशी गतिः भवति इति हि सिद्धान्तः। "यथा कर्म यथा श्रुतं इति श्रुतेः।" उत्तरोत्तरशुभगति-प्रापणे हि जीवस्य शोभा वर्तते। मनुष्ययोनिं प्राप्य च दुर्लभां ईश्वर-प्रसादरूपां केवलां यो हि उच्चत्तमां गतिं न आप्नोति जरयत्येवासौ जनन्याः यौवनम्। अतः लब्ध्वा मानवदेहं अनुत्तमां गतिं प्राप्नुयात्। सा च गतिः मतिनिर्भरा। यस्य मतिः सर्वोच्चविषया न भवति न तस्य उत्तमगतिलाभोऽपि शक्यः। सर्वोच्चविषयस्तु भगवान् एव काष्ठा-दर्शनात्। भवति काष्ठादर्शनं "पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः" इति श्रुतेः। पुरुषविषया हि मतिः कृतकृत्या भवन्ती जननमरण संबंधं छिनत्ति। स्मृतिश्च अननुभूतं न कदापि गोचरयति। अतः अन्तकाले भगवत्स्मरणं विधित्सुः भगवान् जीवनकाले एव अनुभवितव्यं भगवत्तत्वं इति अर्थादाक्षिपति। जीवनदशायां येन भगवान् नानुभूयते अन्तकाले नैव तस्य भगवत्स्मृतिः उपतिष्ठते। तदलाभे च व्यर्थं मानुष्यं भवति। अतः भगवदनुभूतिः जीवन्नेवभवितुमर्हति। अत्रैव च जन्मसाफल्यम्। मीमांस्यं मनुष्येण सता यत् भोगाय वा भवरोगाय वा अपवर्गाय वा जीवनम् इति। भोगनिबन्धनाय भवरोगाय इदं जीवनं मानवीयं इति चेत् निर्णयः अनुकम्प्योऽसौ महताम्। अपवर्गसाधनाय इदं जीवनदानं मानुष्यसंज्ञं इति चेत् निश्चयः अनुग्राह्योऽसौ महतां लब्धतत्त्वानाम्। अतः कौमारे एव सत्संगनिरतो भवेत्, यौवने एव ईश्वरानुभूतिपरायणो भवेत्, वार्धक्ये च योगेन तनूत्यग् भवेत्। तदेतत् सर्वं सुशकं आत्मज्ञाने सति परिपक्वे दृढे च तस्मिन्। इतरत्र तु भोगबुद्धिः प्रधाना भवेत्। मानुष्ये तु योगबुद्धिः एव मुख्या भवितुमर्हति। मानुष्यं च भोगनिम्नत्वंच इति अहो मोहस्य महिमा। अस्वाभाविकी आत्मनः भोगबुद्धिः स्वाभा-विकी च त्यागबुद्धिः। अतः स्वाभाविकं अस्वाभाविकं, अस्वाभाविकं च स्वाभाविकं मन्यमानः करुणापरैः क्षन्तव्यः इत्यर्थः। तस्मात् उच्च-तमभगवद्विषयां मतिं कारयेद् बुधः इति अर्थः॥ ३॥

भगवदनुस्मरणविधानं हेत्वन्तरेण दृढयन्नाह—

भगवदनुस्मरणमेव भावस्य भवकारणत्वात् उत्क्रान्तेः जीवनपिशुनत्वाच्च ॥ ४ ॥

सूत्रार्थः—भगवदनुस्मरणमेव = भगवतः परमपुरुषस्य अनुस्मृतिः एव न तु भावान्तरस्य अनुस्मृतिः इति एवार्थः फलति। कुतः ? भावस्य = इतरभावस्य इतरपदार्थानुस्मरणस्य भवकारणत्वात् = जन्मनिमित्तत्वात् च = तथा उत्क्रान्तेः = निधनरीतेः जीवनपिशुनत्वात् = जीवनकालवर्तनस्य द्योतकत्वादपि भगवत् स्मरणमेव फलति इत्यर्थः।

भाष्यम्:— भावो हि भवकारणम्। यस्य यादृशो भावः तस्य तादृशः एव भवः पुनर्भवश्च। पदार्थभावो हि पदार्थान् पुरस्करोति। भगवद्भावो हि भगवन्तं पुरस्करोति। अनात्मभावो अनात्मानं आत्मभावश्च आत्मानं आवहति। तस्मात् आत्मानात्मनोः विवेकः कर्तव्यः विवेकश्च भगवदनुस्मरणमेव आनयति। श्रीनिकेतने भगवति अनुस्मृते जीवनश्रीः परिपूर्णा भवति। तस्मात् भगवदनुस्मरणमेव विवेकरमणीयम्।

किञ्च ? उत्क्रान्तिः जीवनपिशुना भवति। कथं अनेन जीवनं वोढं इत्यस्य प्रमाणपत्रं तु उत्क्रान्त्या दीयते। मरणकालो हि जीवनकालं सूचयति। अयं मृत्युंजयो वा मृत्युना पराभूतो वा इति तु ज्ञायते मृत्युकाले। येन जीवन्नेव भगवान् साक्षात्कृतः स मृत्योः न बिभेति। इतरस्तु बिभ्यति। मृत्युभयं हि पापमयं जीवनं सूचयति। तस्मात् भगवत्साक्षात्काराय प्राप्तं जीवनं यो भोगे एव शोषयति स तेनापराधेन अक्षम्येन महद्भयं आप्नोति। तस्मात् जीवन्नेव भगवदनुभवं कुर्यात् अनुभूतभगवद्भावश्च अकामेनापि भगवन्तं एव अन्तकाले स्मरिष्यति। अनुभूतसंस्कारस्य तत्त्वस्पर्शित्वात् भोगसंस्कारस्य च अतात्त्विकस्य निर्बलत्वात् तत्त्वमेव गमिष्यति। तस्मात् भगवत्स्मरणं अन्तकाले इतरकालवत् अभयावहम् इत्यर्थः। सर्वपापघ्नी हि भगवत्स्मृतिः इत्यर्थः।

स्मृतिश्चानुभवमूला। नानुभवं व्यभिचरति स्मृतिः। अनुभवश्च भगवतः साधनावर्जितस्य तस्य अनुकंपया भवति। तस्मात् निखिलं अपि जीवनम् भगवदनुभवार्थमेव सततसाधनारूपं मतिमता विज्ञेयं इत्यर्थः। उक्तं च तत्त्वविशारदेन भगवता—

अन्तकाले तु मामेव स्मरन्मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥

यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥

तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पित मनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥

प्रयाणकाले मनसाचलेन भक्त्यायुक्तोयोगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् सतं परं पुरुषमुपैति दिव्यम् ॥

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं स याति परमांगतिम् ॥

अनन्यचेताः सततं योमां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ इति ॥ ४ ॥

ननु प्रकृतं हि भगवदनुस्मरणप्रकरणम् । कथं तत्र अप्रकृतं ब्रह्मादि-लोकानां अनुवर्णनं प्रविष्टम् ? अनुचितं चैतत् प्रकृतहानाप्रकृतप्रारंभात् इति प्राप्ते ब्रह्मादिलोकानुकथनस्य रहस्यं विशदयन्नाह—

प्रभवाप्ययोल्लेखः वैराग्यप्रबोधनार्थः ॥ ५ ॥

सूत्रार्थः—प्रभवाप्ययोल्लेखः = सृष्टिलयोद्देशः वैराग्य० = वैराग्यस्य ज्ञानप्रसादाख्यस्य जागरणार्थः ज्ञेयः इत्यर्थः ।

भाष्यम्—न खलु भगवान् किमपि अनुपयुक्तं ब्रवीति आप्ततम-त्वात् तस्य । निखिलस्य ब्रह्मलोकपर्यन्तस्य संसारस्य प्रभवाप्ययोल्ले-खस्तु भगवता वैराग्योद्बोधनार्थं कृतः विज्ञेयः । देहाद्देहान्तरं व्रजन्—

दुःखाद् दुःखान्तरं गच्छन् भुक्तं एव उपभुंजानः पीतमेव पिबन्, अनुभूतमेव इन्द्रियताण्डवं पुनः पुनः अनुभवन् न खिद्यते अयं जीवः मोहनिमीलितनयनः। न च पश्यति जन्मना जायमानं आत्मनः स्वरूपतः अजस्य अविक्रियस्य च अपमानं। न खलु परगृहे प्राघूर्णिकत्वेन आयातः गृहस्वामित्वेन वर्तमानः अस्तेनो भवति । प्रकृतिश्च ब्रह्मादिस्थावरान्तप्रसृता जीवात्मनः परधाम न स्वधाम तत्र कुमुहूर्ते गतः अयं अतिथिः कथं स्वधाम्नि इव परधाम्नि निरपत्रपः सन् दीर्घकालं रमेत। मा भूत् तस्य उत्तरोत्तरं पतनं इति कृत्वा भगवान् देवकीनन्दनः सृष्ट्योल्लेखेन वैराग्यं उपशिक्षयति अत्र। विरक्तः च कदाचित् वाञ्छेत् स्वधामावस्थानं। वाञ्छन् च स्वधामस्मरणं कुर्यात्। स्मरन् च स्वरूपं विन्देत। तस्मान्न अप्रकृतं एतत्, अपि तु अतीव संवादि इत्यर्थः। तथा च भगवतः उद्बोधनम्—

आब्रह्मभुवनाल्लोकाःपुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः॥

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥

भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे॥ इति॥ ६॥

ननु वैराग्यपूर्वकात् भगवदनुस्मरणात् भगवल्लाभे किं स्यात्? आह

भगवत्प्राप्तेः अपुनरावृत्तिः सामग्रीविरहात्॥ ७॥

सूत्रार्थः—भगवत् प्राप्तेः = भगवतः लाभे सति अपुनरावृत्तिः = अपुनर्भवः मोक्षः भवति। कुतः? सामग्रीविरहात् = भगवत्प्राप्तौ जन्मनः सामग्र्याः वियोगात् इत्यर्थः।

भाष्यम्—भगवतः साक्षात्कारात् मोक्षप्राप्तिः। साक्षात्कारश्च अपरोक्षं तत्त्वज्ञानम्। तत्त्वज्ञानाच्च मोक्षः इति सर्वतंत्रसिद्धान्तः। कुतः? तावत् हि जन्यते यावत् जन्मनः सामग्री भवेत्। साक्षात्काराच्च जन्मसामग्री एव क्लेशकर्माशयरूपा ध्वस्ता भवति। ध्वस्ते च मूले नैव

फलं प्ररोहति। अतः जन्मनः सामग्र्यभावात् न पुनर्जायते। जन्माभावे च न पुनः म्रियते तदुभयोः अभावे च न दुःखं प्राप्नोति। अपि च स्वरूपभूतानन्दे एव सदा प्रतितिष्ठति। उक्तं च भगवता विद्यास्वरूपेण—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः। इति ॥ ७ ॥

ननु भगवतः साक्षात्कारः कथं भवति? उपायं दर्शयति—

## विरागपुष्टानन्यभक्तेः परलाभः तस्याः साधनत्वात् ॥ ८ ॥

विराग = वैराग्याप्यायिताद्वैतभक्तेः परलाभः = परस्य परमात्मनः अक्षररूपस्य ब्रह्मणः प्राप्तिः भवति तस्याः = उक्तलक्षणायाः भक्तेः साधनत्वात् = करणत्वात् इत्यर्थः।

भाष्यम्ः—वैराग्येण आप्यायिता अनन्या भक्तिरेव परमस्य पुंसः लाभे उपायभूता विज्ञेया। प्रेमपरवशोहि भगवान् स्वात्मानं उद्घाटयति विरागरक्तस्य प्रेयसः हृदये। विरागो हि भक्तिकवचम् व्यभिचारं वारयति भक्तेः। अतः वैराग्ययुक्ता एव भक्तिः विवेकपुरोगामिनी भगवतः लाभे कारणम्। फलरूपाऽपि इयं भक्तिः प्रेमरूपा भवति साधनरूपा अपि इति विज्ञेयम् इत्यर्थः। तथा च प्रेमैकतनोः भगवतः वाक्यम्—

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्॥ इति ॥ ८ ॥

ननु मरणकालस्य निर्देशः गतिनियामकत्वेन अत्र दृष्टः। कर्म ज्ञानं वा गतेः नियामकं भवन् न निवार्यते उचितत्वात्। मरणकालस्य नियामकत्वं तु न बुद्धिं आरोहति। यच्च बुद्धौ अनारूढं तत् न ग्राह्यं भवति। परंतु भगवता स्वयं कथितत्वात् संदेहः भवति। संदेहश्च शमनीयः। ज्ञानमलो हि संदेहः यावज्जीवति तावत् निरामयं ज्ञानं न उद्भवति। अतः समाधानं पठति—

## शुक्लकृष्णगत्योः शास्त्रीयत्वेऽपि लोकमानसादरणार्थं उल्लेखः तत्त्वज्ञाने कालकृतविशेषस्य अकिंचित्करत्वात् ज्ञानिनः मोहाभावस्यस्वयमेव प्रदर्शितत्वात् च ॥ ८ ॥

सूत्रार्थः—शुक्ल० = सितासितपक्षगत्योः शास्त्रीयत्वेऽपि = शास्त्रदृष्टत्वेऽपि लोकमानस० = तात्कालिकजनतामनःसत्करणार्थं उल्लेखः =

निर्देशः भगवता कृतः। कुतः? तत्त्वज्ञाने = वस्तुज्ञानस्य प्रकरणे काल०= समयविहितभेदस्य अकिंचित्करत्वात् = निष्प्रयोजनत्वात् च = तथा ज्ञानिनः तत्त्वनिष्ठस्य मोहाभावस्य = अविवेकाभावस्य = स्वयमेव = स्वात्मनैव = प्रदर्शितत्वात् = कथितत्वादित्यर्थः।

भाष्यम्—यद्यपि गत्युल्लेखो शास्त्रीयः उपनिषत्सु दृष्टत्वात तथापि अत्र तु भगवता लोकदृष्टिं आद्रियमाणेन तदुल्लेखः कृतः इति मन्तव्यम्। तत्त्वज्ञानस्य मरणकालस्य च न कोऽपि बुद्धिगम्यः संबंधः कल्पयितुं शक्यते। जन्मनः मरणस्य च मुहूर्तं नास्ति। अतः जन्ममरणे भगवदधीने एव तत्रापि तत्त्वज्ञस्य तावत् न एकयापि गत्या संबंधो भवति। सितायां वा असितायां वा गतौ कलेवरं त्यजन् असौ ब्रह्मैव प्राप्नोति। अतः अवसरः एव नास्ति तस्य गतिकथनाय। तस्य तत्रानधिकारात्। अपि च स्वयमेव भगवान् तस्य तत्त्वविदः मोहाभावं वक्ति। अतः तत्त्वज्ञात् भिन्नस्य भवतु गतिद्वयाभ्यां एकया वा गमनम्। तत्त्वज्ञस्य तु न तया लेशमात्रेण अपि संबंधः। लोकमानसं अहानिकरं न विक्षोभयति निरर्थकं युगपुरुषः। अतः लोकमानसे वर्तमानां, शास्त्रेऽपि दृष्टचरां इमां मान्यतां भगवान् सहजतया उल्लिखति। न तेन प्रकृतार्थस्य कापि हानिः। तथा च लोकमानदस्य भगवतः वचनम्—

यत्र कालेत्वनावृत्तिं आवृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥

अग्निज्योतिरहः शुक्लः षण्मासा उत्तरायणम्।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥

धूमो रात्रिस्तथा कृष्णःषण्मासा दक्षिणायनम्।
तत्र चाद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते।
एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥

नैते सृती पार्थ जानन्योगी मुह्यति कश्चन।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ इति ॥ ८ ॥

कर्मयोगे श्रद्धातिशयसम्पत्यर्थं तस्य माहात्म्यं श्रावयन् अध्यायार्थं उपसंहरन्नाह—

## योगस्य प्रशंसनम् परमफलदातृत्वात् ॥ ९ ॥

सूत्रार्थः—योगस्य = कर्मयोगस्य प्रशंसनं = स्तवनं, परमफलदातृत्वात् = श्रेष्ठफलदातृत्वादिति अर्थः ।

भाष्यम्ः—योगी परं आद्यं स्थानं उपैति । तत्स्थानलाभाय हि वेदानां यज्ञानां तपसां दानानां वा प्रवृत्तिः । सम्यक्तया अधीतेषु वेदेषु यत्फलं, सुकृतेषु यज्ञेषु यत् फलं यच्च सुतप्तेषु तपःसु सुदत्तेषु दानेषु च फलं तत् सर्वं अत्येति योगी । योगो हि निरतिशयफलप्रदः । अतः असौ एव येन केनापि प्रकारेण संसाध्यः इति प्रशंसनं योगस्य माहात्म्यसूचकं इत्यर्थः । तथा च योगीशस्य योगेशस्य च वचनं—

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा योगीपरंस्थानमुपैतिचाद्यम् ॥ इति ॥ ९ ॥

॥ इति अक्षरब्रह्मयोगः ॥

## ॥ राजविद्याराजगुह्ययोगः ॥

अन्तिमाध्यायान्ते अशंसत् भगवान् कर्मयोगम् । कर्मयोगश्च न सहजो भवति यावन्न सपरिवारस्य परमात्मनः ज्ञानं स्वाभाविकं भवति । ज्ञानोत्तरमहिमपूर्णवर्तनं हि कर्मयोगः । ज्ञानादृते असौ न आयाति । अतः पूर्वज्ञानं अपेक्षते कर्मयोगः । तत् पूर्वज्ञानं प्रतिजानानः भगवान् नवमाध्यायं आरभते । तस्याध्यायस्येदं आदिमं सूत्रम्—

## ज्ञानस्य राजगुह्यतमत्वादिकं परमात्मतत्त्वगोचरत्वात् ॥ १ ॥

सूत्रार्थः—ज्ञानस्य = वक्ष्यमाणस्य ज्ञानस्य राजगुह्यतमत्वादिकं = राजवत् उत्कृष्टत्वादिकं, आदिना राजविद्यात्वादिकं ग्राह्यं परमात्मतत्त्वगोचरत्वात् = परमात्मस्वरूपविषयत्वात् ज्ञेयम् इत्यर्थः ॥

भाष्यम्ः—वक्ष्यमाणं ज्ञानं तावत् भगवान् गुह्यतमत्वाद्यनेकैः विशेषणैः विशिनष्टि । तस्य विशिष्टत्वं परमात्मतत्त्वविषयत्वात् ज्ञेयम् । गुह्यं धर्मज्ञानं, ततः गुह्यतरं सप्रकृतिपुरुषज्ञानं, ततोऽपि गुह्यतमं ज्ञानं सचराचरस्य नियन्तुः भगवतः अन्तर्यामिणः अस्ति । यावत् न धर्मानुसरणं क्रियते तावत् न प्रकृतिपुरुषविवेकख्यानं साक्षात्क्रियते तावत्

नैवोदेति भगवत्तत्त्वविषयकं ज्ञानम् । इयं साक्षात्कारस्य वैदिकी प्रक्रिया। सम्प्रज्ञातेन योगेन वैराग्याभ्यासलब्धेन प्रथमं तावत् प्रकृतेः पुरुषस्य स्वरूपं निभाल्यते तदनन्तरं संप्रज्ञातेऽपि विगतगर्धेन पुरुषेण परवैराग्याभ्यासबलेन ईश्वरानुकंपया च सचराचरसाक्षिभूतस्य भगवतः अंतर्यामिणः दर्शनं प्राप्यते असंप्रज्ञातदशायाम्। प्राप्तपरमात्मदर्शनस्य भाग्यवतः पुरुषसिंहस्य यदुत्थानं तदेव कर्मयोगस्यपूर्वभूमिका ज्ञेया संप्रज्ञातयोगात्मिका । तदिदं कर्मयोगांगभूतं विज्ञानसमर्थितं ज्ञानं अमंगलघ्नं, सर्वासु विद्यासु राजवत् उत्कृष्टत्वात् राजविद्या, सर्वेषु गुह्येषु राजवत् उत्तमत्वात् राजगुह्यं, अशेषपापमलप्रक्षालकत्वात् पवित्रं, उच्चतमविषयत्वात् उत्तमं, स्वानुभवसिध्धत्वात् प्रत्यक्षावगमं, धर्मानपेतत्वात् धर्म्यं, अतीवसुखसंपादकत्वात् सुसुखं कर्तुं, अविनश्वरफलत्वात् च अव्ययम् इति ज्ञेयम् । तथा चोक्तं भगवता सर्वभूतहितैषिणा—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् । इति ॥ १ ॥

ननु स्वमहिमप्रशंसनं हि आत्मश्लाघा । सा च पापे परिगणिता । कथं तर्हि अपहतपाप्मा भगवान् स्वमहिमवर्णनं प्रतिजानीते ?—आह—

प्रेम्णः महिमज्ञानमूलत्वात् स्वमहिमवर्णनप्रतिज्ञा ॥ २ ॥

सूत्रार्थः—प्रेम्णः = मर्त्यस्य वा अमर्त्यस्य वा प्रेम्णः = अनुरागस्य महिम० = महिम्नः यत् ज्ञानं तन्मूलत्वात् तज्जन्यत्वात् स्वमहिमवर्णन प्रतिज्ञा = स्वस्य यो महिमा–तस्य वर्णनस्य प्रतिज्ञा भगवता कृता इत्यर्थः ।

भाष्यम्—महिमज्ञानस्य मूलकं हि प्रेम, भवतु तत् प्रेम मर्त्यविषयं वा भगवद् विषयं वा । यत्र यत्र प्रेम तत्र तत्र तन्मूलं प्रेमपात्रस्य महत्वज्ञानं स्वाभाविकं वा आहार्यं वा भवति । यो यं न जानाति महिमपूर्वकं न स तस्मिन् अनुरज्यते । महिमज्ञानमूलकः अनुरागः भक्ति–अपरपर्यायः । तत्प्रेमोत्पदार्थं भगवता आत्मनः महिमा गीयते न स्वश्लाघार्थम् । आत्मश्लाघार्थं भगवतः प्रयोजनमेव नास्ति । श्लाघनाभावेऽपि तस्य महिम्नः स्पष्टत्वात् । अतः भगवान् परोपकारार्थं स्वमहिमज्ञानं प्रथमश्लोके प्रतिजानीते इत्यर्थः ॥ २ ॥

विस्तरेण आत्मज्ञानस्य गुह्यतमत्वं स्फोटयन् आह—

तत्त्वस्य अव्यक्तत्वं योगैश्वर्ययुक्तत्वं, अधिष्ठानत्वं, अप्रमेयत्वं, कर्तृत्वेऽपि अलिप्तत्वं, वैषम्यनैर्घृण्यरहितत्वं अध्यक्षत्वं हि गुह्यतमत्वम् ॥ ३ ॥

सूत्रार्थः—तत्वस्य = परमात्मनः अव्यक्तत्वं = अदृश्यत्वं योगैश्वर्य युक्तत्वं = निरतिशयज्ञानक्रियाशक्तिप्रभाववत्वं अधिष्ठानत्वं = आश्रयत्वं, अप्रमेयत्वं = प्रमाणैरनवगम्यत्वं, कर्तृत्वेऽपि अलिप्तत्वं = कर्मकरणस्वतंत्रत्वेऽपि फललेपाभावत्वं, वैषम्यनैर्घृण्यरहितत्वं = विषमतानिर्दयताविधुरत्वं, अध्यक्षत्वं = अधिलोचनत्वं हि = एव गुह्यतमत्वम् = गोप्यतमत्वं ज्ञेयं इत्यर्थः ।

भाष्यम्—प्रतिज्ञातं ज्ञानं तावद् गुह्यतममिति । किमिदं गुह्यतमत्वं नाम ? सूत्रेण समाधत्ते । तथा हि परमात्मनः अव्यक्तत्वं अस्ति । अव्यक्तत्वं च अदृश्यत्वम् । सगुणं सर्वं दृश्यं निर्गुणं च पुरुषस्य तत्त्वं अदृश्यं । ननु प्रकृतिरपि अनुमेयास्तित्वा अदृश्या । सत्यं तथापि जडत्वेन प्रकृतेः ग्राह्यत्वात् आत्मप्रकाश्यत्वात् च तस्याः दर्शनं भवति । परमात्मनः तु अग्राह्यत्वेन, चेतनत्वात् दर्शनं असंभवि । ग्राह्यत्वे च भगवतः जडत्वं स्यात् । तच्चानिष्टम् । अतः स्वरूपेण भगवान् निर्गुणः अव्यक्तः इति ज्ञेयम् । अव्यक्तोऽपि निर्गुणोऽपि असौ गुणपोषकः अतः निर्गुणोऽपि स्वरूपतः स्वमायागुणयोगेन व्यक्तो भवति विश्वरूपेण । तथा च तस्य उक्तिः—

"मया ततमिदं सर्वं जगदव्यक्तमूर्तिना" । इति ।

किञ्च । परमात्मतत्वं हि योगैश्वर्ययुक्तं अस्ति । निरतिशय ज्ञानक्रियाप्रभावो हि योगैश्वर्यम् । तच्च भगवतः तस्य स्वाभाविकमेवास्ति । अनेन ऐश्वर्येण समन्वितः परमात्मा परस्परविरोधीनि अपि तत्त्वानि गुणान् वा स्वस्मिन् युगपत् दर्शयितुं शक्नोति । समस्ततर्कं प्रतिकुर्वत् इदं योगैश्वर्यं मतिमतां वरिष्ठैः अपि अनवगाह्यमेव वर्तते । तथा च भगवदुक्तिः—

"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः" इति । सर्वेषां भूतानां आधारभूतो हि भगवान् स्वयं आधाररहितो भवन् आत्मनः योगैश्वर्यमेव प्रदर्शयति । अपि च "न च मत्स्थानि भूतानि पश्य मे योग-

मैश्वरम् । भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ” इत्यत्रापि परस्पर-विरोधः तस्मिन् अविरोधेन एव वर्तते । भूतभावनः सन् भूतभृदपि सन् असौ न भूतस्थः इति तस्य अचिन्त्यं ज्ञानैश्वर्यम् । परिमितकुटुंबस्य भावनः भर्ता च जीवः अहंममाभिमानलक्षणेन संगेन दूषितो दृश्यते । समस्तस्य ब्रह्माण्डस्य पोषणं कुर्वन्, भावनं कुर्वन्नपि भगवान् स्वप्नेऽपि स्वमहिम्नः न भ्रश्यति न कुत्राऽपि कदाचिदपि कथंचिदपि अहंममाभि-मानविध्यो भवति तदिदं असंगस्य परमात्मनः महदैश्वर्यं ज्ञानप्रभवम् ।

किञ्च । असौ परमात्मा सर्वस्य जगतः अधिष्ठानभूतः अस्ति । अधिष्ठानं हि आश्रयः अवलंबः । सर्वस्याश्रयभूतोऽपि भगवान् आका-शवद् असंग एव तिष्ठति । आकाशे इव मातरिश्वा, तस्मिन् तिष्ठन्ति सर्वाणि भूतानि स्थावरजंगमानि आब्रह्मस्तंबपर्यन्तानि सावकाशानि । तथा च तस्य वचनम्

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय । इति ।

एवंविधो भगवान् अप्रमेयः अस्ति । न प्रमाणानां गोचरोऽस्ति-इत्यर्थः । अर्थस्यास्य पूर्वप्रस्थापितत्वात् न पुनरावृत्तिः क्रियते । अप्र-मेयो भगवान् समेषां प्रमाणप्रमेयव्यवहाराणां वैदिकानां लौकिकानां च अवलंबनभूतः इत्यर्थः ।

किञ्च । कर्ताऽपि परमात्मा अनासक्तिमाहात्म्येन अकर्तैव । फललेपस्य अहंभावमूलत्वात् । सृष्टिस्थिति-अप्ययकरोऽपि भगवान् न तेन कर्मणा लिप्यते । संगाभावात् । तदिदं गुह्यतमं भगवतः तस्य ज्ञानैश्वर्यम् क्रियैश्वर्यम् च । तथा हि तस्योक्तिः—

सर्वभूतानि कौन्तेय प्रकृतिंयान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ इति ॥

अतः एव भगवान् न निर्घृणः न विषमः । वैषम्यनैर्घृण्ये तु सृजमानप्राणिधर्मापेक्षे तस्य स्तः न स्वरूपे तस्य वर्तेते । आरोप्यमाणे च ते तत्त्वतः तस्मिन् न सज्जेते । तथा च वचनम्—

“ न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥” इति

अध्यक्षत्वं हि तस्य पुनः प्रकृतिप्रेरकं भवति। ईक्षणमात्रेणैव तस्य भगवतः महामाया भगवती प्रकृतिः सचराचरं सूते। तथा च तस्य उक्तिः

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनानेनैव कौन्तेय जगद्विपरिवर्तते॥ इति।

तदिदं गुह्यतमं ज्ञानं परमात्मगोचरं जीवात्मानं अपि स्वरूपविषये असंदिग्धं करोति। पारमार्थ्येण तयोः जीवात्मपरमात्मनोः एकत्वात्। संसारदशायां तिरोहितात्मैश्वर्यो हि जीवात्मा प्रबोधदशायां आत्मनः आविस्तरं महिमानं पश्यन् भवति विशोकः। तस्मात् ज्ञानमिदं गुह्यतमं परमात्मगोचरं जीवात्मानं प्रत्यपि उपयुक्ततमं वर्तते इत्यर्थः॥ ३॥

ननु अचिन्त्ययोगैश्वर्यसमन्वितस्य जगतः उत्पत्तिस्थितिलयैक-कारणस्य समेषां भूतानां आत्मभूतस्य भगवतः सर्वे मनुष्याः कथं आदरं वा भजनं वा न कुर्वन्ति? कारणं सूचयन्नाह—

## दैवासुरसंपद्विभागस्य बीजोपन्यासः दैवीप्रकृतियुक्तस्य भजनप्रकारविधानार्थम्॥ ४॥

सूत्रार्थः—दैवासुर = षोडशाध्याये विस्तरेण वक्ष्यमाणयोः देवानां असुराणांच संपत् तयोः विभागस्य बीजोपन्यासः=बीजरूपेण उपन्यासः अत्र दैवी० = दैवीसंपत्समन्वितस्य भाग्यवतः पुरुषस्य भजनप्रकार—विधानार्थम् = सेवाविधिविधानार्थं ज्ञेयः इत्यर्थः॥ ४॥

भाष्यम्—सर्वे जनाः कथं भगवन्तं न आद्रियन्ते इति अत्र अस्ति हेतुः। द्विप्रकारो हि मानवः। देवतुल्यः असुरतुल्यश्च। यस्य दैवीगुण-संपत् असौ देवमानवः यस्य च आसुरीगुणसंपत् असौ असुरमानवः। तत्र शिश्नोदरपरायणाः असुराः जनाः न भगवन्तं आद्रियन्ते। सत्व-शुद्धेः अभावात्। शुद्धान्तःकरणा एव भजनाय अधिकारं प्राप्नुवन्ति। ये च महात्मानः दैवीं प्रकृतिं आश्रिताः सन्तः वर्तन्ते तेषां सत्वशुद्धेः भगवद्भजनयोग्यता भवति। अतः ते एव भगवन्तं आद्रियन्ते। षोड-शाध्याये गुणसंपद्विभागयोगाख्ये च विस्तरेण इदं वक्ष्यते। अत्र तु केवलं तस्य बीजोपन्यास एव ज्ञेयः असौ बीजप्रक्षेपश्च दैवीप्रकृतिं आश्रिताः केन प्रकारेण भगवन्तंभजन्ति तस्य प्रदर्शनार्थः विज्ञेयः। उक्तं च भगवता आदरानादरयोः उदासीनेन हितैषिणा—

अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ इति ॥ ४ ॥

ननु दैवीं प्रकृतिं आश्रिताः महात्मानः भगवन्तं भजन्ति । कीदृशो भगवान् तेषां भक्तव्यो भवति । कुतः प्रश्नः ? भगवतः तस्य सर्वरूपस्य सर्वनाम्नः सर्वगुणधाम्नः न किंचिदेकरूपं नाम वा गुणो वा पक्षपात-योग्यः भवति । न खलु प्रियस्य किमपि एकं अंगं वा गुणो वा प्रियः इति अन्यानि अंगानि गुणाः वा अप्रियाः भवितुमर्हन्ति । प्रेमपात्रं तु कार्त्स्न्येन प्रियं भवितुमर्हति । अन्यथा अर्धजरतीयन्यायः प्रसज्येत । अतः आह—

विश्वतोमुखस्य भजनं अखण्डदृष्टेः एव फललाभात् ॥ ५ ॥

सूत्रार्थः—विश्वतोमुखस्य = सर्वतो मुखस्य सर्वत्र विश्वरूपेण —उपस्थितस्य भगवतः विश्वाभिन्नस्य भजनं = सेवनं कर्तव्यम् । कुतः ? अखंडदृष्टेः = कार्त्स्न्येन दर्शनात् एव न तु अन्यतः इत्येवार्थः फलला-भात् = इष्टस्य मोक्षरूपस्य फलस्य प्राप्तेः इत्यर्थः ॥ ५ ॥

भाष्यम्—यद्यपि भगवतः भजनं कस्यापि एकरूपस्य नाम्नः वा गुणस्य वा न निषिध्यते तथापि विश्वरूपस्य विश्वनाम्नः विश्वकल्याण-गुणसंपन्नस्य विश्वाव्यतिरिक्तस्य एव भगवतः भजनं अधिकफलदं भवति । भगवति तस्मिन् अखण्डे खण्डवृत्तिः न विवेकरमणीया । अस्ति इति स्वीकार्यो भगवान् विश्वरूपः । विश्वरूपेण वर्तमानश्च भज-नीयः । यावद्विस्तरं विश्वं ततोऽपि अनन्तगुणाधिकविस्तरो भगवान् सर्व रूपेण सर्वनाम्ना सर्वगुणैः सर्वाभिः क्रियाभिः च संसेव्यः । संकोचस्य वा खंडदर्शनस्य वा अन्याय्यत्वात् । सर्वरूपेण स्वीकृतो हि भगवान् सहृदयभावेन, पूजितश्च रागद्वेषादिनिखिलदोषजातं क्षिणोति । भेदे सति रागादिदोषोत्पत्तिः स्यात् न अभेदे । अभेदश्च मुख्यः भेदश्च गौणः । अभिन्नो हि भगवान् विश्वेन बाह्येन वा आंतरेण मूलभूतत्वात् विश्वद्रु-मस्य । भगवान् एव स्वयं मूलभूतः भुवनद्रुमरूपेण विकचः दशाविक्षु स्वयमेव स्वात्मन्येव स्वात्मनैव स्वात्मार्थमेव रमते । अतः प्रबोधम् इच्छद्भिः जनैः रागद्वेषादिसमस्तविषमतोच्छेदकरी अखंडदृष्टिः

स्वीकरणीया। ततः एव इष्टतमस्य मोक्षफलस्य लाभो भवति। उक्तं च भगवता विश्वरूपेण—

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते॥
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम्॥
अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्॥
पिताऽहमस्य जगतः माता धाता पितामहः।
वेद्यं पवित्रमोंकारः ऋक्साम यजुरेव च॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम्॥
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन॥ इति॥ ५॥

ननु "क्षीणेपुण्ये मर्त्यलोकं विशन्ति" इति वदता भगवता त्रैय्याः निन्दनं क्रियते। न च भगवता कृतमपि त्रयीप्रोक्तस्य धर्मस्य निन्दनं युज्यते। वेदस्य परमाप्तत्वात् भगवता एव प्रोक्तत्वात् च। स्वप्रोक्तं स्वयमेव चेत् निन्दति अनाश्वासो लोकस्य प्रसज्येत। एवं प्राप्ते आह—

## सकामभक्तेः निन्दनं पुनरावृत्तेः॥ ६॥

सूत्रार्थः—सकामभक्तेः=कामनासहितायाः कृतायाः भक्तेः निन्दनं= निन्दा क्रियते कुतः? पुनरावृत्तेः=पुनर्जन्मावहत्वात् सकामभक्तेः इत्यर्थः।

भाष्यम्—न खलु भगवता परमाप्तस्य वेदस्य निन्दा क्रियते अपि तु वेदार्थस्य व्यवस्था उच्यते। यथाधिकारं कर्माणि विदधन् भगवान् वेदः कामनाविद्धानां कृते काम्यकर्माणि अकामहृतानां कृते च निष्कामकर्मयोगं प्रस्तुवन् विवेकावकाशं ददन् अत्युदारो वेदितव्यः। यदत्र भगवता क्रियते तत् तु वेदव्यवस्थायाः विवेचनं, न वेदाज्ञाविरोधनं निन्दनं वा। अकामभावेन कृतानां कर्मणां फलं आत्मप्राप्तिः अक्षीय-

माणा इति विवेचयन् भगवान् जनानां हितमेव ब्रूते। न खलु वेदनिन्दा-परायणो भगवान् अपि तु वेदार्थरहस्यवेदनपरायणो मन्तव्यः इत्यर्थः। पुनर्जन्मावहत्वात् हेयं फलाभिलाषविद्धं कर्मकरणम्, अपुनर्भवावह-त्वात् च उपादेयं फलाभिलाषाविध्धं कर्मकरणं इति विवेकदर्शको भगवान् हिततमः इत्यर्थः। तथा च तस्य हिततमस्य वचनम्—

त्रैविद्या मा सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्नाः गतागतं कामकामा लभन्ते॥ इति॥ ६॥

फलितं आह—

## निष्कामायाः प्रशंसनं तत्त्वलाभात्॥ ७॥

सूत्रार्थः—निष्कामायाः = विगतफलाभिलाषायाः भक्तेः प्रशंसनं = प्रस्तवनं क्रियते भगवता, कुतः? ततः तत्त्वलाभात्=तत्त्वस्य मोक्षस्वरूपस्य भगवतः परमात्मनः प्राप्तेः इत्यर्थः।

भाष्यम्:—यथा सकामायाः भक्तेः निन्दनं सकामतायाः हेयत्व-प्रतिपादनार्थं तथा निष्कामायाः प्रशंसनं अकामतायाः उपादेयत्वप्रति-पादनार्थम्। निष्कामा भक्तिः तत्त्वं पुरस्करोति। तत्त्वलाभाच्च कृत-कृत्यो भवति। अतः तत्त्वलाभकरत्वात् निष्कामैव भक्तिः प्रशस्यते भगवता। तथा च भक्तानां योगक्षेमवहनशीलस्य अच्युतस्य भगवतः प्रतिज्ञा—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्। इति॥ ७॥

ननु एवं चेत् योगक्षेमवहनशीलं भगवन्तं विहाय कथं विशालो जनसमुदायः अन्यदेवताभक्तो भवति? आह—

## अन्यशरणं मोहात्॥ ८॥

सूत्रार्थः—अन्यशरणं = अन्यासां देवतानां शरणं प्रायः सर्वस्य लोकस्य, मोहात् = तत्त्वज्ञानाभावात् भवति इत्यर्थः।

भाष्यम्:—अनन्यभावेन भजतां जनानां योगक्षेमवहनशीलो

भवत्येव भगवान् अच्युतः तथापि सर्वो जनः तं नैव शरणं याति न वा अनन्यचेतसा तं भजति । प्रायेण सर्वोऽपि जनः भगवत्तत्वमहिमानं च मोहात् अविदन् अन्याः एव देवताः प्रपद्यते । अचिन्त्यो हि मोहमहिमा इत्यर्थः । तथा हि भूतवत्सलस्य भगवतो वचनम्—

येऽप्यन्यदेवताभक्ताः यजन्ते श्रध्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥
यान्ति देवव्रताः देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ इति ॥८॥

ननु राजानुचरन्यायेन वृक्षशाखोध्धरणन्यायेन वा भगवतः अर्चनं अपि सुदुष्करं भवितुमर्हति । भ्रममिमं निरस्यन् आह—

न पदार्थापेक्षा भावप्रियत्वात् भगवतः ॥ ९ ॥

सूत्रार्थः—भगवतः=परमप्रेमस्वरूपस्य परमात्मनः भावप्रियत्वात्= भक्तिभावप्रियत्वात् पदार्थापेक्षा=पदार्थानां लौकिकानां दिव्यानां वा तस्य अपेक्षा न वर्तते अतः न ईश्वरप्रीणनं दुष्करं इत्यर्थः ।

भाष्यम्–भ्रमः एव अयं जनतायाः यद् दुष्करं ईश्वरप्रीणनम् सुकरं च अन्यदेवतानां प्रसादनमिति । सत्यं च ततः विपरीतमेव विद्यते । भक्तिप्रियो हि माधवः न अपेक्षते कदाचिदपि पदार्थान् विधिं वा निषेधं वा अधिकारं वा अनधिकारं वा पाण्डित्यं वा अपाण्डित्यं वा । सर्वेषां स्थावरजंगमानां पदार्थानां पतिः हि भगवान् । न तस्य पदार्थाभावोऽस्ति न वा ज्ञानाभावो वा इतराभावो वाऽस्ति । पदार्थानां निवेदनं तु सूर्याय दीपनिवेदनमिव केवलं भक्तिप्रतीकम् । भावो हि प्रधानः न विधिः वा पदार्थः वा । इतरेषां देवानां प्रसादनं च विधिनिषेधपरिपालनं अपेक्षते, इतरान् अपि बहुविधान् खटाटोपान् । तच्छिद्रे च कुप्येतापि आराध्य–दैवतम् । अत्र तु भावप्रस्तावे विधिनिषेधौ वा छिद्रं वा अन्यत् वा किमपि प्रत्यवायजनकं वैषम्यजनकं वा नैवाऽस्ति । अतः चित्तमात्रसाध्यत्वात् न दुष्करं ईश्वराराधनम् । तथा हि भावतोष्यस्य भगवतः वचनम्—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ इति ॥ ९ ॥

ननु ज्ञानमूलस्य प्रेम्णः किं रहस्यम् ? आह सफलं—

समर्पणं प्रेमरहस्यं कर्मबन्धविनिवृत्तेः ॥ १० ॥

सूत्रार्थः—समर्पणं = सर्वस्वस्य प्रियचरणयोः त्यागाभिमानत्यागपूर्वकं समर्पणं प्रेमरहस्यं = प्रेम्णः तत्त्वम् मर्म वा । कुतः ? कर्मबन्धविनिवृत्तेः = समर्पणेन कर्मणां सफलानां बन्धस्य निवर्तनात् इत्यर्थः

भाष्यम्—समर्पणं हि प्रेममर्म । प्रेम च समर्पणशून्यं च इति विरोधास्पदम् । प्रेमपात्रार्थं स्वात्मनः अपि समर्पणं कुर्वत् प्रेम आत्मप्रतिष्ठां लभते । प्रेम च ददाति न गृह्णाति । तत्सुखसुखित्वेन आत्मानं लभमानं प्रेम अयाचकं सत् सर्वस्वार्पकं भवति । समर्पितं च नैव स्मरति । उत्तरोत्तरं समर्पणेन अकिंचनं भवत् शोभते प्रेम । समर्पणस्य च अवधिः नास्ति । समर्पणयोगे सरित् हि गुरुः । गौरीगुरोर्निःसृता भगवती जाह्नवी, शिखरात् शिखरं अवतरन्ती, वनानि च भिन्दन्ती, पाषाणेषु च स्खलन्ती, तीरजान् तरून् क्षेत्राणि च पुष्यन्ती, कलरवं कुर्वन्ती, क्वचित् चांचल्यं क्वचिच्च गांभीर्यं धारयन्ती, अनिर्विण्णेन चेतसा दीर्घं अध्वानं गच्छन्ती, प्रतिक्षणं उर्मिमालां बिभ्रती क्षारोदधिना संगच्छते, संगच्छमाना च नामरूपे विहाय तद्रूपा एव भवति । एवमेव जीवजाह्नवी समर्पणयोगमयी ज्ञेया भगवत् स्वरूपे निलीयमाना इत्यर्थः । समर्पणयोगो हि प्रेमजन्यः कर्मबन्धं छिनत्ति ॥ तथा च स्वसमर्पणचतुरस्य भगवतः मंगलं वचनम्—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ इति ॥ १० ॥

भगवद्भक्तेः माहात्म्यान्तरं श्रावयन्नाह—

## अनतिवदनीयं सत्कर्ममाहात्म्यम् सत्त्वादेव ॥ ११ ॥

सूत्रार्थः—अनतिवदनीयं = अनतिकथनीयं, सत्कर्ममाहात्म्यम् = सतः ईश्वरस्य अर्थे कृतस्य कर्मणः महत्त्वम्। कुत? सत्त्वादेव = सत् स्वरूपत्वादेव इत्यर्थः।

भाष्यम्—अनिर्वचनीयं हि सत्कर्मणः माहात्म्यम्। सत्कर्ममात्रं हि भगवतः सत्स्वरूपस्य पूजकं भवति। सुदुराचारोऽपि एकेनापि सत्कर्मणा महतो भयात् उत्तीर्णो भवति। एकापि अल्पापि समिद्धा दीपशलाका यथा सूचिभेद्यं ध्वान्तं भिनत्ति तथा एकमपि भक्त्यर्थं सत्कर्म महद् अन्धं तमः आन्तरं भिनत्ति। इदमेव भगवद्भक्तेः माहात्म्यम्। तथा च सत्कर्मप्रभावज्ञस्य भगवतः वचनम्—

अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति॥
मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्॥ इति ॥ ११ ॥

सहेतुकं कर्तव्यमाह—

## भक्तिरेव लोकस्य अनित्यत्वात् असुखत्वाच्च ॥ १२ ॥

सूत्रार्थः-भक्तिरेव=अन्यव्यवच्छेदोऽवधारणार्थः भगवतः परमप्रेमरूपा अमृतस्वरूपा च भक्तिरेव करणीया कुतः? लोकस्य=कर्मफलभोगायतनस्य देहस्य अनित्यत्वात्=अध्रुवत्वात् च=तथा असुखत्वात्=अल्पसुखत्वात् इत्यर्थः।

भाष्यम्—यतो मानुषो देहः अनित्यः असुखश्च अतः मनुष्यस्य एकमेव कर्तव्यम्। तच्च भक्तिरूपम्। भक्तिश्च परमप्रेमरूपा अमृतस्वरूपा च। परमपुरुषश्च तस्याः विषयः। अतः भगवद्भजनमेव फलति। भक्तिरेव हरितोषणा। हरितोषणपरायणो भक्तो हि किमपि समृद्धं सौभाग्यं अस्ति भगवत्याः वसुंधरायाः अपि इत्यर्थः॥ तथा प्रेमतत्त्वज्ञस्य भगवतः वचनम्—

किं पुनर्ब्राह्मणाः पुण्याः भक्ताः राजर्षयस्तथा।
अनित्यमसुखं लोकं इमं प्राप्य भजस्व माम्। इति ॥ १२ ॥

ननु भक्तिः चेद् गरीयसी कृतं ज्ञानेन इत्यतः आह—

## ज्ञानादभिन्ना भक्तिः समानफलत्वात् ॥ १३ ॥

सूत्रार्थः—ज्ञानात्=तत्त्वज्ञानात् अभिन्ना=अविशिष्टा भक्तिः=परमानुरागरूपं प्रेम। कुतः समानफलत्वात्=भक्तिज्ञानयोः तुल्यफलत्वात् इत्यर्थः।

भाष्यम्:—न खलु ज्ञानभक्त्योः कोऽपि भेदः अस्ति। तथा हि जलमेव हिमं, हिममेव च जलं, न हिमजलयोः तात्त्विकः भेदः, भक्तेः घट्टस्वरूपं ज्ञानं, ज्ञानस्य च प्रवाहि स्वरूपं भक्तिः, न एतावता तयोः कश्चन भेदो भवति। कुतः एतत् निश्चीयते ? फलसाम्यात्। यद्धि फलं ज्ञानस्य तदेव फलं भक्तेरपि। भगवत्-प्राप्तिः फलं ज्ञानस्य तदेव च भक्तेरपि वर्तते। अतः नास्ति तयोर्भेदः। तथा चोक्तं परमज्ञानस्वरूपेण विश्वभक्तेन भगवता—

मन्मनाः भव मद्भक्तः मद्याजी मां नमस्कुरु।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः॥ इति ॥ १३ ॥

॥ इति राजविद्याराजगुह्ययोगः ॥

## ॥ अथ विभूतियोगः ॥

नवमाध्याये भगवान् प्रणिजगाद कर्मयोगांगभूतं विज्ञानेन सहितं तत्त्वज्ञानं भक्त्यावहम्। अपहतपाप्मनः आत्मनः विशददर्शनार्थं भक्तिप्रवृत्तिः। निष्ठां प्राप्ता इयं भगवती सर्वपापप्रणाशं करोति। परमात्मानं च भक्तपरवशं विदधाति। चिन्माधुर्येण परिप्लुता इयं भक्तानुगमनं कारयति भगवतः। तस्याः देव्याः दार्ढ्याय परमात्मनः निरंकुशं कृत्स्नैश्वर्यं निरूपयितव्यं। विदितभगवदैश्वर्यो हि जीवात्मा सर्वभावेन तं निःशंकं शरणं इयात्। अतः विभूतिख्यापनव्याजेन भक्तिं परिपोषयन् भगवान् यदाह तदनुवदन् कथयति—

## हितकाम्यया विभूतिख्यापनप्रतिज्ञा ॥ १ ॥

सूत्रार्थः—हितकाम्यया = अर्जुनद्वारेण समेषां जीवानां प्रिय—

प्रातिकांक्षया विभूति० = आत्मनः विविधभवनाख्यैश्वर्यस्य कथनाय भगवता प्रतिज्ञा कृता वेदितव्या आदौ इत्यर्थः ।

भाष्यम्—प्रेमपारावारो हि परमात्मा अधुना स्वशिष्यस्य अर्जुनस्य प्रश्नं अपि न प्रतीक्षते । स्वयमेव तस्य परमहितं कांक्षमाणः स्वविभूतीनां आख्यानं स्वीकरोति । प्रियतमं हि हितं भवति । प्रियतमश्च परमात्मैव समेषां भूतानां । जानातु न वा जानातु सर्वो हि जन्तुः परमात्मनि स्निह्यत्येव । तं कमते एव । तद्गतो हि परमात्मा समेषां आब्रह्मस्तम्बान्तानां अभिवांछितः अस्ति एव । तस्य हिततमस्य प्रियतमस्य परमात्मनः विभूतिश्रवणं रोचते प्रेम्णे । को नाम तृप्येत् रसविद् प्रेमपात्रस्य पराक्रमश्रवणे । हृदयरसायनभूता हि प्रेमपात्रस्य कथा भवति । अतः श्रवणे तृप्तिं प्राप्नुवते अर्जुनाय तद्द्वारेण च समस्तेभ्यः भूतेभ्यः श्रेयोर्थिभ्यः स्वविभूतिख्यापनार्थं आदौ भगवान् प्रतिजानीते । तथा च तस्य उक्तिः—

भूय एव महाबाहो श्रुणु मे परमंवचः<br>
यत्तेऽहं प्रियमाणाय वक्ष्यामि हितकाम्यया । इति ।

भगवद्वचन-श्रवण-मनन-निदिध्यासने हि हितावधिः अस्ति इत्यर्थः ॥ १ ॥

ननु किं तद् वचः भगवतः ? आह—

## दुर्विज्ञेयः भगवत्प्रभावः आदित्वात् शिशुवत् ॥ २ ॥

सूत्रार्थः—दुर्विज्ञेयः=देवानां समाधिभाजां महर्षीणामपि दुरवगाह्यः भगवत्प्रभावः=भगवतः परमात्मनः सत्तातिशयः कुत ? आदित्वात्=भगवतः तस्य समस्तस्य जगतः उत्पत्तिकारणत्वात्, शिशुवत्=बालवत् इत्यर्थः ।

भाष्यम्:—सुकृतप्रकर्षात् प्राप्तदेवत्वादीनां समाधिप्रवणानां महर्षीणामपि दुर्विज्ञेयः भगवत्प्रभावः । प्रभावश्च सत्तातिशयः । भगवतः सत्तावाहिनः हि सर्वे भावाः । यथा पितुः लब्धजन्मानः शिशवः तस्य प्रभावं वेत्तुं नैव समर्थाः तथैव परमात्मनः लब्धसत्ताकाः सर्वे भावाः परमात्मनः तस्य सत्तातिशयं मातुं नैव प्रभवन्ति । समाम्नातं च भगवति वेदे "को अध्धा वेद क इह प्रवोचत् कुतः आ जाता कुतः इयं

विसृष्टिः ? अर्वाक् देवाः अस्य विसर्जनेन, अथा को वेद यतः आबभूव', अतः दुरवबोधविहारतंत्रः भगवान् सर्वतंत्रस्वतंत्रः । तस्मात् श्रवणीयं तस्य हिततमं वचनं इत्यर्थः । तथा च भगवतः वाक्यं—

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ इति ॥ २ ॥

ननु सत्तातिशयवतः भगवतः वेदने किं फलं ? आह—

## प्रभाववेदनात् पापप्रमोक्षः ॥ ३ ॥

सूत्रार्थः—भगवतः प्रभाववेदनात्=निरतिशयसत्तायाः ज्ञानात् पापप्रमोक्षः=पापेभ्यः मुक्तिः भवति इत्यर्थः ।

भाष्यम्ः—यो हि वेत्ति भगवतः सत्तानिरतिशयत्वं सः सर्वेभ्यः पापेभ्यः प्रमुच्यते । रागद्वेषमूला पापजनिः । रागद्वेषौ च द्वैतभावे स्तः । न हि अद्वितीये भगवति सर्वसत्तास्वरूपिणि ज्ञाते रागद्वेषयोः अवस्थितिः कल्पेत । तज्जनकस्य अज्ञानस्य प्रणाशात् । नश्यति च अज्ञानं सर्वभूतात्मभूतात्मभूते भगवति विज्ञाते । अतः भगवत् प्रभाववेदनात् भवति सर्वेषां पापमलानां प्रहाणिः । तथा च सर्वसत्तामयस्य तस्य परमात्मनः उक्तिः—

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते । इति ॥ ३ ॥

ननु अदृश्यस्य भगवतः प्रभावातिशयं कथं जानीमहे । आह—

## अन्तर्यामित्वं भूतभावनियामकत्वात् ॥ ४ ॥

सूत्रार्थः—भगवतः अंतर्यामित्वं = अंतःनियन्तृत्वं ज्ञेयम् । कुतः ? भूतभाव० = भूतानां चतुर्विधानां, तद्भावानां च बुद्ध्यादीनां अयशः पर्यन्तानां नियामकत्वात् = नितरां यन्त्रणकारकत्वात् इत्यर्थः ।

भाष्यम्—मलिनचेतसां अदृश्योऽपि भगवान् विमलचेतसां दृश्यो भवति । तस्य भगवतः अंतर्यामित्वेन अवस्थितिः वर्तते । अतः सर्वेषां नासौ प्रकाशः । अन्तर्यामित्वं च तस्य, भूतानां स्थिरजंगमानां, तेषां भावानां च नियामकत्वात् ज्ञेयम् । अस्ति समेषां भूततद्भावानां नियन्ता

परमेश्वरः यस्य नियन्त्रणेन नियमितं सकलं इदं ब्रह्मचक्रं विपरिवर्तते प्रतिक्षणम्। न तमत्येति कश्चन। हृदिस्थितो हि सर्वेषां, साक्षात् पश्यन् सर्वमिदं विश्वं, यथाकालं यथादेशं यथानिमित्तं चालयति—सर्वान् अन्तर्भावान् च यथादेशकालनिमित्तं स्फोरयति। तेन स्वयं सर्ववशित्वं सिध्यति। तथा च तस्य वचनं—

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः।
सुखं दुःखं भवो भावो भयं चाभयमेव च॥
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः॥
महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः॥ इति॥ ४॥

ननु तस्य भगवतः अंतर्यामिणः सर्वेश्वरस्य वेदनेन अस्माकं किं आयातं? आह—

सततयुक्तानां भगवदुपयानं तद्दत्तबुद्धियोगात्॥ ५॥

सूत्रार्थः—सततयुक्तानां = नित्याभियुक्तानां भगवदुपयानं=भगवतः तस्य समीपे गमनं भवति। कुतः? तद्दत्तबुद्धियोगात् = तेन प्रसन्नेन भगवता अर्पितसमत्वबुद्धियोगात् इत्यर्थः।

भाष्यम्:—यो हि भगवतः सत्तातिशयं विभूतिं च तत्त्वतः वेत्ति सः अविकंपेन योगेन युज्यते। प्रीतिपूर्वकं न कामना पूर्वकं, नित्यभगवल्लग्नबाह्याभ्यन्तरकरणानां स्वे स्वे कर्मणि बालानामिव क्रीडतां तेषां भवति भगवदुपयानम्। तच्च प्रसन्नेन भगवता दत्तेन समत्वबुद्धिलक्षणेन भवति। योऽयं भगवदर्पितसमत्वबुद्धिलक्षणो योगप्रसादः स एव भजतां महान् लाभः। तथा हि कथयति प्रभुः—

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः॥
अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते।
इति मत्वा भजन्ते मां बुधाः भावसमन्विताः॥
मच्चित्ताः मद्गतप्राणाः बोधयन्तः परस्परम्।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्
दत्दामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ इति ॥ ५ ॥

ननु हृदयतिमिरनाशाभावे कथं भगवदुपयानं स्यात्? भगवदनुग्रहं अतुल्यं स्फोरयन्नाह—

अज्ञानजतमोनाशः भगवदनुकंपयैव अधिकारात् ॥ ६ ॥

सूत्रार्थः—अज्ञान० = अविद्याजनिततिमिरप्रहाणिः भगवदनुकंपयैव = साधनान्तरनिवारणं अवधारणार्थः । भगवतः तस्य तरुणकरुणावरुणालयस्य करुणया एव भवति, नान्यथा इत्यर्थः । कुतः ? अधिकारात् = तस्याः करुणया एव तमोनाशे अधिकृतत्वात् इत्यर्थः ।

भाष्यम्—त्रिलोकिदीपो भगवान् भास्करः, व्योमदीपो भगवान् चन्द्रः च यत्र प्रवेष्टुं न पारयते तत्र हृदयप्रदेशे गाढान्धकाराभिभूते अज्ञानजनिते भगवान् अंतर्यामी एव प्रकाशं प्रसारयति। यस्मिन् सुकृतमूर्तौ वसुंधरातिलकभूते भगवतः अनुकंपा अवतरति अज्ञानतिमिरनाशिनी स एव जानाति भगवदनुकंपामूल्यम्। यस्य हृदिस्थितं जननमरणप्रसु अज्ञानजंतमः स्वयंज्योतिर्भगवान् एव अनुकंपया धुनोति तस्य भावस्य महिमानुवर्णने सहस्रमुखः शेषोऽपि असमर्थः एव। जानाति कश्चित् शुकोः वा सनत्कुमारो वा नारदो वा व्यासो वा प्रह्लादो वा भगवदनुकंपामूल्यम्। अहो तेषां भाग्यम्। आन्तरतमोनाशे च अधिकृता भगवतः अनुकंपैव । "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ? तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति इति च श्रुतिः। ज्योतिषां ज्योतिः असौ भगवान् अनुगृह्णाति स्वभक्तं आत्मज्योतिर्दानेन। योऽयं अनुग्रहः सः सर्वेभ्योऽपि भगवत्प्रसादेभ्यः श्रेष्ठः विज्ञेयः। आत्मस्वरूपप्रापकत्वात् इत्यर्थः। तथा करुणालयो भगवान्—

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता । इति ॥ ६ ॥

संक्षेपेण विभूतिकथनात् अतृप्तः विस्तरेण च श्रोतुकामः अर्जुनः यत् कृतवान् तदनुवदन्नाह—

## विभूतिज्ञानार्थं प्रार्थना ॥ ७ ॥

सूत्रार्थः—विभूतिज्ञानार्थं = भगवतः विविधविशेषरूपेण प्रकटितात्मनः ऐश्वर्यज्ञानार्थं प्रार्थना = अर्जुनस्य स्तुतिः ज्ञेया इत्यर्थः ।

भाष्यम्—विस्तरेण भगवतः निरंकुशं ऐश्वर्यं श्रोतुकामः अर्जुनः प्रार्थयति भगवन्तम् । प्रार्थना हि हृदयद्राविणी । प्रार्थनया द्रवीभूतो गुरुः शिष्यकल्याणं अपृष्टमपि गुह्यमपि ब्रूयात् इत्यर्थः । तस्मात् भगवतः विभूतेः ज्ञानार्थः अर्जुनस्य स्तुतिः । तथा च तस्य श्लोकाः ।

परं ब्रह्म परं धाम पवित्रं परमं भवान्
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा
असितो देवलोऽव्यासः स्वयं चैव ब्रवीषि मे ॥
सर्वमेतदृतं मन्ये यन्मां वदसि केशव
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ॥
भूतभावन भूतेश देवदेव जगत्पते ॥
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् । इति ॥ ७ ॥

अर्जुनेन प्रार्थितो भगवान् यदाह तस्य रहस्यं संगिरते—

## आनन्त्यं विभूतेः अनन्तत्वात् ॥ ८ ॥

सूत्रार्थः—आनन्त्यं = इयत्ताशून्यत्वं विभूतेः = भगवतः विविध भावैरवस्थितेः । कुतः ? अनन्तत्वात् = अन्तशून्यत्वात् भगवतः शक्तेः इत्यर्थः ।

भाष्यम्—गणयेत् भूमेः रजांसि, दिवः तारकाणि, पर्जन्यस्य च धाराः कश्चित्, सहस्रेणापि पुरुषायुषैः न च संख्यातुं शक्यं भगवतः

विभूतिपरिगणनम्। अनन्तो हि भगवान् अनन्तशक्तिः अनन्तेनैव भावेन वर्तते। अतः भगवान् अपि आत्ममहिमानं पूर्णं वेत्ति न वेत्ति स्याद् आशंका। सोऽपि प्राधान्येनैव काश्चिद् विभूतीः आत्मनः वक्ष्यति। तथा हि "हन्त ते कथयिष्यामि"–इत्यारभ्य–"मम तेजोंऽशसंभवं" इत्यन्तः संदर्भः। अनन्तासु भगवद्विभूतिषु कतिपयविभूतिनामेव संग्राहकः। ज्ञातभावात् भगवतः अज्ञातभावो हि भगवान् अनन्तः इति संक्षेपः इत्यर्थः ॥ ८ ॥

अध्यायार्थं उपसंहरन्नाह—

## एकांशेन जगद्रूपेण संस्थितिः च उत्कर्षात् ॥ ९ ॥

सूत्रार्थः —च = तथा एकांशेन जगद्रूपेण = विश्वाकारेण एकेन अवयवेन संस्थितिः = सम्यग् अवस्थितिः साम्याधिकवर्जितैश्वर्योत्कर्षात् इत्यर्थः।

भाष्यम्:—एकः एव अंशः भगवतः ऐश्वर्यस्य विश्वरूपेण प्रकटः अस्माभिः दृश्यते। तेन च सर्वभूतात्मकेन एकेन अंशेनैव ज्ञातेन परितृप्ता भवेम विस्मिताश्च। न खलु पिपीलिका शर्करापर्वतं अत्तुं पारयति एकेनैव कणेन अतितृप्तिं गता। समाम्नातं वेदेऽपि "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति। तस्मात् अनन्तं हि ब्रह्म। अनन्तं च तस्यैश्वर्यम्। क्रीडति च अनन्तं एव अनन्ते। तथा च मन्त्रवर्णः–पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति। अस्ति च भगवतो वचनम् अस्यार्थस्य द्योतकं

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।
विष्टभ्याहमिदं सर्वं एकांशेन स्थितो जगत् ॥ ९ ॥

॥ इति विभूतियोगः ॥

## ॥ अथ विश्वरूपदर्शनयोगः ॥

ननु शिष्यानुग्रहाय भगवता गुह्यं अध्यात्मसंज्ञं वचः उक्तं, तेनैव शिष्यस्य व्यामोहः व्यपगतः। किमर्थं तर्हि विश्वरूपस्य दर्शनाय तस्य विज्ञप्तिः? विज्ञप्तिः तु संशयं व्यनक्ति। इच्छति श्रुतभगवदनुभावो अर्जुनः ऐश्वरं रूपं द्रष्टुम्। सेयं इच्छा संशयद्योतिका स्याद् इति समादधन् आह—

श्रवणात् दर्शनं ज्यायः सद्यः प्रतीतिकरत्वात् ॥ १ ॥

सूत्रार्थः—श्रवणात् = श्रुतेः दर्शनं = साक्षादवलोकनं ज्यायः = प्रशस्यतरं कुतः ? सद्यः = अविलंबेन प्रतीतिकरत्वात् = प्रत्ययोत्पादकत्वात् इत्यर्थः ।

भाष्यम्—श्रुतेः दृष्टं तावत् ज्यायः । श्रवणाक्ष्णोः अक्षी तावत् सद्यः प्रतीतिकरम् । यद्यपि भगवतः कथनादपि अर्जुनस्य प्रतीतिः अस्ति एव । तथापि श्रुतं यावद् दर्शनारूढं न भवति तावत् न हृदयस्य पूर्णं समाधानं जायते । प्रत्यक्षा हि अविद्या प्रत्यक्षेणैव ज्ञानेन निवृत्तिं याति । अतः योग्या अर्जुनस्य विश्वरूपदर्शनाय विज्ञप्तिः अपि च समर्थो गुरुः साक्षात्कारं कारयति । साक्षात्कारावसाना हिं विद्या भवितुमर्हति । सोऽयं साक्षात्कारः ब्रह्मविद्यायां तु अनिवार्यः । यावन्न साक्षात् दृश्यते परमात्मा तावत् न आयुष्मान् संशयः क्षीयते, न चिरंजीवो विपर्यासः म्रियते । संशयविपर्यासविध्धं च ज्ञानं न अज्ञानादतिरिच्यते । अतः श्रुतस्य साक्षात्करणं संशयविपर्यासनिवर्तकत्वेन अनिवार्यं भवति । तस्मात् उचिततमा अर्जुनस्य विज्ञप्तिः तथा च ते विज्ञप्तिश्लोकाः—

मदनुग्रहाय परमं गुह्यं अध्यात्मसंज्ञितं ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशः मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥
एवमेतद्यथात्थ त्वं आत्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रुपमैश्वरं पुरुषोत्तम ॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ इति ॥ १ ॥

फलितं आह—

अतः दर्शनार्थं विज्ञप्तिः ॥ २ ॥

सूत्रार्थः—अतः = अस्मात् हेतोः दर्शनार्थं = विश्वरूपदर्शनार्थं विज्ञप्तिः = अर्जुनस्य भगवद्समक्षं विज्ञापना ।

भाष्यम्—दर्शनं हि साक्षात् संशयविपर्यासनिवर्तकम्। तस्मात् अत्र अर्जुनः विज्ञापयति भगवन्तं आत्मनः ऐश्वरं रूपं दर्शयितुं इत्यर्थः॥२

अथैवं दर्शनदानाय प्रार्थितः भगवान् किं अकरोत्? दर्शयन् आह—

स्वीकारः दृष्टिदानं च ॥ ३

सूत्रार्थः—स्वीकारः = प्रार्थनायाः शिष्यस्य अंगीकारः गुरुणा भगवता कृतः प्रसन्नेन चेतसा। च = तथा दृष्टिदानं = भगवतः विश्वरूपस्य दर्शनाय उचितायाः दृष्टेः = चक्षुषः समर्पणं कृतं इत्यर्थः।

भाष्यम्—समर्थो गुरुः शिष्याकांक्षां उचितां पूरयत्येव। भगवान् च सर्वसमर्थो गुरुतमः। आत्मप्रियस्य सख्युः शिष्यस्य प्रार्थनां भगवान् अंगीकरोति तं समाधासयन्। किं किं न करोति भगवान् प्रसन्नः? न केवलं अंगीकृता प्रार्थना-दर्शनाय दृष्टिः अपि अर्जुनाय दत्तवान्। सेयं दृष्टिः भगवतः अनुग्रहः। महत्वं च तस्याः अपरिमितं। गुरुवर्यो यद् ददाति तत् दृष्टिरेव। चक्षुरुन्मीलनो गुरुः ज्ञानांजनशलाकया सर्वस्वेन आत्मीयेन सर्वथा पूज्यो भवति। तथा च भगवतः अनुकंपामयानि वचनानि।

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नानावर्णाकृतीनिच॥
पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत॥
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि॥
न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्॥ इति॥ ३॥

ननु केयं दृष्टिः नाम? दर्शनं च चर्मचक्षुषा भवति। न तत् भगवद्दर्शने प्रभवति। तस्य तत्रानधिकारात्। प्रत्यवायभूतत्वाच्च भगवद्दत्तस्य चक्षुषः दिव्यत्वं विशदयन् समादधाति—

दिव्यदृष्टिः समाधिः उपपत्तेः॥ ४॥

सूत्रार्थः—दिव्यदृष्टिः = दिव्या चासौ दृष्टिश्च दिव्यदृष्टिः अलौकिकदर्शनसामर्थ्यं नाम समाधिः = विश्वदर्शनसमर्थो सात्त्विकचित्तस्य अवस्थाविशेषो विज्ञेयः । कुतः ? उपपत्तेः = योग्यत्वात् इत्यर्थः ।

भाष्यम्ः—न खलु सामान्यतया प्रभवति चर्मचक्षुः भगवद् दर्शने । चर्मचक्षुषः स्थूलदर्शनसामर्थ्यात् । भगवतः च सौक्ष्म्यावधेः तस्य अगोचरत्वात् । "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इत्यादिश्रुतिवचनेभ्यः समाधिगम्यं भगवद्दर्शनम् इत्यध्यवसीयते । समाधिश्च योगापरपर्यायः चित्तस्य विशुद्धस्य सत्वैकतानस्य अवस्थाविशेषः । तस्मिन् अवस्थाविशेषे अपगतरजस्तमस्के परितः प्रद्योतमाने सत्त्वविशेषपरिप्लुते दर्पणे इव निर्मले चेतसि भवति भगवतः सपरिवारस्य साक्षात् दर्शनम् ! योगेन चक्षुष्मान् भवति । इतरस्तु सचक्षुअपि अचक्षुरेव । दर्शनीयस्य दर्शनवंचनात् । तस्मात् अस्ति कापि अलौकिका-अलोकसाधारणा योगावस्था यस्यां प्रायः दर्शनदानकृपणो भगवान् दर्शनार्पणोदारो भवति । सोऽयं समाधिः एव अत्र दिव्यदृष्टिः ज्ञेया । इतरथा हि असमंजसं स्यात् भगवतः वचनं मायाविनः इव । नायं मायाविनः कश्चित् खेलः । अयं तु भूरिकरुणस्य भगवतः अनुकंपोद्घाटनम् । अतः दिव्यदृष्टिः समाधिः । एतच्च बुद्धिगम्यम् । तथा च पतंजलिः "तदा द्रष्टुः स्वरूपे अवस्थानम्" इति ॥ ४ ॥

ननु दृष्टिदानानन्तरं अर्जुनेन भगवतः अनन्तं अपारं अतलं च विश्वरूपं दृष्टम् । अस्य रूपस्य साक्षात्कारेण किं भवति भक्तस्य साधकस्य च ? आह—

## विश्वरूपेण प्राकट्यं अहंकारदलनार्थम् ॥ ५ ॥

सूत्रार्थः-विश्वरूपेण = विश्वाकारेण प्राकट्यं = आविर्भावः अहंकारदलनार्थम् = अहंकारस्य पेषणार्थं भवति इत्यर्थः ।

भाष्यम्—बहूपकरोति विश्वरूपेण प्राकट्यं भगवतः । यदा खलु अयं ब्राह्मणः विश्वरूपेण आविस्तरं भगवन्तमेव पश्यति तदा विलीनाति तस्याहंभावः । अहंकारो हि वज्रतुल्यः अन्तरायरूपो भगवतः दर्शने । स यदा चूर्णो भवति क्षेत्रे इव सागरः हृदयक्षेत्रे भगवत्सागरः सच्चिदानन्दरूपः उत्प्लवते । स्वरूपधृतिस्वरूपकः आघातस्य प्रत्याघातकारकरूपोऽयं अहंकारः भगवतः विश्वरूपस्य दर्शने समूलकाषं हन्यते । ततः सर्वरूपेण सर्वनाम्ना वर्तमानस्य भगवतः स्वीकरणं सहजं भवति । न ततः प्राक् ।

भगवतः कार्त्स्न्येन च स्वीकारः नम्रतमं विदधाति जीवं प्रणम्रश्च जीवात्मा कान्तिमान् भाति । ईश्वरप्रियश्च भवति । विश्वरूपस्य साक्षात्कारेण दलिताहंभावस्य अमानिनः जीवस्य यद् दैन्यं तत् कमनीयं भवत् भगवन्तं अपि अनाकृष्टं प्रायेण आकर्षति । आकर्षत् च भगवन्तं स्वमयं करोति । स्वीभूतश्च भगवान् उदरं अपि अंतरं विधुनोति । आत्मस्वरूपे च जीवात्मानं ध्वस्तोपाधिं निमज्जयति । ततः किं भवति तत् तु तौ एव जीवात्मपरमात्मानौ जानीतः। अनिर्वचनीयं खलु साक्षात्कारसुखम् इत्यलं पल्लवितेन । तथा च भगवतः विश्वरूपेण प्रकटितस्य वर्णनकारकानि वचनानि अर्जुनस्य च दीनस्य स्तुतिप्रस्तावभूतानि—

एवमुक्त्वा ततो राजन् ! महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥
ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ इति ॥ ५ ॥

दृष्टविश्वरूपः अर्जुनः किं करोति ? आह—

## दर्शनात् स्तुतिः ॥ ६ ॥

सूत्रार्थः—दर्शनात् = भगवतः विश्वरूपस्य साक्षात्कारात् स्तुतिः = प्रशंसनं भवति इत्यर्थः ।

भाष्यम्—साक्षात्कारो हि अभिमानं उत्खातयन् जीवात्मने सत्वजन्यां दीनतां ददन् सत्यस्य उल्लेखे प्रेरयत्येव । स्तुतिश्च सत्यस्य सहजं वर्णनं उल्लासपूर्णम् । सत्यस्य हृदयस्वीकारः मौनेन वैखर्या वा

तस्य भावपूर्णं चिन्तनं प्रेमपूर्वकः उल्लेखः वा स्तुतिः वा प्रार्थना वा कथ्यते। सोऽयं साक्षात्कारस्य स्वभावः। अतः इमं स्वभावं साक्षात्कारस्य अनुसरन् अर्जुनः भगवन्तं गद्गदेन कण्ठेन भावपूर्णेन च हृदयेन स्तौति। तथा च तस्य प्रार्थिना श्लोकाः "पश्यामि देवांस्तव'—इत्यारभ्य —"प्रतपन्ति विष्णो" इत्यन्ताः ॥ ६ ॥

ननु भगवान् अर्जुनस्य प्रियतमः आसीत्। स्वयं तस्य प्रियतमो भवन् अर्जुनः कथं अजानन् इव आक्रोशति "विज्ञातुमिच्छामि" इति? आहः—

ईशप्रवृत्तिजिज्ञासा संदेहात् ॥ ७ ॥

सूत्रार्थ—ईश० = सर्वेशस्य भगवतः प्रवृत्तिं ज्ञातुं अर्जुनस्य इच्छा संदेहात् = भगवतः तस्य अदृष्टपूर्वस्य विश्वरूपस्य दर्शनात् जीवनात् संदेहात् भवति इत्यर्थः।

भाष्यम्—प्रतिक्षणं भगवन्तं जानानोऽपि अर्जुनःअद्य यावत् कदापि अदृष्टचरेण भगवतः अपारेण अनन्तेन विश्वरूपेण दारुणेन चकितः सन् अह्नोभावनिलीनः एवं पृच्छति। अपरिमितसत्ताशीलस्य भगवतः कार्त्स्न्येन दर्शनोद्घाटनात् मोहमूर्छां प्राप्तः अर्जुनः ससंदेहः भवति देवकीनन्दनोऽयं मधुरः वा अन्यो वा कश्चित् इति। मधुरा चेयं संदेहावस्था। तां प्राप्तः अर्जुनः विगलिताहंमानः ईशप्रवृत्तिजिज्ञासां पुरस्करोति इत्यर्थः ॥ ७ ॥

ननु अर्जुनं अल्पज्ञं अल्पशक्तिकं भीषयन् स्वेन रूपेण भगवान् निर्घृणः इव भाति। अनुचितं चेदं भयभावनं कृपालोः दीननाथस्य तस्या एवं प्राप्ते रहस्यं विशदयन्नाह—

मोहभंगः निमित्तमात्रत्वस्य भानात् ॥ ८ ॥

सूत्रार्थः—मोहभंग = अज्ञानध्वंसः अत्र क्रियते भगवता सत्यं प्रतिपादयता कथं निमित्तमात्रत्वस्य = हेतुमात्रत्वस्य भानात् = ज्ञानात् इत्यर्थः।

भाष्यम्:—न खलु अर्जुनं भीषयन् भगवान् स्वीकारयति सत्यम्। सत्यं तु सदैव अभयप्रदम्। अपि तु असत्यचये मग्नं सत्यं यदा स्फुरति तदा सत्यस्फुरणेन अवपतत् असत्यं उच्चैःआक्रोशति। को हि सर्वनाशं कांक्षते। असत्यमपि स्वनाशभीतं क्रन्दनं कुरुते। न तेन सत्यस्य

क्रूरत्वम् अपि तु सदयत्वम् । अहमेव हन्ता भीष्मादीनां अहमेव कर्ता कारयिता च इत्यासीत् अर्जुनस्य मोहजनिता भ्रान्तिः । सर्वोऽपि लोकः निमित्तमात्रमेवास्ति भगवतः योजनायां इति यदा अर्जुनेन साक्षात् दृष्टं श्रुतं च तदा निरवलंबना तस्य भ्रान्तिः अधःपतन्ती भगवता पीडिता इव पूतना प्राणान् त्यजन्ती उच्चैः भयस्वरूपेणात्राक्रोशमाणा दृश्यते । अतः न भगवतः निर्घृणत्वं वा आततायित्वं वा अपि तु कृपालुत्वमेव सिद्ध्यति इति अर्थः । तथा च तस्य करुणार्द्रस्य वचनानि—

कालोऽस्मि लोकक्षयकृत् प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम्
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान्
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ इति ॥ ८ ॥

अर्जुनप्रार्थनया उपसंहरति भगवान् आत्मनः अलौकिकं विश्वरूपं भीमकान्तं प्रदर्शयति च स्वकं सौम्यं स्वरूपम् । प्रकृतिं च गच्छति पुनः अर्जुनः । अथ प्रदर्शितस्य विश्वरूपस्य दर्शनं कथं सर्वेषां न सुलभं इति दर्शयन् यदाह तदनुवदति ।—

## दौर्लभ्यं साधनाविरहात् ॥ ९ ॥

सूत्रार्थः—दौर्लभ्यं = विश्वरूपदर्शनस्य दुर्लभता अस्ति । कुतः ? साधनाविरहात् = साधनायाः अभावात् ।

भाष्यम्:—साधनानिर्भरं विश्वरूपदर्शनम् । समेषां साधना नास्ति । साधनसंपन्नस्य तु भवत्येव दर्शनम् । अतः साधनाविरहे दर्शनस्य दुर्लभत्वं विज्ञेयमित्यर्थः । तथा च भगवदुक्तिः—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप । इति ॥ ९ ॥

का तर्हि मोक्षदस्य अस्य विश्वरूपदर्शनस्य साधना ? आह—

साधनोल्लेखः तन्निर्भरत्वात् दर्शनस्य ॥ १० ॥

सूत्रार्थः—साधनोल्लेखः = साधनायाः भगवता उल्लेखः अन्तिमे श्लोके कृतः । कुतः ? तन्निर्भरत्वात् = तदवलंबनत्वात् दर्शनस्य = अवलोकनस्य इत्यर्थः ।

भगवता एव साधनायाः उल्लेखः कृतः । यो हि साधनसंपन्नः स एव भगवन्तं विश्वरूपेण विकचं दृष्टुं पारयति । तस्मात् साधनपरायणो भवेत् इत्यर्थः । तथा च तस्य श्लोकः—

मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ! । इति ॥ १० ॥

॥ इति विश्वरूपदर्शनयोगः ॥

## ॥ अथ भक्तियोगः ॥

ननु अष्टमाध्याये 'अव्यक्तोऽक्षर इत्युक्तः' इत्यादिना अव्यक्तस्य, एकादशाध्याये च "भक्त्या तु अनन्यया शक्यः," "मत्कर्मकृत् मत्परमः" इत्यादिना च विश्वरूपस्य व्यक्तस्य भक्तिं परमगतिसाधनत्वेन अवादीत् । तत्र संशयः । एकरूपो भवितुमर्हति ईश्वरः । रूपबाहुल्यं च ईश्वरबाहुल्यं आवहेत् । ईश्वरानेकत्वे च किंस्वरूपः असौ भजनीयः ? व्यक्तस्वरूपो वा अव्यक्तस्वरूपो वा ? कः द्वयोः वास्तविकः कः च कल्पनासूतः ? एवं प्राप्ते आह—

द्विविधं भगवद्रूपं व्यक्ताव्यक्तभेदात् श्रुतेः ॥ १ ॥

सूत्रार्थः—द्विविधं = द्विप्रकारं भगवद्रूपं = भगवतः रूपं ज्ञेयम् । कुतः व्यक्ताव्यक्तभेदात्=दृश्यादृश्यभेदात् च=तथा श्रुतेः=श्रुतिवाक्यात् इत्यर्थः।

भाष्यम्ः—द्विविधं तावत् भगवतः स्वरूपं वर्तते। व्यक्तं च विश्व रूपं सगुणं अव्यक्तं च विश्वपृष्ठभूतं निर्गुणम्। एकरूपो हि भगवान् आत्मनः ऐश्वर्ययोगेन अनन्तरूपो भवति इति च भूषणं न दूषणम्। निर्गुणोऽपि सः भवति सगुणः। ननु तर्कविरुद्धं उच्यते। भवतु नाम। किं तेन? तर्कविरुद्धं हि प्रतिपादयन् अनवधेयवचनो भवति। भवतु अन्यत्र। इह तु तर्कोऽपि अप्रतिष्ठितः एवास्ति। कुतः? उक्तं भगवता व्यासेन भागवते-सेयं भगवतो माया यन्नयेन विरुध्यते इति गृहाण। पण्डितानामपि विदिततत्वानां भ्राम्यति बुद्धिः भगवतः तस्य अनवगाह्य मायायोगावगाहने। नास्ति मानुषमतिनियम्यो भगवान्। अपि च मानुषी मतिरेव भगवन्नियम्या अस्ति। अतः अचिन्त्येन आत्मनः ऐश्वर्ययोगेन निर्गुणोऽपि निराकारोऽपि भगवान् भवति सगुणः साकारश्च। ननु बुद्धिकुण्ठनं न आदरणीयं। सत्यम् एवमेव बुद्धेः व्यभिचारोऽपि असह्यः। न खलु सर्वं तर्केणैव ज्ञेयं भवति। अस्ति कश्चित् अतिप्रश्नो नामापि। अनुभूतिरेव यत्र प्रमाणं तत्र तर्कस्य कुण्ठनं धर्म्यं भवति। तस्मात् स्वसंवेद्यं यत् स्यात् तद्विषयकस्तर्कः चेत् विहन्येत नासौ शोकविषयः। तस्मात् व्यक्ताव्यक्तभेदेन द्विविधं भगवत् स्वरूपं ज्ञेयम्। श्रुतिरपि अस्मिन्नर्थे सम्मता अस्ति। "द्वे वाव ब्रह्मणः रूपे मूर्तं च अमूर्तं च" इति च श्रुतिः॥ १॥

फलितं आह—

अतः उपासना अपि द्विविधा॥ २॥

सूत्रार्थः—अतः = यस्मात् द्विविधं भगवद्रूपं तस्मात् उपासना अपिः = भक्तिः भगवतः द्विविधा = द्विप्रकारा विज्ञेयाइत्यर्थः।

भाष्यम्ः—भगवतः स्वरूपद्वैविध्येन उपासनायाः अपि द्वैविध्यं ज्ञेयम्। व्यक्तोपासना विश्वरूपेश्वरभक्तिस्वरूपा प्रथमा। अव्यक्तोपासना च निर्गुणभक्तिस्वरूपा द्वितीया। तथा च भगवद् वचनं—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्॥
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः॥ इति॥ २॥

ननु द्वयोः का श्रेयसी ? आह—

तत्र दुष्करोत्तरा देहाध्याससत्वात् ॥ ३ ॥

सूत्रार्थः—तत्र = द्वयोः व्यक्ताव्यक्तयोः ईश्वररूपयोः भक्त्योः मध्ये दुष्करा = क्लेशमयी उत्तरा = अव्यक्तेश्वरभक्तिः। कुतः ? देहाध्याससत्वात् = देहात्मभावस्य विद्यमानत्वात् इत्यर्थः।

भाष्यम्ः—विश्वरूपस्य भगवतः उपासनायाः अव्यक्तेश्वरोपासना दुष्करा ज्ञेया। यतः देहात्मभाववतां दुःखं अव्यक्तस्य गतिर्भवति। जन्मनः प्रभृति आकारेषु निवसन् स्वयं आकारवान् मानवः भगवतः निराकारं रूपं चिन्तयितुं यावत् चित्रसत्वं साकारं दुःखेन प्रभवति। प्रबलो हि देहाध्यासः क्लिश्नाति चित्तं, निराकारस्य भगवतः धारणे। तथा च स्मृतिः अनुभवप्रमोदिता आकारवान् त्वं नियमादुपास्यः न वस्त्वनाकारमुपैति बुद्धिः इति। यस्य तु देहाध्यासः स्वप्नेऽपि न स्फुरति तस्यैव अव्यक्तधारणा सुकरा। इतरेषां तु दुष्करा। जगच्च अध्यासग्रस्तैरेव पूर्णम्। विरलतमो हि अध्यासरहितः। सर्वेषां अपि च अस्ति कृत्यं गदाभृता तस्मात् विश्वरूपस्य भगवतः भक्तिरेव सुकरा। सा च सर्वसाधारणेन कर्तव्या इति। तथा च साधारणजनवत्सलो भगवान्—

क्लेशोऽधिकरस्तेषामव्यक्तासक्तचेतसाम्
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ इति ॥ ३ ॥

यथा अव्यक्तस्य गतिः दुष्प्रापा न तथा व्यक्तस्य इति सहेतुकं आह—

न तु इतरा प्रत्यक्षत्वात् उद्धरणदीक्षितत्वाच्च भगवतः ॥ ४ ॥

सूत्रार्थः—तु = अपि इतरा = व्यक्तरूपस्य विश्वाकारस्य भगवतः भक्तिः न = दुष्करा न, अपि तु सुकरा। कथं ? प्रत्यक्षत्वात् = विश्वरूपस्य ईश्वरस्य समक्षत्वात् च = तथा उद्धरण० = मृत्युसंसारसागरात् भक्तं उद्धर्तुंशीलत्वात् भगवतः = परमात्मनः इत्यर्थः।

भाष्यम्—देहाध्याससत्वात् दुष्करा धारणा अव्यक्तस्य ईश्वरस्य। न तु एवं सुव्यक्तस्य विश्वरूपेण भगवतः परमेश्वरस्य धारणा दुष्करा। प्रत्यक्षे हि अभिरमते लोकः। प्रत्यक्षः विश्वरूपो भगवान्। अतः भगवतः स्थूले अक्षगोचरे रूपे मनसः प्रवेशः सुकरः। अतः उपासनाऽपि

तस्य अक्लिष्टा। किं च। ये च सर्वाणि कर्माणि भगवति संन्यस्य अनन्येनैव योगेन तं ध्यायन्तः सन्तः उपासते तेषां जन्ममृत्युरूपात् संसारसागरात् अनायासेन उद्धरणाय दीक्षितो वर्तते भगवान्। तस्मादपि हितावहा व्यक्तस्य ईश्वरस्य भक्तिः। तथा च भक्तवत्सलस्य भगवतः वचनं—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि नचिरात् पार्थ मय्यावेशितचेतसाम्। इति ॥ ४॥

फलत्यागस्य शान्तिप्रदत्वात् श्रेष्ठत्वं प्रदर्शयन् उपायान्तराणि अन्ततो गत्वा तत्रैव फलवन्ति इत्याह—

फलत्यागः उत्तमः विविधोपायानां तत्रैव पर्यवसितत्वात् ॥५॥

सूत्रार्थः—फलत्यागः = फलानां अननुसंधानं उत्तमः = श्रेष्ठं कुतः? विविधोपायानां = अनेकोपायानां तत्रैव = त्यागे एव पर्यवसितत्वात् = अवसन्नत्वात् इत्यर्थः।

भाष्यम्:—भगवति आत्मनः न्यासो हि तस्योपासना। स च अनेकैः उपायैः साध्यो भवति। ज्ञानात् वा अभ्यासात् वा ध्यानात् वा कर्मफलत्यागाद् वा चेतसः भगवति निवेशनं सुशक्यं। अभ्यासादयो उपायाः तावत् अन्ततो गत्वा फलत्यागे एव परिणताः भवन्ति। फलत्यागस्य एव शान्तिप्रदत्वात्। फलत्यागात् हि सरूपो भवति भगवतः अयं जीवः। त्यागमूर्तिः भगवान् संन्यस्तसमस्तात्मकर्मा हि उपास्यो भवति अक्षय्यशान्तिनिधानः पुरुषस्य। रागादिविक्षेपकारणनिवृत्तिः शान्तिः। सा च यावन्न फले विरक्तो जायते तावन्नैव प्रतिष्ठिता भवति। अतः अभ्यासादीन् कृत्वाऽपि अन्ते तु फलत्याग एव आयाति। अतः कुर्वन् सर्वाणि कर्माणि परमप्रेम्णा भगवदर्थं संन्यसेत् तेषां फलानि। अकामयमानो हि शांतिं लभते। तथा च भगवतः अकामहतस्य परमानन्दघनस्य वचनानि—

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥
श्रेयो हि ज्ञानमभ्यासाद् ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ इति ॥ ५ ॥

ननु आत्मज्ञानवतः निष्कामकर्मयोगिनः भक्तस्य लक्षणानि कथं भगवता कथितानि ? आह रहस्यं—

सिद्धभक्तलक्षणोपन्यासः साधकानां प्रेरकत्वात्
आदर्शवत् साधनाविकासपिशुनत्वाच्च ॥ ६ ॥

सूत्रार्थः—सिद्धभक्त० = निष्ठावतः भक्तस्य लक्षणानां कथनं साधकानां = असिद्धानां भाविनि च संसिद्धमानानां प्रेरकत्वात् = प्रेरणार्थत्वात् च = तथा आदर्शवत् = दर्पण इव साधनाविकासपिशुनत्वाच्च = साधनायाः विकासस्य प्रदर्शकत्वात् ज्ञेयः इत्यर्थः ।

भाष्यम्:—सिद्धानां भक्तानां यानि लक्षणानि तानि साधकानां प्रेरकानि भवन्ति । यथा च दर्पणः प्रतिबिंबभूतं आत्मानं स्पष्टं दर्शयति तथा आदर्शभूतानि भक्तस्य सिद्धस्य लक्षणानि साधकस्य विकाससूचकानि भवन्ति । कति सिद्धानि कति च अधुना साध्यानि, कियद्गतोऽहं कियान् वा अध्वा अद्यापि अवशिष्टः, किं कार्यं किं च अकार्यं इति सर्वमेतत् पिशुनयति भक्तस्य स्थितानि लक्षणानि । अत्र तु भगवता षट्त्रिंशल्लक्षणानि प्रोक्तानि । तेषां समेषां स्वात्मनि यदा सिद्धावस्थदर्शनं भवति तदा कृतकृत्यो भवति मानवः । तानि च इमानि सर्वाणि लक्षणानि स्थितप्रज्ञस्य पुरुषस्य व्यवहार-वर्तनोद्भूतानि ज्ञेयानि । व्यवहारे अवतीर्णं परमार्थभूतं ज्ञानं कथं वर्तते इति प्रदर्शनपरायणो हि समस्तलक्षणसंघः । तथा च भगवान् देवकीनन्दनः—

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च
निर्ममो निरहंकारः समदुःखसुखः क्षमी ।
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥
ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ इति ॥ ६ ॥

ननु ज्ञानमेव परमार्थविषयं अवतीर्णं सत् विविधप्रसंगेषु चेत् भक्तिः, आयातः अविशेषः भक्तिज्ञानयोः । समाधानं आह—

**भक्तिज्ञानयोः अभेदः परिभाषाभेदमात्रभिन्नत्वात् सत्वस्य च एकरूपत्वात् ॥ ७ ॥**

सूत्रार्थः—भक्तिज्ञानयोः = परानुरागपरमवेदनयोः अभेदः = अविशेषः । कुतः परिभाषाया० = परिभाषायाः यो भेदः तन्मात्रेणैव भिन्नत्वात् च=तथा सत्वस्य = मर्मणः एकरूपत्वात् = अद्वितीयरूपत्वात् इत्यर्थः।

भाष्यम्—सत्यं । नास्ति भेदः भक्तिज्ञानयोः । केवलं परिभाषायाः भेदो भवति । न च तन्मात्रेण सत्वभेदः उचितः । ज्ञानमेव प्रसादभूमिं गतं सत् भक्तिरूपेण प्रवहति । भक्तिश्च ज्ञानस्यैव प्रवाहिनी अवस्था ज्ञेया । घनीभूतं जलं हिमरूपेण दृश्यते तदेव च द्रवीभूतं सत् प्रवाहरूपेण आलोक्यते । न च तन्मात्रेण सलिलस्य सत्वं भिद्यते । ज्ञानप्रसादो महिमपूर्णवर्तने यदा अवतरति तदा भक्तिनाम्ना व्यवह्रियते । अतः नास्ति मनाग् अपि भेदः भक्तिज्ञानयोः । यो हि भक्तः सः ज्ञानी भवत्येव । यश्च ज्ञानी स भक्तोऽपि भवत्येव । उभौ च निष्कामकर्मयोगे अवश्यं-स्थितिमन्तौ च । अत्रार्थे स्वानुभवः एव प्रमाणं भवति इत्यलं विस्तरेण इत्यर्थः ॥ ७ ॥

॥ इति भक्तियोगः ॥

## ॥ अथ क्षेत्रक्षेत्रज्ञविभागयोगः ॥

कर्मयोगांगभूता विश्वरूपेश्वरस्य भक्तिः विवेकसापेक्षा वर्तते। यस्य हि विवेकज्ञानं नास्ति निर्मलं नासौ यथार्थतया सेवितुं शक्नोति परमात्मनं विश्वरूपम्। विवेकस्रोतो हि स्वच्छं उद्घाटयति प्रवाहयति च भक्तिम्। अतः प्राप्तव्यं भक्तिमिच्छता पुरुषेण अविप्लवं विवेकज्ञानम्। तदिदं विवेकज्ञानं संशयविपर्यासशून्यं प्रस्तूयते त्रयोदशाध्याये भगवता विवेकमूर्तिना। तस्येदं आदिमं सूत्रम्—

रूपकन्यासः विवेकमूलत्वात् भक्तेः ॥ १ ॥

सूत्रार्थः—रूपकन्यासः = क्षेत्रक्षेत्रज्ञलक्षणेन प्रकृतिपुरुषयोः उपन्यासः भगवता कृतः। कुतः? विवेकमूलत्वात् = विविक्तज्ञानमूलत्वात् भक्तेः = परमप्रेमरूपायाः भक्तेः इत्यर्थः ॥

भाष्यम्ः—प्रारंभ एव भगवता रूपकेण प्रकृतिपुरुषयोः उपन्यासः क्रियते। रूपकन्यासेन च भगवान् विवेकमूलाभक्तिः इति सूचयति। अपि च भवति रूपकप्रियो लोकः। न केवलं देवाः, प्राकृताः अपि रूपके स्निह्यन्तः परोक्षप्रियाः भवन्ति। अतः भक्तेः विवेकमूलत्वं साधयितुं रूपकस्य विन्यासः ज्ञेयः इत्यर्थः। तथा च भगवान् वासुदेवः—

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।<br>एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः। इति ॥ १ ॥

ननु शरीरक्षेत्रयोः किं साम्यं? साम्ये सति हि रूपकं सुश्लिष्टं भवति। साम्यं प्रदर्शनम् आह—

शरीरं क्षेत्रं क्लेशकर्मबीजप्ररोहभूमित्वात् ॥ २ ॥

सूत्रार्थ :—शरीरं = प्रतिक्षणं शीर्यमाणं इदं शरीरं प्रत्यक्षं पिण्डब्रह्माण्डात्मकं क्षेत्रं = भूखण्डः ज्ञेयम् कुतः? क्लेशकर्मबीजप्ररोहभूमित्वात् = अविद्यादिक्लेशमूलकशुक्लादिकर्मबीजानां फलान्तांकुरजनकत्वात् इत्यर्थः।

भाष्यम्—शरीरं इदं दृश्यमानं क्षेत्रमिति अभिधीयते। शरीरे च क्षेत्रे च अस्ति धर्मसाम्यम्। उप्तं बीजं क्षेत्रे अंकुरितं पल्लवितं पुष्पितं

फलितं च भवति। शरीरक्षेत्रे च उप्तं अविद्यादिक्लेशमूलं शुक्लाशुक्लकर्मबीजं जात्यायुर्भोगपर्यन्तं फलं जनयति। क्लेशादीनां प्ररोहभूमित्वात् शरीरस्य क्षेत्रत्वम्। यथा च क्षेत्रं क्षेत्रस्वामिनः भिन्नं तदर्थं चास्ति एवमेव इदं शरीरक्षेत्रं तस्य स्वामिनः बीजकर्षकात् क्षेत्रज्ञात् भिन्नं तदर्थं च। अहंममत्वद्वारेणैव यथा क्षेत्रतत्पत्युः संबंधः न कोऽपि वास्तवः तथैव अहंममत्वद्वारेणैव शरीरस्य च तत्स्वामिनः च अन्योन्यः संबंधः न कोऽपि वस्तुमूलः। आविद्यकेन च अवस्तुभूतेन संबंधेन न संबंधवान् भवति कश्चन इत्यर्थः। न खलु वंध्यापुत्रेण संवाह्या वधूः वरवती भवति इत्यर्थः॥ २॥

क्षेत्रज्ञं परिचाययति—

## शरीरी क्षेत्रज्ञः तत्स्वामित्वात्॥ ३॥

सूत्रार्थः—शरीरी = शरीराभिमानी आत्मा क्षेत्रज्ञः = क्षेत्रं स्वत्वेन जानाति इति क्षेत्रज्ञः ज्ञेयः कुतः? तत्स्वामित्वात् = तस्य स्वस्य शरीरस्य स्वामित्वात् इत्यर्थः।

भाष्यम्—इदं पिण्डब्रह्माण्डात्मना प्रसृतं शरीरक्षेत्रं यो ममत्वेन जानाति सः तत्स्वामी क्षेत्रज्ञः इति तद्विदाम् निर्णयः। शरीरे आत्मनः स्वामित्वं ममत्वेन प्रतिक्षणं प्रस्थापयन् दृश्यते अयं प्रत्यगात्मा। ममता च अहंकारस्य दुहिता। अहंकारश्च अविद्यायाः प्रसूतिः। ज्ञानस्वरूपश्च आत्मा। ज्ञानस्वरूपे आत्मनि च अविद्याविलासः अनिर्वचनीयोऽपि भवति संसारदशायां। न भवितुं अर्हति। भवति च। अतः स्थितस्य गतिश्चिन्तनीया इति न्यायेन अभ्युपेयः अविद्याविलासो मतिमता। कुतः आयाति तमः आच्छादकं इति तु अन्विष्यन् अपि मार्गितुं नैव शक्यम्। भवति तमसः अपीतिः तेजसा इति तु प्रसिद्धम्। अतः आविद्यकं क्षेत्रज्ञत्वं ममतानिबन्धनं अभ्युपेयं भवति। अभ्युपेत्य च निरसनीयं तत् विद्यया स्वरूपनिष्ठया इति। अतः क्षेत्रज्ञत्वमपि स्वात्मनि अध्यस्तरूपमेव। विवेकश्च अध्यासस्य प्रहाणिकरः। अतः विवेचनीयं क्षेत्रक्षेत्रज्ञस्वरूपं विविच्य च स्वरूपं तन्निष्ठो भवेत् इति अर्थ॥ ३॥

क्षेत्रज्ञस्य वास्तवं स्वरूपं निरूपयन् आह—

## स च ब्रह्माभिन्नः शास्त्रान्वयात् उपपत्तेः अनुभूतेश्च ॥ ४ ॥

सूत्रार्थः—च = तथा सः = असौ क्षेत्रज्ञः स्वरूपेण ब्रह्माभिन्नः = परमात्मना अविशिष्टः । कुतः ? शास्त्रान्वयात् = शास्त्रवाक्यानां औपनिषदानां तत्रैवार्थसंबंधात् अनुगमात् = उपपत्तेः = तर्कसंमतत्वात् अनुभूतेः = अनुभवात् इत्यर्थः ॥

भाष्यम् :—वास्तविकतया ब्रह्मणि आत्मनि च न कोऽपि भेदः । ब्रह्मैव समेषां आत्मा । आत्मा च स्वरूपम् । ब्रह्मैव समेषां अन्तिमं स्वरूपम् । उपाधिपरिवृतोऽपि आत्मा ब्रह्मणा न भिन्नो भवितुमर्हति । समस्तानि आप्तादीनि प्रमाणानि इममेवार्थं द्योतयन्ति । "तत्त्वमसि" "अयमात्मा ब्रह्म" "प्रज्ञानं ब्रह्म" "सर्वं खलु इदं ब्रह्म" इत्यादिनि असंख्यतानि उपनिषद्वचनानि तावत् जीवब्रह्मणोः स्वरूपैकत्वसमर्थकानि विद्यन्ते । तर्कोऽपि अस्मिन्नेवार्थे कृतार्थो भवति । कथं अब्रह्मस्वरूपः आत्मा परिमुच्येत ? ब्रह्म हि नित्यशुद्धबुद्धमुक्तस्वरूपं अस्ति । योगाप्तनेत्रेण दृष्टः प्रत्यगात्माऽपि स्वरूपेण नित्यशुद्धबुद्धमुक्तस्वरूपः दृश्यते । तदा च सच्चिदात्मकः आत्मा स्वरूपभूतं परमानन्दं व्युत्थाने तिरोभूतं संत् समाधौ आविर्भूतं साक्षात् अनुभवति । सच्चिदात्मकं च ब्रह्म । न च द्वे समलक्षणे समसत्ताके तत्त्वे अन्योन्यतः भिन्ने भवितुमर्हतः । अतः स्वरूपसाम्यात् लक्षणसाम्याच्च ब्रह्मैव आत्मा । अनुभूतिः तु आत्मनः ब्रह्मस्वरूपेण समाधि-सुषुप्ति मोक्षेषु भवति । अतः आत्मा समेषां ब्रह्मणा अभिन्नः।संसारदशायां दृष्टस्यानुभवस्य समाधिदशायां व्याघातात् नासौ प्रामाणिको भवितुमर्हति। अतः भिन्नौ भासमानौ अपि व्युत्थाने ब्रह्मात्मानौ नैव भिन्ने स्तः । न खलु स्वप्ने दृष्टं प्रतिबोधे तदवस्थं भवति । न वा संसारानुभवनियम्यो हि समाध्यनुभवः अपि तु समाधि-अनुभवनियम्यो हि संसारानुभवो भवितुमर्हति । तस्मात् ब्रह्मैव आत्मा क्षेत्रज्ञः इति । तथा च समेषां आत्मभूतस्य भगवतः निःसंशयं वचः—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ! इति ॥ ४ ॥

ननु क्षेत्रक्षेत्रज्ञयोः क्षेत्रज्ञस्य ज्ञानं मुख्यत्वात् मोक्षफलत्वात् च प्रतिपाद्यं भवेत्, न क्षेत्रज्ञानं गौणं निरर्थं च । समादधन् आह—

## क्षेत्रविवरणं विवेकोपकारावहत्वात् ॥ ५ ॥

सूत्रार्थः—क्षेत्रविवरणम् = क्षेत्रस्य शरीरसंज्ञस्य पिण्डब्रह्माण्डा-

त्मकस्य विशदनं भगवता कृतं । कुतः ? विवेको० = तस्य विवरणस्य विवेकज्ञानोपकारकत्वात् इत्यर्थः ।

भाष्यम्—सत्यम् । मुख्यतया तु आत्मनः ज्ञानं एव प्रस्तुतं तथापि क्षेत्रज्ञानं न गौणं न वा अपार्थम् । क्षेत्रविवरणं हि विवेकस्य बहूपकरोति । सर्वाणि हि शरीराणि पंचभूतात्मकान्येव सन्ति । एकादशसंख्या-पर्यन्तेन्द्रियाणि एव विद्यन्ते, पञ्चमहाभूतमये गोचरे एव चरन्ति, इच्छादिधृत्यन्तविकारैः एव पूर्णानि भवन्ति, गुणभावान्न व्यतिरिच्यन्ते । अतः वरणीयं नास्ति किमपि प्रकृतिक्षेत्रे विवेकिनः । सर्वस्य प्रकृत्या-त्मकस्य दुःखमयत्वादित्यर्थः । शरीरस्य च क्षेत्रस्वरूपस्य सम्यक् दर्शनात् अमानित्वादीनि ज्ञानसाधनानि स्वाभाविकानि एव भवन्ति । एवं क्षेत्रस्वरूपविचारणा विवेके उपकारवहा । तथा च विवेकपक्ष-पातिनः विचक्षणस्य वचांसि—

तत्क्षेत्रं यच्च यादृक् च यद्विकारी यतश्चयत् ।
स च यो यद् प्रभावश्च तत् समासेन मे श्रुणु ॥
ऋषिभिर्बहुधा गीतं छन्दोभिःविविधै पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिः विनिश्चितैः ॥
महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पंच चेन्द्रियगोचराः ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ इति ॥ ५ ॥

ननु ज्ञेयस्य आत्मनः क्षेत्रज्ञस्य ज्ञानविवरणमेव उचितं न साध-नानां निरूपणम् । समादधन् आह—

ज्ञानसाधननिरूपणं तदधीनत्वात् ज्ञेयज्ञानसिद्धेः ॥ ६ ॥

सूत्रार्थः—ज्ञानसाधननिरूपणं = अमानित्वादिज्ञानसाधनानां निरूपणम् न्याय्यं । कुतः ? तदधीनत्वात् = तदायत्तत्वात् ज्ञेयज्ञान-सिद्धेः = ज्ञातुं योग्यस्य पदार्थस्य आत्मनः ज्ञप्तेः इत्यर्थः ।

भाष्यम्ः— न ज्ञेयज्ञानं साधनविरहे भवति । ज्ञेयज्ञानस्य साधनायत्तत्वात् । स्थूलानामपि शब्दादिपदार्थानां ज्ञेयभूतानां ज्ञानं विना इन्द्रियादिसाधनेन न भवति किमु वक्तव्यं सूक्ष्मतमस्य आत्मनः

विना साधनसामग्रीं भवति इति ? अतः अमानित्वादितत्त्वज्ञानार्थदर्श- –नमित्यन्तानां ज्ञानसाधनानां उक्तिः अतीव उचिता, न तन्मात्रम्– अनिवार्या ज्ञेया । यस्य हि अमानित्वादिका–ज्ञानसाधनसंपत्तिः नास्ति न कदापि तस्य आत्मनः वास्तविकं ज्ञानं भवति । यस्य तु अस्ति तस्य विना इच्छयाऽपि तद् भवति । तस्मात् विचक्षणो साधनपरायणो भवे- दित्यर्थः । तथा च विचक्षणशिरोमणिर्भगवान् आह—

अमानित्वमदंभित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥
इन्द्रियार्थेषु वैराग्यमनहंकार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥
असक्तिरनभिष्वंगः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वं इष्टानिष्टोपपत्तिषु ।
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥
विविक्तदेशसेवित्वं अरतिः जनसंसदि ।
अध्यात्मज्ञाननित्यत्वं तत्वज्ञानार्थदर्शनम् ॥ इति ॥ ६ ॥

ज्ञानसाधनेन यत् ज्ञेयम् क्षेत्रज्ञस्वरूपं तत् दर्शयन् आह—

## क्षेत्रज्ञस्वरूपविवरणं अनुभूतेः संवादार्थम् ॥ ७ ॥

सूत्रार्थ :—क्षेत्रज्ञ० = क्षेत्रज्ञस्य आत्मनः निजरूपनिरूपणं यत् भगवता कृतं तत् अनुभूतेः = स्वानुभवस्य साधकस्य संवादार्थम् = संवादितार्थम् ज्ञेयम् ।

भाष्यम्—साधनानां निरूपणानन्तरं भगवता क्षेत्रज्ञस्य यथाप्रति- ज्ञातं विवरणं क्रियते । तत् विवरणस्य इदं तावत् रहस्यम् । अदृष्टं हि आत्मनः तत्वं साधनसंचयवतः यदा दृष्टं भवति तदा तस्य साधकस्य स्वानुभवो यथार्थो न वेति परीक्षितव्यः । सेयं परीक्षा न शक्या यावत् स्वानुभवः भगवतः कथनेन संवादी न स्यात् । संवादश्च अनिवार्यः । अतः यस्य आत्मनः स्वरूपस्य दर्शनं भविष्यति तस्य सर्वस्य दर्शनं एकरूपमेव भविष्यति । वस्तुतन्त्रत्वात् अनुभवस्य नात्र कल्पनायाः स्वकपोलोद्भूतायाः निरंकुशायाः अवकाशोऽस्ति । "अनादिमत् परं ब्रह्म" इत्यारभ्य "तमसः परमुच्यते" इत्यन्तं भगवता यथार्थं समग्रासु

गीतासु कुत्रापि ईदृग्स्पष्टं अदृष्टचरं आत्मनः स्वरूपं प्रदर्शितमस्ति। अनेन वर्णनेन अस्माकं आत्मानुभवः संवदति न वा, इति साधकेन दृष्टव्यम्। चेत् संवदति यथार्थं वस्तुदर्शनं इति ज्ञेयम्। न चेत् संवदति अपि विसंवदति तर्हि अयथार्थं दर्शनम् इति निश्चेयम्। यावत् संवादं प्रयत्नपरेण भवितव्यम् इत्यर्थः। तथा च भगवतः यथार्थदर्शिनः शंसिनश्च वचनामृतानि—

ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च॥
बहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम्।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च।
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते॥ इति॥ ७॥

ईदृशस्यात्मनः वेदने फलमाह—

ज्ञानगम्यं हि अमृतत्वम्॥ ८॥

सूत्रार्थः—ज्ञानगम्यं = ज्ञानेन साधनेन लभ्यं हि = अमृतत्वम् = ब्रह्मस्वरूपं जन्ममरणविच्छित्तिकरम् इत्यर्थः॥

भाष्यम्:—अमानित्वमित्यारभ्य अर्थदर्शनपर्यन्तैः ज्ञानसाधनैः विंशतिसंख्याकैः ज्ञातस्य ज्ञेयस्य फलं तावत् अमृतत्वम्। नेदं अमृतत्वं स्वर्गीयं अपि तु स्वरूपभूतम्। अमृतत्वं हि मरणमारकं। मरणं च जन्मना आक्षिप्तम्। अतः ज्ञानलभ्यं अमृतत्वं स्वात्मन्यध्यस्तजननमरणादि समस्तोपद्रवविच्छित्तिकरं ज्ञेयम्। "यत् ज्ञात्वा अमृतं अश्नुते" इति भगवद् वचनात् इत्यर्थः॥ ८॥

ननु तदिदं ज्ञानादि त्रितयं कुत्र वर्तते? आह—

## ज्ञानादित्रितयं न बहिः मृग्यं जरठावत् अन्तःसत्वात् ॥ ९ ॥

सूत्रार्थः—ज्ञानादि०= ज्ञानज्ञेयज्ञानगम्याख्यं त्रयं न = नैव बहिः = शरीराद् बहिः मृग्यं = अन्वेष्टव्यम् जरठावत् = वृद्धावत् । कुतः ? अन्तः सत्वात् = शरीराभ्यन्तरे एव विद्यमानत्वात् इत्यर्थः ।

भाष्यम्— ज्ञानस्य ज्ञेयस्य ज्ञानगम्यस्य च अन्वेषणार्थं बहवो भ्रमन्तः दृश्यन्ते अस्मिन् संसारे । हिमालयसेवनात्, संन्यासाश्रमे निवासात् वा इतरतीर्थस्थाननिषेवणात् वा यात्रायाः वा इतरेण कर्मणा वा एतत् त्रितयं लक्ष्यं इति मन्यमानाः अनेके जीवाः परिव्राजक व्रतं धारयन्तः अवलोक्यन्ते । येन वस्तु ज्ञायते तद् ज्ञानं, ज्ञानेन ज्ञातुं योग्यं ज्ञेयं ज्ञानेन गम्यं च तद् विष्णोः परमं पदं—सर्वमेतत् सर्वस्य हृदि एव विष्ठितं अस्ति । अतः वृद्धावत् न बहिः तत् मृग्यम् । तमोग्रस्ते कुटिरे नष्टसूचिः काचिद् वृद्धा कुटिराद् बहिः तां आन्विष्यमाणा नैवालभत । एवमेव स्वान्तस्तिमिरान्तः नष्टं ज्ञानं ज्ञेयं ज्ञानगम्यं नैव बहिः लभ्येत । तस्मात् अन्तःसत्वं तत् त्रितयं अन्तः एव अन्वेष्टव्यम् । तथा च भगवतः उक्तिः—

ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् इति ॥ ९ ॥

ननु भगवता किमर्थं कथितस्य अर्थस्य पौनःपुन्येन कथनं क्रियते ? आह—

## क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषरूपेण पुनरालोचनं अर्थस्य सूक्ष्मत्वात् परिभाषासामंजस्यविधायकत्वात् च ॥ १० ॥

सूत्रार्थ :—क्षेत्रक्षेत्रज्ञयोः = शरीरशारीरकयोः प्रकृतिपुरुषरूपेण = प्रकृतेः पुरुषस्य च रूपेण पुनरालोचनं = पुनरावर्तनं अर्थस्य वस्तु तत्त्वस्य सूक्ष्मत्वात् = निरतिशयसूक्ष्मत्वात् च = तथा परिभाषा = परिभाषायाः शास्त्रस्वीकृतायाः संवादकरणार्थत्वात् ज्ञेयम् इत्यर्थः ।

भाष्यम् :—सत्यं । भगवता कथितस्य एव वारंवारं पुनरावर्तनं क्रियते । नासौ अपराधः । यतः हितैषिणां ज्ञानवृद्धाणां मन्त्राणां च जासिता नास्ति । ते हि ज्ञानावृद्धाः अर्थस्य सूक्ष्मत्वं जानन्ति अधिकारिषु च उत्तममध्यमकनिष्ठानां भेदं विदन्ति । सर्वेषां च सुखाभिलाषः एकरूपः इति अवगच्छन्ति । सुखप्राप्तिश्च तत्वसाक्षात्कारादेव

भवति इति अवयन्ति तस्मात् न तेषां कथितस्य पुनः कथने श्रमः भवति। अपि शास्त्रदृष्टानां आपाततो भिन्नानां परिभाषाणां भेदेऽपि अभेदत्वमस्ति आर्थम् इति च साधनीयं। अतः भगवता कथितं अपि क्षेत्रक्षेत्रज्ञज्ञानं पुनः प्रकृतिपुरुषज्ञानरूपेण पुनः उच्यते। प्रकृतिरेव क्षेत्रम्, पुरुष एव क्षेत्रज्ञ, इति च परिभाषासामंजस्यं विदधाति। तथा च हितैषिणः भगवतः श्लोकाः—

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते॥
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्।
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु॥
उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः॥
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते॥ इति॥ १०॥

ननु न केवलं परिभाषायाः एव भेदः दृष्टः। परिभाषादृष्टपदार्थानां प्राप्तौ उपायान्तराणां अपि पूर्वेभ्यः भिन्नानां प्रतिपादनं अत्र निभाल्यते। ध्यानयोगः वा सांख्ययोगो वा कर्मयोगो वा श्रवणं वा इतरेभ्यः प्राप्ततत्त्वेभ्यः प्रकृतिपुरुषयोः भेदज्ञाने उपायत्वेन कथयति भगवान्। समादधाति—

**तत्प्राप्त्युपायान्तरनिर्देशेऽपि न उपायानां मिथः तात्त्विकभेदः भूमिकाभेदेनैव भिन्नत्वाभासात् रुचिसंस्कारवैचित्र्याच्च॥ ११॥**

सूत्रार्थः—तत्प्राप्ति० = तयोः प्रकृतिपुरुषयोः परिभाषामात्रभिन्नयोः क्षेत्रक्षेत्रज्ञयोः लाभस्य साधनान्तरव्यपदेशेऽपि उपायानां = साधनानां मिथः = अन्योन्यं न तात्त्विकभेदः = वास्तविको विशेषो भवति। कुतः? भूमिकाभेदेनैव = भूमिकायाः अवस्थायाः भेदेनैव भिन्नत्वाभासात् = भिन्नत्वाभासात् = भिन्नत्वस्य अवभासात् च = तथा च रुचि० = रुचेः संस्काराणां च प्रतिपुरुषभिन्नत्वात् अपि इत्यर्थः।

भाष्यम्-यद्यपि ध्यानयोगादिसाधनान्तराणि भगवता उपदिष्टानि दृश्यन्ते प्रकृतिपुरुषयोः ज्ञप्त्यर्थानि तथापि न तन्मात्रेण साधनानां भिन्नत्वं भवितुमर्हति । अमानित्वादीनि साधनानि न योगादिभ्यः साधनेभ्यः भिद्यन्ते वस्तुतः। भूमिकाभेदेन परस्परसमावेशसंभवात् । ध्याने, योगे, कर्मयोगे, श्रवणे वा तेषां अमानित्वादीनां यथायथं समावेशो भवत्येव । अतः न साधनभेदः ज्ञेयः । अपि च अस्ति रुचिवैचित्र्यं संस्कारवैचित्र्यं च लोकस्य । ते च आदर्तव्ये भवतः । अतोऽपि साधनान्तराणां नाममात्रभिन्नानां उल्लेखो न अनुचितो न वा तत्त्वान्तरसाधको वा इत्यर्थः । तथा च लोकतत्त्वज्ञस्य भगवतः श्लोकाः—

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येऽभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ इति ॥ ११ ॥

ननु एवं बहुकष्टेन लब्धस्य तत्त्वज्ञानस्य को लाभः ? आह—

तत्त्वज्ञानात् मुक्तिः साधकतमत्वात् ॥ १२ ॥

सूत्रार्थः-तत्त्वज्ञानात् = तत्त्वयोः प्रकृतिपुरुषयोः सम्यक् दर्शनात् मुक्तिः = मोक्षः । कुतः ? साधकतमत्वात् = श्रेष्ठसाधनत्वात् इत्यर्थः ।

भाष्यम्— तत्त्वज्ञानात् मोक्षः इति हि सर्वतंत्रसिद्धान्तः । तत्त्वज्ञानं च मुक्तेः अभ्यर्हिततमं साधनम् । असकृच्चेदं व्यपदिष्टं अतिरो-हितं सुज्ञानां । क्षेत्रक्षेत्रज्ञसंयोगात् स्थावरजंगमानां जन्म । सर्वभूतेषु एकरसः अविनाशी च परमपुरुषस्वरूपः आत्मा, स च सर्वाभिः क्रियाभिः तत्फलैश्च कालत्रयेऽपि अस्पृष्टः अकर्ता अभोक्ता ब्रह्मस्वरूपः अनादिः अव्ययः निर्गुणः असंगः सर्वक्षेत्रचेतयिता च इति साक्षात् जानन् मुच्यते इति च सर्वतन्त्रसिद्धान्तः । तस्मात् तत्त्वज्ञानात् मुक्तिः इति सर्वं चतुरस्रम् ॥ १२ ॥

ननु तत्त्वज्ञानात् चेत् मुक्तिः हन्त आयातं तस्याः नश्वरत्वम् । यज्जन्यते तत् नश्यति इति न्यायात् । न इत्याह—

सत्याः एव आविर्भावात् न मुक्तेः क्रियासाध्यत्वं स्वरूपावस्थितेः एव तत्त्वाच्च ॥ १३ ॥

सूत्रार्थः—सत्याः = विद्यमानायाः एव आविर्भावात् = प्राकट्यात् मुक्तेः = मोक्षस्य न क्रियासाध्यत्वं = न कयापि क्रियया उत्पाद्यत्वं च = तथा स्वरूपावस्थितेः = आत्मनः आत्मनि प्रतिष्ठायाः एव तत्त्वात् = मुक्तित्वाद् बोध्यम् इत्यर्थः ।

न खलु मुक्तिः जायते येन नश्येत । सा तु अस्ति एव । विद्यमानायाः अपि तिरोभूतायाः तस्याः मुक्त्यवस्थायां आविर्भावो भवति । न च आविर्भावो जन्म । सतः आविर्भावः ज्ञेयः । अपि च केयं मुक्तिः नाम । मुक्तिः तु आत्मनः स्वरूपे स्वरूपावस्थितिरेव । न चासौ केनापि जन्यते । क्रियास्पृश्यत्वात् स्वरूपस्य । तस्मात् स्वरूपावस्थितिरूपा मुक्तिः समेषां अस्ति एव । यत्तु तत्त्वज्ञानेन क्रियते तच्च मुक्तिप्रतिबन्धकस्य नाशः एव, न स्वरूपस्य उदयः । तस्मात् सिद्धस्वरूपा मुक्तिः न साध्यस्वरूपा इत्यलं विस्तरेण । तथा च भगवतः निर्णयः—

" क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् " ॥ १३ ॥

॥ इति क्षेत्रक्षेत्रज्ञयोगः ॥

## ॥ अथ गुणत्रयविभागयोगः ॥

विवेकख्यातिनिर्भरा मुक्तिः इति त्रयोदशाध्याये भगवान् रहस्यतमं अवादीत् । के ते प्रकृतेः गुणाः ? कथं च ते बध्नन्ति पुरुषं । किं च बद्धमुक्तस्य लक्षणं इत्येतत् सर्वं अज्ञात्वा नैव विवेकः उदेति विमलः । विस्तरेण विवेकप्रकरणं व्याख्यातुकामः भगवान् तदर्थं संप्रतिजानीते । तं च अनुध्यायन्नारभते चतुर्दशं वक्ष्यमाणेन सूत्रकारः सूत्रेण—

भूयोऽपि प्रवचनप्रतिज्ञा अर्थस्य सौक्ष्म्यात् ज्ञानदार्ढ्यस्य च अपेक्षितत्वात् ॥ १ ॥

सूत्रार्थ :—भूयोऽपि = पुनरपि अध्यायारंभे भगवतः प्रवचनप्रतिज्ञा = विशदरूपेण कथनस्य प्रतिज्ञा । कुतः ? अर्थस्य सौक्ष्म्यात् = सूक्ष्मतमत्वात् च = तथा ज्ञानदार्ढ्यस्य = ज्ञानस्य द्रढिम्नः अपेक्षितत्वात् = इष्टत्वात् इत्यर्थः ।

भाष्यम् :—अध्यायस्य प्रस्तावे एव भगवता सिद्धिदस्य उत्तम-ज्ञानस्य प्रवचनाय प्रतिज्ञा कृता। सा च प्रकृतपदार्थस्य विवेकरूपस्य सूक्ष्मतमत्वात् ज्ञेया। सूक्ष्मो हि अर्थः न सहसा बुद्धिं आरोहति। अनारूढश्च नेष्टं फलं प्रसूते। इष्टफलं च अनर्थस्य प्रहाणिः। अतः पौनःपुन्येन कथनं संगच्छते। किं च। कोमलं ज्ञानं अदृढं भवति। दृढिमा च ज्ञानस्य अज्ञानविध्वंसकस्य अपेक्ष्यते। न खलु शिरीषकुसुम-प्रान्तेन वज्रो भिद्यते। वज्रादपि कठोरं अज्ञानं कठोरतरेण ज्ञानेनैव छिद्यते। अतः अदृढं ज्ञानं न हितावहम्। तस्मात् भगवतः पुनः प्रवचन-प्रतिज्ञा। तथा च तस्य वचांसि—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम्।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति ते॥ इति॥ १॥

ननु किं स्वरूपं तज्ज्ञानं परसिद्धिप्रदं? आह सहेतुकम्—

पुम्प्रकृत्योः अविप्लवविवेकात् सिद्धिः॥ २॥

सूत्रार्थः—पुम्प्रकृत्योः = पुरुषप्रधानयोः अविप्लवविवेकात् = संशय-विपर्यासरहितात् भेदात् सिद्धिः = ज्ञानं मुक्तिरूपम् भवति इत्यर्थः।

भाष्यम्—विवेको हि सिद्धिप्रदः। विवेकश्च अन्यताख्यातिः। अन्यः पुरुषः अन्या च प्रकृतिः। न तयोः स्वरूपेण गुणेन वा धर्मेण वा मनागपि संबंधः। अतः जडायाः प्रकृतेः परत्वेन आत्मानं ज्ञात्वा त्यक्त्वा च पररूपां भुक्तभोगां प्रकृतिं स्वरूपेण अवस्थानं हि विविक्तं ज्ञानम्। तदेतत् ज्ञानं संशयशून्यं विपर्ययास्पृष्टं भवितुमर्हति। ताभ्यां संपृक्तं च न अविप्लवं। अतः संशयविपर्यासगंधेन अपि विरहितं विमलं ऋतंभरं ज्ञानमेव सिद्धिसाधकं ज्ञेयम्॥ २॥

ज्ञानात् मुक्तिःअज्ञानाच्च बन्धः इति सूचयन् संसारस्वरूपं निश्चिनोति-

संसारस्य अनादित्वात् अकृतार्थजीवजातादृष्टापेक्षेश्वरेक्षणवशात् त्रिगुणविषमावस्थितिः संसारः॥ ३॥

सूत्रार्थः—संसारस्य=संसरणस्य जननमृतिरूपस्य अनादित्वात्=प्राथम्याभावात् अकृतार्थ०=अचरितार्थस्य जीवात्मसमुदायस्य पापपुण्य

धर्माधर्मस्वरूप अदृष्टापेक्षस्य ईश्वरस्य ईक्षणयोगात् त्रिगुण०=त्रयाणां सत्वादिगुणानां असमा दशा संसारः=संसरणमिति ज्ञेयम् इत्यर्थः ।

भाष्यम्—अनादिः अयं संसारः बीजांकुरवत् शरीरकर्मणोः प्रवाहरूपेण वर्तमानत्वात् । अनादिः अपि अयं संसारः न अनन्तः ज्ञानदाह्यत्वात् कर्मबीजस्य । अतः कृतार्थं प्रति नष्टोऽपि भवति अकृतार्थानां कृते अनष्ट. । सर्वजीवसाधारणत्वात् प्रकृतेः । पुरुषस्य भोगापवर्गप्रदा च प्रकृतिः । ख्यातिपर्यवसानं च तस्याः चेष्टितम् । अतः यावन् न परिसमाप्यते समेषां जीवानां पुरुषार्थः तावत् तस्याः परिणतिः विषयरूपेण ध्रुवा एव । या इयं प्रकृतेः पुरुषार्थप्रेरिता प्रवृत्तिः शरीरेन्द्रियविषयरूपेण परिणता विषयरूपा सा एव संसारः इति उच्यते । न च जडायाः तस्याः इयं प्रवृत्तिः उपपद्यते । तस्मात् अकृतार्थजीवजातस्य अदृष्टापेक्षेण ईश्वरेण स्वेक्षणवशात् सा क्षोभ्यते । क्षोभ्यमाणा च सा महदादिक्रमेण परिवर्तमाना गुणतारतम्येन स्थावरजंगमान् प्रसूते । योऽयं भगवत्याः उपकारिण्याः परिणामः शरीरेन्द्रियविषयरूपः सप्रयोजनः, स एव जीवस्य संसारो ज्ञेयः । अकृतार्थत्वं च अज्ञानसंसूचकम् । अतः एव बन्धकत्वमपि । तस्मात् मोक्षकामेन कृतार्थेन भवितव्यम् । आत्मवान् च कृतार्थः । तस्मात् विवेकात् प्रकृतेः आत्मानं मोचयेत् धीमान् इत्यर्थः । तथा च भगवतः वचनम्—

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥
सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ इति ॥ ३ ॥

प्रकरणार्थं रूपकेण विशदयन्नाह—

## जीवस्य पितराविव परमात्मप्रकृती ॥ ४ ॥

सूत्रार्थः—जीवस्य=जीवात्मनः पितरौ इव=माता च पिता च पितरौ तौ इव परमात्मप्रकृती=परमात्मा च प्रकृतिश्च स्तः इति विज्ञेयम् ।

भाष्यम्—जीवात्मा अर्भकः, परमात्मा च प्रकृतिः च मातापितरौ इव स्तः । अनेन रूपकेण सरसेन रहस्यमयेन च तत्त्वत्रयाणां संबंधो व्याख्यातो वेदितव्यः । तथा हि बालको दम्पत्योः आनन्दग्रंथिः, जीवात्माऽपि तथाविधो ज्ञेयः । यावत् शैशवं स्वभावतः एव मातुरुत्संगे मात्रा चिन्त्य-

मानः बालकः खेलति शैशवं अतिक्रान्तश्च पितुः आदेशं मात्राभिनन्दितः अनुमतश्च अनुसरति पुण्यानां च कर्मणां प्रतिनिधिः भवति एवमेव अयं जीवात्मा दर्शनदशायां बालः स्वभावतः एव प्रकृत्युत्संगे प्रकृत्या भोगापवर्गौ परिवेष्यमाणः भुञ्जानः रमते। यदा च ज्ञातज्ञेयो कृतकृत्यो भवति यौवनं च दर्शनपुष्टं प्राप्नोति परमपितुः परमेश्वरस्य आज्ञां मात्रा प्रकृत्या अभिनन्दितः अनुमतः स्वयमेव पितुश्चरणे समर्पितश्च अनुकरोति, पुण्येषु कर्मसु पित्रा अनुशिष्टः आचरति पित्रादेशं यावज्जीवं निष्काम-भावेन मनोज्ञेन, पापहारिणा। परमपिता च परमात्माऽपि तदा पुत्र-संक्रान्तलक्ष्मीकः सन् परमया शुभाशिषा तं विनियोज्य, विगतलोक-संग्रहभारः, सश्रीकः, तस्य परमकल्याणं अभिध्यायन्, स्वरूपभूतेन आनन्देन तं परिपोषयन् मोदमानः तिष्ठति। स्वमहिम्नि प्रतिष्ठितस्य तस्य चरमदेहस्य दग्धकर्माशयस्य भगवती प्रकृतिरपि यावज्जीवं अनुकूलतयैव उपतिष्ठते। अहो! भगवत्याः जगज्जनन्याः अनुपमेयं वात्सल्यम्। स्वोत्संगात् परमात्मोत्संगं सरन्तं स्वशिशुं जीवात्मानं निरीक्षमाणा भगवती प्रकृतिः भृशं मोमुद्यते, उमेव भगवती स्वोत्संगात् निस्सरन्तं शिवोत्संगं च आरुह्यमाणं हेरम्बं वीक्षमाणा। पित्रोः तर्पणं हि पुत्रस्य धर्मः। प्रकृतिपरमात्मनोः संतर्पणं हि पुत्रस्य जीवात्मनः धर्मः। अनुतिष्ठन् इमं धर्मं स्वयमपि सुखेन तिष्ठति इत्यर्थः। भगवता एव अयमर्थो द्योतितः। तथा हि तस्य वचांसि—

मम योनिः महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत॥
सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता॥
अधिकं तु स्वयमेव ऊह्यम्॥ ४॥

रूपकं अपरिजहन् प्रकृतं वर्णयति—

**बहुप्रजेव जननी बध्नाति गुणसंगिनं जीवं गूढाकृतिः प्रकृतिः शिशुवत्॥ ५॥**

सूत्रार्थः— बहुप्रजा इव जननी = अनेकसुता इव माता शिशुवत् = यथा शिशून् तद्वत् इयं प्रकृतिः भगवतः इयं त्रिगुणात्मिका माया नाम्नी शक्तिः गूढाकृतिः = गूढाभिसंधिः सती गुणसंगिनं = गुणासक्तं जीवं = जीवात्मानं बध्नाति = विसिनोति इत्यर्थः।

भाष्यम्—यथा बहुप्रजा माता शिशून् बध्नाति उपद्रवकरान् स्वकर्मणि व्यस्ता सती, एवमेव अनन्तप्रजा हि भगवती प्रकृतिः बध्नाति सर्वानेव उपद्रवपरायणान् जीवात्मनः। कोऽयं उपद्रवो जीवानां? गुणासक्तिरेव उपद्रवः ज्ञेयः। कथं बध्नाति असौ? गुणैरेव रज्जुभूतैः देहेन्द्रियविषयादिरूपैः परिणतैः इत्यर्थः। ननु वत्सला सुकुमारी चेयं भगवती कथं बन्धनदुःखं जीवेभ्यो ददाति? गूढाकृतिः सती सा एवं वर्तते। का असौ गूढाकृतिः? शनैः शनैः भोगापवर्गप्रदानेन सर्वानेव जीवान् कृतार्थान् करिष्ये इति कृत्वा अक्षीणेन धैर्येण भगवती वर्तते। ननु सर्वानेव बध्नाति किं? न। कृतार्थान् नैव पुनः स्पृशति गुणसंग-रहितान्। गूढाभिसन्ध्या वर्तमाना इयं भगवती न प्रकाशिताशया समेषाम्। अतः गूढाशयं विदन्तः जीवा भगवत्याः कृतज्ञा भवन्ति। इतरे च कृतघ्नाःभवन्ति। दुर्लभः च कृतज्ञो जीवः। बहुसुलभः च इतरः। तस्मात् कृतज्ञो भवेत् न कृतघ्नः इत्यर्थः। तथा च भगवतः वचनम्—

सत्वं रजस्तमः इति गुणाः प्रकृतिसंभवाः।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् इत्यर्थः॥ ५॥

ननु गुणानां स्वरूपकथने बन्धकत्वप्रतिपादने च को लाभः? आह—

गुणानां स्वरूपप्रतिपादनं विवेकोपलब्ध्यर्थम्॥ ६॥

सूत्रार्थः—गुणानां = सत्त्वरजस्तमसां रज्जुभूतानां स्वरूपप्रति-पादनं = निजरूपस्य उपपादनं विवेकोपलब्ध्यर्थम् = विवेकख्यातेः प्राप्त्यर्थं ज्ञेयं इत्यर्थः।

भाष्यम्ः—अस्ति लाभो महान् गुणानां स्वरूपाख्याने तेषां बन्ध-नप्रकारविज्ञाने च। यावन्न ज्ञायेत स्वरूपं गुणानां, न च विज्ञायेत बन्धनस्य तेषां प्रकारः तावत् तेषां अधिकारः नैव अवसीदति। आत्मनि गुणाधिकारो हि बन्धः। तस्य अपनयनं हि मोक्षः। कथं अविज्ञाय गुणान् तत्संभवति। अतः विवेकस्य उपलब्ध्यर्थं ज्ञेयं गुणचरित्रम्। ज्ञात्वा च हेयम् गुणज्ञानं च हानप्रेरकम्। तस्मात् अनतिवदनीयो विवेक-महिमा। तथा च भगवतः वचांसि—

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्।
सुखसंगेन बध्नाति ज्ञानसंगेन चानघ.........

...............इत्यारभ्य विमुक्तोऽमृतमश्नुते

इत्यन्तानि गुणानां स्वरूपबन्धनफलप्रकाशकानि इत्यर्थः ॥ ६॥

ननु अस्ति किमपि अपरं फलं गुणविज्ञानस्य ? आह—

**चिह्नेभ्यः गुणविज्ञानं वैराग्योपशिक्षार्थं फलतुच्छत्वप्रदर्शनार्थम् च॥७॥**

सूत्रार्थः— चिह्नेभ्यः = लिंगेभ्यः निर्मलत्वादिभ्यः गुणविज्ञानं = गुणानां सत्वादीनां विशेषज्ञानं वैराग्योपशिक्षार्थम् = वैराग्यस्य वैतृष्ण्य-रूपज्ञानमयस्य उपशिक्षणार्थं च = तथा फलतुच्छत्वप्रदर्शनार्थं च = फलानां प्रकृतिदत्तानां आत्मदृष्ट्या च फल्गुत्वप्रदर्शनार्थं विज्ञेयं इत्यर्थः।

भाष्यम्–लिंगानुमेयानां गुणानां विज्ञानं तावत् वैतृष्ण्यं शिक्षयति। लिंगानि च निर्मलत्वादीनि सत्वादीनां यथाक्रमं प्रोक्तानि । गुणज्ञः कोऽपि गुणेषु किमपि कमनीयं न पश्यति। अस्वरूपत्वात् गुणानाम्। ननु विवेकज्ञानं हि कमनीयतमम्। न संदेहः। विवेकज्ञानं हि चारुतमम्। तथापि गुणपक्षे न्यस्तत्वात् सुन्दरतममपि तद्धेयं भवति। सत्वसंगोऽपि दृढीभूतो पातयति जीवात्मानं स्वरूपभ्रष्टं च करोति। अतः सत्वं अपि सत्वेनैव उपशामयेत् विज्ञः। एवं निखिलेषु अपि गुणेषु तच्चरित्रेषु च गुणतत्त्वज्ञस्य नास्ति रमणीयं स्तोकमपि। गुणचरित्रं हि वैराग्यशिक्षकम्। किंच। गुणासक्तो यल्लभते तच्च फल्गु। न हि स्थावरादिब्रह्मान्तेषु जननं तावत् गौरवान्वितं अजस्य पुरुषस्य। गुणाश्च आब्रह्मस्तम्बान्तेषु परिव्राजकत्वमेव अर्पयन्ति। अतः स्वरूपलाभा-पेक्षया गुणलाभः उत्कृष्टतमोऽपि फल्गुः। तस्मात् न गुणरागी स्यात्। पुरुषो हि कमनीयतमः, न गुणाः इत्यर्थः ॥ ७ ॥

ननु कदा जीवात्मानं जहाति प्रकृतिः गुणबद्धं ? आह—

**अनघं इव शिशुं जहाति जीवं प्रकृतिः प्रसन्ना ॥ ८ ॥**

सूत्रार्थः—अनघं = निरपराधं निष्पापं शिशुं = बालकम् इव = यथा जननी मोचयति रज्जुबन्धात् तथा प्रसन्ना = निर्मला प्रकृतिः = जननी स्थानापन्ना भगवती माया जीवं = निरपराधिनं जहाति = त्यजति = मोच-यति इत्यर्थः ॥ ८ ॥

भाष्यम्—यथा जननी कृतापराधं बालकं प्रथमं बध्नाति पश्चात् च पश्चात्तापेन अनघं सन्तं तं प्रसन्ना सती मोचयति तथा प्रसन्ना प्रकृतिः

अपि भगवती प्रथमं अकृतार्थतया अपराधिनं जीवं बध्नाति पश्चात् च पश्चात्तापेन विशुद्धं जीवं कृतार्थं मुञ्चति। प्रसादः च भगवत्याः विवेकख्यातिरूपः ज्ञेयः। धर्मादिभावसप्तकेन जीवात्मानं बध्नन्ती जगज्जननी ज्ञानाख्येन अष्टमेन आत्मनः भावेन तं मोचयति। सर्वं चैतत् सूचितं भगवता पूर्वोक्तेषु श्लोकेषु एव ॥ ८ ॥

भगवत्याः जगज्जनन्याः प्रकृतेः प्रासन्न्यं विशदयन् आह—

## अविप्लुतविवेकः प्रान्तभूमिः प्रसन्नतायाः ॥ ९ ॥

सूत्रार्थः— अविप्लुतविवेकः = संशयविपर्यासरूप विप्लवशून्यः विवेकः प्रसन्नतायाः=भगवत्याः प्रकृतेः निर्मलतायाः प्रान्तभूमिः= सीमभूमिः अस्ति इत्यर्थः।

भाष्यम्—प्रसन्नतायाः काष्ठा तावत् विवेकज्ञाने अविप्लुते ज्ञेया। यावन्न अविप्लवो विवेको उदियात् तावन्न प्रसन्ना प्रकृतिः। प्रसंख्यानस्य प्रान्तभूमौ अवसिताधिकारा प्रकृतिः निवर्तते इत्यर्थः ॥ ९ ॥

ननु गुणातीतस्य लक्षणाचार गुणात्ययप्रकारान् पृच्छतः अर्जुनस्य कः आशयः ? आह—

## पूर्ववत् त्रिगुणातीतलक्षणदानम् ॥ १० ॥

सूत्रार्थः—पूर्ववत् = पूर्वमिव त्रिगुणातीतलक्षणदानं = त्रिगुणातीतस्य लक्षणदानादि ज्ञेयं इत्यर्थः।

भाष्यम्ः— यथापूर्वं द्वितीये स्थितप्रज्ञस्य लक्षणादीनि द्वादशे च भक्तस्य लक्षणादीनि भगवता प्रोक्तानि तथैव तेनैवोद्देशेन अत्र गुणातीतस्य लक्षणादीनि प्रोक्तानि इति ध्येयम्। सिद्धस्य यानि चिह्नानि साधकस्य तानि साधनानि भवन्ति। साधनान्येव प्रकर्षं नीतानि साध्यरूपाणि भवन्ति इत्यर्थः। अतः त्रिगुणातीतस्य लक्षणानि ज्ञात्वा तदनुसरणाय विधेयः प्रयत्नः इति। तथा च भगवतः गुणसंगरहितस्य पुनः पुनः पठनीयानि मननीयानि च वचनानि—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥
उदासीनवदासीनो गुणैर्यो न विचाल्यते।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥

समदुःखसुखः स्वस्थः समलोष्टाश्मकांचनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च, इति ॥१०॥

अध्यायं उपसंहरन्नाह—

## तेन ज्ञानादित्रितयस्याभेदसिद्धिः ॥ ११ ॥

सूत्रार्थः— तेन = त्रिगुणातीतलक्षणपर्यालोचनेन ज्ञानादि० = ज्ञान-भक्तित्रिगुणातीततारूपाणां त्रयाणां अभेदस्य सिद्धिः भवति इत्यर्थः ।

भाष्यम् — ज्ञानभक्तित्रिगुणातीतत्वादयो अभिन्नाः इति हि सिद्ध्यति तेषां लक्षणसाम्यात्। ज्ञानिनः यानि लक्षणानि तान्येव भक्तस्य तान्येव पुनः त्रिगुणातीतस्यापि भवन्ति । सूक्ष्मेक्षिकया अवलोकयतः तेषु त्रिषु अभेदः एव दृश्यते । अतः न शास्त्रेषु साध्यभेदो वा साधनभेदो वा ज्ञेयः। एकमपि सम्यक् आस्थितः त्रयाणां लभते फलम्। अतः निष्ठायाः मूल्यम् न केवलस्य मान्यतायाः इत्यर्थः ।

॥ इति गुणत्रयविभागयोगः ॥

## ॥ अथ पुरुषोत्तमयोगः ॥

अव्यभिचारिणी भक्तिः परमात्मनः गुणत्रयात्यये उपायभूता अस्ति इति उपसंहृतं भगवता अतीताध्याये। सेयं भक्तिः परमपुरुषस्य स्वरूपज्ञानादृते न भवति । परमपुरुषस्य स्वरूपज्ञानं हि पुरुषस्य प्रत्यगात्मनः प्रकृतेः च उभयस्य ज्ञानं अपेक्षते। न हि येन प्रकृतिः न विज्ञायते तेन पुरुषः प्रत्यगात्मा विज्ञातुं शक्यते। न च येन प्रत्यगात्मा न विदितः तेन भगवान् परमपुरुषः विज्ञायते। अतः तत्त्वज्ञानं अपेक्ष्यते। पंचदशाध्याये तस्यैव सांगसपरिवारं भगवता निरूपणं क्रियते। तत्र प्रथमं तावत् अस्य अध्यायस्य शास्त्रत्वं प्रतिपादयन् आह—

अस्य शास्त्रत्वं तत्त्वस्वरूपनिर्वचनात् ॥ १ ॥

सूत्रार्थः— अस्य = पुरुषोत्तमयोगाख्यस्य पंचदशाध्यायस्य शास्त्रत्वं = संपूर्ण शास्त्रत्वं विज्ञेयम्। कुतः? तत्त्वस्वरूपनिर्वचनात् = तत्त्वानां स्वरूपस्य निःशेषेण वचनात् इत्यर्थः।

भाष्यम्— अयं अध्यायः तावत् शास्त्रस्य गौरवं भजते। "इति गुह्यतमं शास्त्रं" इति भगवद्वचनात्। कुतः अयं पक्षपातः? नायं पक्षपातः अपि तु सत्यस्य निरूपणम्। तत्त्वज्ञानस्य संपूर्ण स्वरूपं अत्र भगवता पिण्डीकृत्य प्रदर्शितम्। यतः संपूर्णस्य तत्त्वस्य विज्ञानं जायते तत् शासितत्वात् शास्त्रं इति जेगीयते। कृत्स्नस्य तत्त्वज्ञानस्य अस्मिन् अध्याये शासितत्वात् शास्त्रमिदम् इति युक्तं उक्तम् इत्यर्थः ॥ १ ॥

ननु कति तावत् तत्त्वानि सन्ति, येषां निरूपणं शास्त्रे प्रतिज्ञातं भवति? तत्त्वानां इयत्तासूचकं सूत्रं अवतारयन्नाह—

त्रीणि तत्त्वानि जगज्जीवेश्वरभेदात् ॥ २ ॥

सूत्रार्थः—त्रीणि=त्रिसंख्याकानि तत्त्वानि=तत्त्वपदभाजः पदार्थाः। कुतः त्रीण्येव तत्त्वानि? जगज्जीवेश्वरभेदात् = प्रकृतिपुरुषपरमात्मभेदात् इत्यर्थः।

भाष्यम्—शास्त्रेण शासितव्यानि त्रीण्येव तत्त्वानि भवन्ति। तत्र किंचित् तत्त्वं जगदिति अभिधीयते, अपरं च जीव इति, तृतीयं च ईश्वर इति। एवं तत्त्वानां भेदात् त्रीणि तत्त्वानि भवन्ति इत्यर्थः। एषु च त्रिषु सर्वाणि वस्तूनि समाविष्टानि भवन्ति। न तेभ्यः अतिरिक्तः कोऽपि पदार्थः अस्ति। अतः ज्ञेयस्य त्रिष्वेवान्तर्भावो वेदितव्यः इति ॥ २ ॥

तत्र संसारस्वरूपं वर्णयति—

संसारः वृक्षः उच्छेद्यत्वादिसाम्यात् ॥ ३ ॥

सूत्रार्थ—संसारः = आत्मनि अध्यस्तः जन्ममरणततिरूपः प्रपंचः वृक्षः = भगवता वृक्षः इति वर्णितः। कथं? उच्छेद्यत्वादिसाम्यात् = उच्छेत्तुं योग्यत्वादिसमानलक्षणत्वात् इत्यर्थः।

भाष्यम्—भगवता वृक्षरूपककल्पनया संगपरित्यागेन निवारण-हेतोः संसारस्वरूपं उपवर्णितं अत्र द्वाभ्यां श्लोकाभ्याम्। संसारस्य च वृक्षस्य च अस्ति महति अंशे साम्यम्। तथा हि संसारः वृक्षः उच्छेद्यत्वसाम्यात्। यथा हि वृक्षः परशु + आदिना उच्छिन्नो भवति असंगशस्त्रेण संसारोऽपि वृश्च्यते। यथा वृक्षस्य मूलं स्कन्धः शाखाः प्रशाखाः विटपाः किसलयाः पुष्पाणि फलानि च सन्ति एवमेव संसार वृक्षस्यापि एतत्सर्वं अस्ति। परमात्मस्वरूपोर्ध्वमूलः, अव्यक्तस्कंधः, महदादिपंचतन्मात्रान्तप्रसृताधशाखः, प्रवाहरूपेणानन्तः, छन्दः सूचितयज्ञदानतपःपर्णः, ब्रह्मादिस्तम्बान्तजीवोपशाखः, गुणपुष्टविषय प्रवालः, क्लेशकर्म + आदिमूलानुसंततः, जात्यायुर्भोगफलः, अयं संसारवृक्षः समेषां हृदयभूमौ सुविरूढः असंगशस्त्रेण दृढेन संच्छेद्यः अश्वत्थः। यः इमं एवं वेद सः सर्वविद्। तथा च भगवतः वनमालिनः वचनम्।—

ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥
अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके॥
न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण दृढेन छित्त्वा॥ इति ॥३॥

ततः कार्यान्तरं निदर्शयन्नाह—

## तत्पदनिर्देशपूर्वकः साधननिर्देशः साधननिर्भरत्वात् तत्पदप्राप्तेः ॥४॥

सूत्रार्थः—तत्पद० = परमात्मधामव्यपदेशपूर्वकः साधन० = साधनानां कथनं भगवता कृतं। कुतः? तत्पदप्राप्तेः = तस्य ईश्वरस्य ब्रह्मणः यत् पदं स्थानं तस्य प्राप्तेः साधननिर्भरत्वात् = साधनसंपत्त्यवलंबनत्वात् इत्यर्थः।

भाष्यम्—कुण्ठीभावविरहितेन असंगासिना हृदि सुविरूढमूलं संसारवृक्षं संछिद्य तत्पदस्य परिमार्गणं कर्तव्यम्। तत्पूर्वं मार्गणेपि अलाभात् तत्पश्चाद् अमार्गणेऽपि साधनसंपन्नस्य तत्पदलाभात् साधनसंपत्तिं संचिनुयादेव। निर्मानमोहत्वादिसाधनानि तत्पदप्रवासिनः पुरुषस्य अनिवार्याणि अवलंबनभूतानि विज्ञेयानि। साधनसनाथो हि अस्मिन् अध्वनि प्रयातुं पारयति। साधनवीर्यरहितस्य तत्प्राप्तिः अर्थादेव अशक्या अवगन्तव्या। तथा च वत्सलस्य भगवतः वचांसि—

ततः पदं तत्परिमार्गितव्यं यस्मिन् गताः न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥
निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ता सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥इति॥४॥

एवं संसारतत्त्वं अभिधाय अथ जीवतत्त्वं विवक्षुः यदाह तद्रहस्यं अनुवदन् ब्रवीति—

## जीवभावः उपाधियोगात् ॥ ५ ॥

सूत्रार्थ—जीवभावः = आत्मनः परमात्मस्वरूपस्य जीवभवनं उपाधियोगात् = उपाधेः संबन्धाद् भवति ।

भाष्यम्—स्वरूपतः शिवोऽपि आत्मा भवति जीवः उपाधियोगात् । आविद्यकश्चायं उपाधिः देहेन्द्रियादिरूपः । परमात्मनः एव सच्चिदानन्दरूपस्य सर्वज्ञस्य सर्वशक्तिमतः अयं सनातनः अंशः अस्मिन् जीवलोके जीवभूतः भवति । यदा च उपाधितः आत्मनः अधःपतनं असौ कृपाचतुष्टयेन सम्यक् जानाति तदा उपाधिकारणस्य अज्ञानस्य समूलनाशाय प्रयतते । प्रयतमानश्च ईश्वरकृपया अविलंबेन आत्मनः स्वरूपं वास्तवं साक्षात्कृत्य उपाध्युदासीनो भूत्वा प्रारब्धावसाने स्वरूपनिष्ठो भवति । यावत् न प्रबुध्यते तावत्तस्य जीवभावोऽपि न अपैति । तस्मात् ज्ञानस्य असत्त्वे दृश्यमानः सत्त्वे च तस्य विलीयमानः अयं उपाधियोगः एव शिवस्य जीवत्वापादकः । न च स्वानुभवसंवेद्ये अर्थे तावत् अति चर्चा श्रेयस्करी भवति । जानन्तः एव जानन्तु इमं अर्थं ईश्वरानुकंपया एव ज्ञायमानं इत्यर्थः । तथा च अंशिनः भगवतः वचनानि—

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥
श्रोत्रंचक्षुःस्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥
उत्क्रामन्तं स्थितं वापि भुंजानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ इति ॥ ५ ॥

ननु कदा तर्हि जीवः शिवो भवति ? आह—

ज्ञानात् तद्भेदे अभेदः ॥ ६ ॥

सूत्रार्थः—ज्ञानात् = तत्त्वस्य सम्यक्दर्शनात् तद्भेदे = तेषां शरीरेन्द्रियादीनां उपाधिनां नाशे अभेदः = जीवशिवयोः एकरूपता भवति इत्यर्थः ।

भाष्यम्—कारणनाशे सति स्वयमेव कार्यं नश्यति । उपाधेः कारणं च अज्ञानम् । अज्ञानस्य नाशको हेतुः ज्ञानम् । ज्ञानं हि अपरोक्षं अज्ञानं समूलं उत्खातयति । छिन्ने च अज्ञानमूले, तेन परिपुष्टः उपाधिसमुदायोऽपि जीवस्य कृशो भवति । तनुतरतां शनैः शनैः आपद्यमानः असौ तीव्रेण प्रसंख्यानाग्निना भस्मतां नीयते । भस्मीभूते च अज्ञाने सपरिवारे जीवस्य शिवभावः स्वयमेव आविर्भवति । उक्तं च भगवता शिवस्वरूपेण—"पश्यन्ति ज्ञानचक्षुषः" इति । वस्तुयाथात्म्यवेदिनः ब्रह्मात्मनोः स्वरूपाभेदं चक्षुष्मन्तः सन्तः पश्यन्ति ॥ ६ ॥

जीवतत्त्वं निरूप्याथ परमात्मतत्त्वं विशदयन्नाह—

सच्चिदानंदात्मको हि देवः अबाधितत्वात् प्रकाशकत्वात् आत्मत्वाच्च ॥ ७ ॥

सूत्रार्थः—देवः = सर्वान्तःद्योतकः परमात्मा हि = हिः वाक्यालंकारे, सच्चिदानन्दात्मकः = सत् स्वरूपः चित्स्वरूपः आनंदस्वरूपश्च ज्ञेयः । कुतः ? अबाधितत्वात् = कालत्रयेऽपि बाधाभावात् प्रकाशकत्वात् = सर्वस्य वस्तुनः स्वयं ज्योतिष्ट्वेन प्रकाशकत्वात् अनन्यप्रकाश्यत्वात् च च = तथा आत्मत्वात् = स्वरूपभूतत्वाद् इत्यर्थः ।

भाष्यम्—परमात्मा हि परमदेवः । देवत्वं हि तस्य बाह्याभ्यन्तरसर्ववस्तुद्योतकत्वात् । "यज्ञस्य देवं" इति मन्त्रवर्णात् । सोऽयं परमपुरुषः परमात्मा सच्चिदानन्दस्वरूपो विज्ञेयः । कालत्रयेऽपि अबाधितसत्त्वात् तस्य सत्त्वं, सर्ववस्तुप्रकाशकत्वेन स्वयंज्योतिःस्वरूपत्वात् चित्त्वं, आत्मस्वरूपत्वादेव च आनन्दमयत्वं ज्ञेयम् । न हि

आत्मनि दुःखसामग्री वर्तते। सुखस्य तु अस्ति। नित्यं अनुभूयमानत्वात्। तथा च निद्रायां अयं अस्माकं नित्यानुभवः समाधौ अपि अयमेयानुभवः मोक्षेऽपि समानश्चर्चः। पूर्वचर्चितत्वात् च अस्य विषयस्य न विस्तरः क्रियते। सतः परमात्मनः चित्त्वं आनन्दरूपत्वं भगवता एव सूचितम्। तथा च तस्य वचनानि—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥
गामाविश्य च भूतानि धारयाम्यहमोजसा।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमौ कृत्वा पचाम्यन्नं चतुर्विधम्॥
सर्वस्य चाहं हृदि संनिविष्टो।
मत्तः स्मृतिर्ज्ञानमपोहनं च॥
वेदैश्च सर्वैरहमेव वेद्यः।
वेदान्तकृद् वेदविदेव चाहम्॥ इति॥

नहि आदित्यसमिन्धनं चन्द्रमसः उत्तेजनं स्मृतिज्ञानापोहनादिकं च चेतनज्योतिर्विधुरेण शक्यम्। न च रसरहितेन भूतधारणं अन्नपाचनादिकं वा सर्वस्य भूतवर्गस्य शक्यम्। अस्यैवानन्दस्य मात्रामात्रेण सर्वाणि भूतानि आनन्दमयानि भवन्ति। अतः सम्यक् उक्तं सच्चिदानन्दमयो देवः इति॥ ७॥

ननु कौ इमौ द्वौ पुरुषौ स्तः? क्षराक्षरनामानौ पुरुषौ तु अश्रुतपूर्वौ। समादधन् आह—

## क्षराक्षरौ विकृतिप्रकृती उपपत्तेः॥ ८॥

सूत्रार्थः— क्षराक्षरौ = भगवता उपक्षिप्तौ क्षराक्षरनामानौ द्वौ पुरुषौ अनुक्रमेण विकृतिप्रकृती = विकृतिः च प्रकृतिः च ज्ञेयौ। कुतः? उपपत्तेः = न्याय्यत्वात् इत्यर्थः।

भाष्यम्—क्षराक्षरनामानौ द्वौ पुरुषौ भगवता अत्र निर्दिष्टौ विकृतिप्रकृतिरूपौ एव ज्ञेयौ। तत्र क्षरपुरुषः विकृतिः अक्षरपुरुषश्च प्रकृतिः। अयमेवार्थः अत्र उपपद्यते। न अन्यः कश्चन। तथा हि क्षरणात् विनाशात्

क्षरः विकृतिः कार्यरूपा पृथिव्यादिमहत्तत्त्वान्ता । अक्षरश्च तेषु कार्यराशिषु कारणात्मना अवस्थितः पुरुषः प्रकृतिरेव त्रिगुणात्मिका । सा च परिणामिनित्या । अतः तस्याः अक्षरत्वं उपपद्यते । तस्मात् क्षराक्षरौ पुरुषौ कार्यकारणवाचिनौ ज्ञेयौ इत्यर्थः ॥ ८ ॥

ननु अस्तु तयोः विकृतिप्रकृतिरूपत्वम् । पुरुषपदभाक्त्वं तु तयोः कथं श्लिष्यते ? आह—

पुरुषपदवाच्यत्वं भोगापवर्गसाधकत्वात् गौणं तद्भिन्नस्य मुख्यस्य प्रतिपादनाच्च ॥ ९ ॥

सूत्रार्थः—पुरुष० = पुरुषशब्दाभिधेयत्वं तयोः भोगा० = भोगस्य अपवर्गस्य च साधनत्वात् ज्ञेयं तच्च गौणं = अप्रधानं । कुतः ? तद्भिन्नस्य = तयोः भिन्नस्य मुख्यस्य = प्रधानस्य पुरुषस्य प्रतिपादनात् = अत्रैवोपन्यासात् इत्यर्थः ।

भाष्यम्ः—क्षराक्षरयोः पुरुषशब्दवाच्यत्वं न असमंजसम् । क्षराक्षरौ हि पुरुषस्य आत्मनः मुख्यस्य भोगापवर्गसाधकौ वर्तेते । तस्मात् तौ अपि पुरुषशब्दवाच्यत्वेन गौण्या वृत्त्या भगवता स्वीकृतौ । कुतः अयमर्थः प्रत्येयः ? यतः भगवता एव अन्यस्य मुख्यस्य पुरुषस्य " उत्तमः पुरुषः तु अन्यः " इत्यनेन प्रतिपादनं कृतम् । तस्मात् गौणौ इमौ पुरुषौ क्षराक्षरसंज्ञकौ । मुख्यः च उत्तमः पुरुषः आत्मस्वरूपः इति । तथा च भगवतः वचनानि—

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ इति ॥ ९ ॥

ननु उत्तमत्वेन उपन्यस्तः पुरुषोत्तमः परमात्मा प्रत्यगात्मनः भिन्न एव भगवतः इष्टो भाति । कुतः ? तस्य पुरुषोत्तमत्वेन व्यवहारात् । अभिन्नत्वे च न तारतम्यव्यपदेशः युज्यते । शंकां निरस्यन् आह—

अन्यः इति चेन्न श्रुतिस्मृतियुक्तिअनुभवव्याकोपात् ॥ १० ॥

सूत्रार्थः—अन्यः = परमात्मनः पुरुषोत्तमात् भिन्नः एव प्रत्यगात्मा इति चेत् = एवं चेत् मनुषे न = न एवं मन्तव्यं । कुतः ? श्रुति० = श्रुत्यादीनां कदर्थनात् इत्यर्थः ।

भाष्यम्—न खलु अत्रोपन्यस्तं उत्तमत्वं प्रत्यगात्मापेक्षं अपि तु क्षराक्षरात्मापेक्षम् । क्षराक्षरौ हि जडत्वेन भोगापवर्गसाधकौ अपि अधमौ । प्रत्यगात्मा स्वरूपपरमात्मा च चेतनत्वेन उत्तमः । प्रत्यगात्मनः अत्र अश्रवणमेव प्रत्यगात्मपरमात्मनोः एकत्वं भगवतः इष्टं इति सूचयति । तथापि चेत् हठात् तयोः अन्यत्वं ब्रवीषि श्रुतिं च स्मृतिं च युक्तिं च अनुभवं च व्यर्थं कोपयसि । श्रुत्यादीनां एकत्वे एव तात्पर्यं इति तु असकृत् अस्माभिः प्रपंचितम् । तस्मात् प्रत्यगात्मा एव पुरुषोत्तमः । तस्य उत्तमत्वं तु संसारदशायां दुःसंगेन तिरोहितं स्यात् । न खलु भस्मनाच्छन्नः इति शान्तज्योतिर्हुताशः न वा मलच्छन्नं रत्नं इति कान्तिशून्यं भवति । तथा च पुरुषोत्तमस्य भगवतः वचांसि—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात् क्षरमतीतोऽहं अक्षरादपि चोत्तमः ।
अतोऽस्मिल्लोके वेदे च प्रथितः पुरुषोत्तमः ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ इति ॥ १० ॥

उपसंहरन्नाह अध्यायार्थम्—

गुह्यतमत्वं तत्त्वनिरूपणत्वात् तत्त्वस्य च कृतकृत्यतावहकत्वात् ॥ ११ ॥

गुह्यतमत्वं = अस्याध्यायस्य रहस्यतमत्वं तत्त्व० = त्रयाणां जगज्जीवेश्वरतत्त्वानां निःशेषेण दर्शितत्वात् च = तथा तत्त्वस्य = तत्त्वज्ञानस्य कृतकृत्यता० = विदितवेदितव्यत्वापादकत्वात् इत्यर्थः

भाष्यम्—गुह्यतमं हि तत्त्वस्य ज्ञानं भवति । गुह्यतमस्य ज्ञानस्य तत्त्वविषयकस्य अत्र निरूपणात् अस्य अध्यायस्य शास्त्ररूपस्य कृतकृत्यता अपि भवति । यावत्कृतकृत्यता च प्रयत्नः । तस्मात् कृतकृत्य-

-ताप्रदत्वादपि ज्ञानं इदं रहस्यतमं इति ज्ञेयम् इत्यर्थः। तथा च भगवतः वचनम्—

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ इति ॥ ११ ॥

॥ इति पुरुषोत्तमयोगः ॥

## ॥ अथ दैवासुरसंपद्विभागयोगः ॥

अतीताध्याये " स सर्वविद् भजति मां सर्वभावेन भारत " इति अचीकथत् भगवान् वासुदेवः । कः भगवन्तं भजते कः च न भजति इति ज्ञेयम्। भगवन्तं भजन्तः देवाः अभजन्तःच असुराः ज्ञेयाः। देवासुरभेदश्च संपत्तिभेदाद् भवति। देवाश्च असुराश्च न मनुष्यत्वं अतिक्रामन्ते । " द्वया ह प्राजापत्याः देवाश्च असुराश्च " इति औपनिषद् वचनात् । मनुष्येषु येषां दैवीसंपत् ते देवाः येषां च आसुरीसंपत् ते दैत्याः असुराः वा विज्ञेयाः । संपत् च मनसः वृत्तयः । याः वृत्तयः देवं विश्वस्य प्रकाशकं अन्तर्यामिणं अभियान्ति ताः दैवीसंपत्। याश्च भगवतः विमुखीकुर्वन्ति ताः आसुरीसंपत्। संपद्भेदात् जीवनभेदः ततश्च संज्ञाभेदः । यदर्थोऽयं संपद्विभागः तमर्थं ब्रुवन् आह—

### दैवासुरसंपद्विभागः हानोपादानार्थत्वात् ॥ १ ॥

सूत्रार्थः—दैवासुर० = दैवीनां आसुरीणां च संपदां विभाजनं हानोपादानार्थत्वात् = आसुरीणां हानाय दैवीनां च स्वीकाराय वर्णितो वेदितव्यः इत्यर्थः ।

भाष्यम्—" देवो भूत्वा देवं यजेत इति " न्यायेन यः भगवन्तं आरिराधयिषुः अस्ति तेन दैवीसंपदः संचयः एव कर्तव्यः। दैवी संपत् हि ईश्वरभक्तिप्रयोजिका। ततश्च मोक्षप्रदा। आसुरीसंपच्च संसारभक्तिप्रयोजिका ततश्च संसारप्रदा। विवेकिनश्च ईश्वर एव इष्टः न संसारः। अतः दैवीसंपत्तिं एव संचिनुयात् आसुरीं च परिहरेत्। मनुष्यश्च असुरश्च इत्येतद् अकल्प्यम् तस्मात् दैवासुरसंपत्योः स्वीकारपरिहारार्थे विभाजनं ज्ञेयम् इत्यर्थः। तथा च देवदेवस्य भगवतः वचांसि—

अभयं सत्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥
तेजः क्षमा धृतिः शौचं अद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ इति ॥ १ ॥

संपत्योः फलभेदं वर्णयन् प्रतिपादितं दृढयति—

प्राप्तिभेदः संपद्भेदात् ॥ २ ॥

सूत्रार्थः—प्राप्तिभेदः = फलभेदः = संपद्भेदात् = संपत्योः भेदात् ज्ञेयः इत्यर्थः ।

भाष्यम् -संपद्भेदात् फलभेदः भवति । तथा हि दैवीसंपत्संपन्नो मुच्यते । आसुरी संपत्संपन्नश्च बध्यते । मोक्षबन्धौ च संपदनुसारिणौ । संपदः संचयस्तु मनुष्यस्य स्वाधीनः । स्वायत्ते संपत्योः संचये विवेको भवतु विजयी इत्यर्थः । तथा च भगवतः वाक्यं "दैवी संपद् विमोक्षाय निबन्धायासुरी मता" इति । तस्मात् देवो भवेत् न असुर इत्यर्थः ॥ १ ॥

ननु आसुर्याः वर्जनम् अशक्यं चार्वाकस्य बलवत्त्वात् । न खलु चार्वाकं अपरितोष्य शंकरः लब्धप्रतिष्ठो भवति । चार्वाको देहः शंकर-श्चात्मा । अतः देहात्मभावनामूलः आसुरभावः देवानां अपि सुदुस्त्यजः । भगवद् वर्णितासुरभावस्य व्याप्तिः तावत् निरपवादा इव दृश्यते सर्व स्पर्शिनी च । असुराणामेव मनुष्याकारणां बाहुल्यं दृश्यते । क्वचित् मंडिता भगवती वसुंधरा देवैः मनुष्याकृतिभिः । अतः दैत्यभवनमेव स्वाभाविकं । प्रवर्ततां च स्वभावः निवर्ततां च अस्वभावः । एवं प्राप्ते आह—

आसुर्याः वर्जनं श्रेयोविघातकत्वात् ॥ ३ ॥

सूत्रार्थः—आसुर्याः = असुरसंबंधिन्याः संपदः वर्जनं = हानं कर्तव्यं श्रेयोविघातकत्वात् = श्रेयसः विनाशकत्वात् इत्यर्थः ।

भाष्यम्ः—"श्रेयश्च प्रेयश्च मनुष्यमेतः तौ संपरीत्य विविनक्ति धीरः" इति श्रुत्युक्तदिशा श्रेयःप्रेयसोः श्रेयः एव स्वीकर्तव्यं धीमता ।

श्रेयसः वर्जनं हि मानुष्यं विफलयति। ननु न वयं श्रेयोविरोधिनः। कथं तर्हि। प्रेयोऽपि न मतिमता वर्जनीयम्। क एवमाह। त्वं। न। यद् वयं ब्रूमः तत् च श्रेयसः अभ्यर्हितत्वात् स्वीकरणं न प्रेयसः वर्जनम्। प्रेयसि च चार्वाकतर्पणं अस्ति। भवतु। न वयं चार्वाकमपि प्रतिषेधामः। भवतु चार्वाकोऽपि पूजितः शंकरस्तु न विस्मर्तव्यः। विस्मृतो हि शंकरः सर्वनाशं आवहति। स्मृतः स्वीकृतश्च शंकरः चार्वाकं अपि पुष्णाति स्वयमपि धन्यो भवति। अतः अत्र न चार्वाक-शंकरयोः विवादः। विवादस्तु शंकरं अनादृत्य चार्वाकस्य प्रतिष्ठापने उत्तिष्ठति। आत्मानं मुख्यं अनादृत्य देहस्य आत्मनः वाहनभूतस्यैव अत्यादरो तावत् निषिध्यते। मोहमूलकत्वात्। मोहस्य च नाशकत्वात्। अतः आत्मनः अधिकारे वर्तिनी देहपूजा सह्या न्याय्या च वर्तते न आत्मनः अधिकारं आक्षिपन्ती। दीर्घं पश्यत मा ह्रस्वं परं पश्यत मा अपरम् इति स्मृत्युक्तेन न्यायेन दीर्घस्य च परस्य दर्शनाय मानुषं जन्म। केवलस्य च रहस्य पूजनं तावत् ह्रस्वं अपरं च दर्शनम्। तत् मा भूत् अधःपातकं इति श्रेयसः वरणे आग्रहः। अपि च ईश्वरप्राप्तिः न बालानां लीला। देहोऽपि चेत् तत्प्राप्तौ प्रत्यवायभूतः स्यात् सोऽपि नैवादर्तव्यः। श्रेयसः प्राप्त्यै प्राप्तो देहः चेत् तदेव प्रतिबध्नाति स्वं एव मुख्यतया प्रतिष्ठापयति, आत्मानं च विस्मारयति तस्यापि स्वामिनं, को लाभः तस्य मोहतः पुष्ट्या। अतः देवभावं असुरभावास्पृष्टं एव रक्षेद् इत्यर्थः। श्रेयोऽवाप्तिः मुख्या मानुष्ये न प्रेयोऽवाप्तिः तस्याः सर्वत्र सुलभत्वात्। तस्मात् विवेकिना हेयः आसुरभावः। तथा च श्रेयःपक्षपातिनः भगवतः वचांसि--

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः।
न शौचं नाऽपि चाचारो न सत्यं तेषु विद्यते॥
असत्यं अप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसंभूतं किमन्यत् कामहैतुकम्॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः।
मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः॥
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमा एतावदिति निश्चिताः॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्ति इदमपि मे भविष्यति पुनर्धनम् ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥
अनेक चित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥
तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ इति ॥

उपर्युक्तः एव अर्थः एषां श्लोकानां पर्यालोचनेन उत्तरति ॥ ३ ॥

ननु आसुरभावस्य मूलभूताः काः वृत्तयः ? तासां अनिष्टहेतु भूतानां त्यागं निर्दिशन् आह—

## कामादित्रितयस्य त्यागः नरकद्वारभूतत्वात् ॥ ४ ॥

सूत्रार्थ—कामादि० = कामक्रोधलोभरूपवृत्तित्रयस्य सर्वानिष्ट-मूलभूतस्य आसुरभावप्रवर्तकस्य पोषकस्य च त्यागः = हानं कर्तव्यम् । कुतः ? नरकद्वारभूतत्वात् = नीचैर्गमनस्य साधनभूतत्वात् इत्यर्थः ।

भाष्यम्—सर्वस्य अनिष्टस्य आसुरभावस्य प्रवर्तिका पुष्टिकरा च कामादीनां त्रिपुटिः । त्यक्तायां च तस्यां निर्विघ्नो भवति श्रेयसः पन्थाः । कामादित्रितयं तावत् नरकस्य द्वारभूतम् । नरकं च नीचैः गमनम् द्वारभूतम् उत्तरोत्तरविनिपातसूचकम् । न च नारकी गतिः मनुष्येण

सता प्राप्तव्या अस्ति। तस्मात् तमोद्वारभूतैः एभिः कामक्रोधलोभाख्यैः निखिलस्यापि आसुरभावस्य जन्मभूभूतैः विमुक्तः आत्मनः श्रेयः आचरेत् इत्यर्थः। तथा च भगवतः आदेशः

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत्॥
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्॥ इति॥ ४॥

ननु मनुष्येण सता स्वश्रेयः साधनीयम्। किं तत्र शास्त्रस्य अत्याचारेण। सर्वत्र शास्त्रस्य सत्तास्थापना तावदसह्या! अत्रत्यं रहस्यं स्फोरयन्नुपसंहरतिः —

शास्त्रप्रतिष्ठा नियामकत्वात्॥ ५॥

सूत्रार्थः—शास्त्रप्रतिष्ठा = शास्त्रगौरवं स्वीकार्यं भवति। कुतः? नियामकत्वात् = कार्याकार्यव्यवस्थानियामकत्वात् शास्त्रस्य इत्यर्थः।

भाष्यम्—न खलु शास्त्रं विद्वेषमर्हति। सत्यशोधकत्वात् शास्त्रस्य। शास्त्रं हि ऋतंभरं भवति। ईश्वरान्वेषणं प्राप्तिश्च वैज्ञानिकः प्रयोगः। अतः परमवैज्ञानिकप्रयोगभूते ईश्वरदर्शने वैज्ञानिकेनैव मार्गेण तस्य अन्वेषणम् न्याय्यम्। शास्त्रं हि वैज्ञानिकीं पद्धतिं पुरस्करोति आत्मानुभवस्य। अतः अशास्त्रीयं न किमपि स्वप्नेऽपि हितकामिना चिंतयितव्यं करणीयं वा। कार्याकार्यव्यवस्थाज्ञापकं शास्त्रं तत्त्वनिष्ठं बहूपकरोति पुंसः। शास्त्रं चेत् वैज्ञानिकी पद्धतिः ज्ञानाय करणाय च, भवति शास्त्रं क्षौरकर्मणः अपि। क्षौरकर्माऽपि शास्त्रज्ञानं अपेक्षते स्वार्थलाभाय। न हि स्वशास्त्रापरिचितो नापितः परस्य शिरःक्षेमं करोति। तस्मात् मुण्डनमारभ्य मोक्षपर्यन्ता शास्त्रस्य प्रतिष्ठा स्वीकर्तव्या। अत एव नासौ असह्या भवितुमर्हति अत्याचाररूपा वा। शास्त्रविधानोक्तं ज्ञात्वा सर्वोऽपि कर्तुमर्हति इत्यर्थः। तथा च सर्वतंत्रस्वतंत्रस्य भगवतः आदेशः हितावहः—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः।
न स सिद्धिमवाप्नोति न सुखं न परांगतिम्॥
तस्मात् शास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥ इति॥ ५॥

॥ इति दैवासुरसंपद्विभागयोगः॥

## ॥ अथ श्रद्धात्रयविभागयोगः ॥

ननु मूर्धन्यं हि शास्त्रशासनं इति प्रतिपादयता भगवता अतीताध्याये कामचारः प्रतिषिद्धः। न च सर्वेषामस्ति शास्त्रज्ञानम्। कर्म च सर्वैरेव कर्तव्यं भवति अवर्जनीयत्वात् तस्य। न वा शास्त्रज्ञानं प्राप्यैव आचरणीयं इति अवस्थितिरपि शक्या। तदभावेऽपि कर्मणः दर्शनात्। तस्मात् शास्त्रविधिमुत्सृज्यैव बाहुल्येन मनुष्याः वर्तन्ते। एवं सति शास्त्रस्य गौरवहानिः अकामेनापि भवत्येव। शास्त्राभावे च न संसिद्धिः न सुखं न परागतिः इति भगवता एव उक्तं। स्वाभाविक्या श्रद्धया वर्तमानो मनुष्यः कामचारी एवं सति कां निष्ठां प्राप्नोति? किं वा श्रद्धायाः फलं? ब्रवीति—

निष्ठाप्रश्नः श्रद्धायाः नियामकत्वात् ॥ १ ॥

सूत्रार्थः—निष्ठाप्रश्नः = निष्ठां उद्दिश्य अर्जुनस्य प्रश्नः श्रद्धायाः = श्रद्धाबुद्धेः नियामकत्वात् = नियंतृत्वात् इत्यर्थः।

भाष्यम्—श्रद्धा हि नियामिका भवति लोकस्य कर्मणि। श्रद्धानुसारिणी च निष्ठा भवति। निष्ठा हि जीवनस्य निश्चिता अवधारणा। पुनः पुनः कृतस्य संस्काराः प्रबलाः सन्तः तथाविधे कर्मणि एव स्वभावतः मानवं प्रेरयन्ति। या इयं स्वभावतः कर्मप्रेरिका निश्चिता जीवनधारणा सा निष्ठा ज्ञेया। बाहुल्येन च लोकव्यवहारः निष्ठापूर्वकः एव प्रवर्तते। ऋतंभरत्वात् शास्त्रस्य तत् निष्ठायाः सुसंस्काराधायकं भवति। तथापि शास्त्रप्रचारस्य सर्वेषु कालेषु युगेषु जनतासु च विरलत्वात् तस्य विधिं उत्सृज्यैव बहुधा वर्तमानो लोकः दृश्यते। शास्त्रज्ञानाभावे च विधिनिषेधविषयके कामचारेण वर्तमानः स्वश्रद्धानुसारं एव वर्तते। पौनःपुन्येन च वर्तनात् कृतकर्मसंस्कारसदृशनिष्ठावान् जायते। अतः अर्जुनस्य प्रश्नः निष्ठाविषयः। श्रद्धानियम्यत्वात् निष्ठायाः तस्याः प्राधान्यं जीवने ज्ञेयमित्यर्थः ॥ १ ॥

ननु कथं श्रद्धायाः ईदृशं माहात्म्यम्। आह—

तत्त्वं तस्याः पुरुषस्य तन्मयत्वात् ॥ २ ॥

सूत्रार्थः—तत्त्वं = निष्ठानियामकत्वं तस्याः = श्रद्धायाः सत्वानुरूपायाः आस्तिक्यबुद्धि + अपरपर्यायाः पुरुषस्य = जीवस्य तन्मयत्वदर्शनात् = श्रद्धामयत्वावलोकनात् ज्ञेयमित्यर्थः।

भाष्यम्—श्रद्धायाः निष्ठानियामकत्वं पुरुषस्य श्रद्धामयत्वात् ज्ञेयम्। यस्य यादृशी श्रद्धा तादृशं तस्य जीवनदर्शनं, दर्शनानुसारं च वर्तनं, तदनुविधायिनी च निष्ठा भवति। श्रद्धा च आस्तिक्यबुद्धिः। यादृशं यस्य अस्तिविषयकंदर्शनं तादृशं तस्य अनुवर्तनं भवत्येव। देहमात्रात्मास्तित्ववादिनः देहपरायणं जीवद्रोहकरं स्वार्थप्रधानं हीनतमं जघन्यं च जीवनं भवति अस्तिबुद्धेः तामसत्वेन अदर्शनविद्धत्वात्। आत्ममात्रास्तित्ववादिनः आत्मपरायणं जीवाद्रोहकरं परार्थप्रधानं उत्तमतमं मूर्धन्यं च जीवनं भवति अस्तिबुद्धेः सात्विकत्वेन दर्शनपूर्णत्वात्। "अथ खलु क्रतुमयः अयं पुरुषः स यथा क्रतुः अस्मिन् लोके भवति तथा इतःप्रेत्य संभवति तस्मात् क्रतुं कुर्वीत" इत्यादि श्रुतिवचनात्। सदसद्बुद्धिमयी श्रद्धा सदसज्जीवननिष्ठानिर्माणकर्त्री भवति। तथा च भगवतः वचनानि—

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।
सात्विकी राजसी चैव तामसी चेति तां-शृणु॥
सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धामयोऽयं पुरुषः यो यच्छ्रद्धः स एव सः॥
यजन्ते सात्विका देवान् यक्षरक्षांसि राजसाः।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः॥
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः।
मां चैवान्तः शरीरस्थं तान्विद्ध्यासुरनिश्चयान्। ॥ इति २ ॥

श्रद्धाभेदात् जीवनभेदं सूचयन् जीवानां त्रैविध्यं आह—

## सात्विकादिजीवभेदः श्रद्धाभेदात् ॥ ३ ॥

सूत्रार्थः— सात्विकादि० = सात्त्विकराजसतामसाख्याः जीवानां भेदाः भवन्ति। कुतः? श्रद्धाभेदात् = सात्त्विक्यादिश्रद्धायाः विशेषात् इत्यर्थः

भाष्यम्ः—अस्मिन् जगति जीवानां अपि तिस्रः कोट्यः भवन्ति। सात्विकाः राजसाः तामसाश्च इति भेदभिन्नत्वात्। सोऽयं भेदः श्रद्धामूलकः। यस्य जीवस्य सात्विकी श्रद्धा स सात्विकः, यस्य च राजसी

यस्य च तामसी श्रद्धा स राजसो वा तामसो वा भवति। देवान् यजन्ते सात्विकाः। देवशब्दो विद्याद्योतकोऽपि ज्ञेयः। सात्विकाः जीवाः देवान् दिविस्थान् भूमिस्थान् दर्शनसंपन्नान् यजन्ते–सेवन्ते–अनुसरन्ति इत्यर्थः। यक्षरक्षसां पूजाप्रधानाश्च राजसाः। यक्षरक्षसाः च धनसत्तादि सूचकाः अपि ज्ञेयाः। धनिनां सत्तावतां च पूजनं तेभ्यः च स्वार्थ-साधनं तेषां प्रधानो जीवनमन्त्रः। तामसाश्च प्रेतान् भूतगणांश्च सेवन्ते। प्रेतभूतादिना गतकालगौरवगायने एव कटिबद्धाः वर्तमानं च अपलपन्तः भाविनि च श्रद्धाशून्याः विचारजडाः आलस्यसहचराः तामसा जीवाः ज्ञेयाः। ते च "आसीत्" इत्यस्मिन् कल्पनया रमन्ते। "अस्ति" "भविष्यति" च इत्यत्र अनादरवन्तः भवन्ति। एवं श्रद्धाभेदात् जीवभेदो भवति। तथा च उक्तं भगवता—

यजन्ते सात्विकाः देवान् यक्षरक्षांसि राक्षसाः।<br>
प्रेतान् भूतगणांश्चैव यजन्ते तामसाः जनाः॥<br>
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः।<br>
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः।<br>
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः॥<br>
मां चैवान्तः शरीरस्थं तान्विद्धयासुरनिश्चयान्॥ इत्यादि॥ ३॥

ननु अप्रासंगिकी आहारादीनां चर्चा गीतासु। अध्यात्मविद्या-ख्यापनप्रधानत्वात् गीतायाः। भ्रमं इमं निरस्यन् पूर्वं तावत् तेषां त्रैविध्यं आह—

## आहारादीनां त्रैविध्यं सात्त्विकादिभेदात् ॥ ४ ॥

सूत्रार्थः—आहारादीनां = जेमनादीनां = आदिना यज्ञदानतपसां ग्रहणं वेदितव्यम् तेषां त्रैविध्यं = त्रिविधत्वं = सात्त्विकादिभेदात् = सात्विकराजसिक तामसिकभेदात् ज्ञेयम् इत्यर्थ।

भाष्यम्—आहारादयाः अपि त्रिविधाः ज्ञेयाः तेषां गुणमूलत्वात् इत्यर्थः। आहारादिषु अपि सत्वरजस्तमसां प्रसृतिः ज्ञेया। गुणानां च भेदात् तत्प्रधानानां आहारादीनां अपि सात्विकादिभेदः भवति। तथा च तेषां वर्णनात्मकानि भगवतः वचांसि—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः।

यज्ञस्तपस्तथा दानं तेषां भेदमिमं श्रृणु ॥
आयुःसत्त्वबलारोग्य सुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धा स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥
यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥
अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥
अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ॥
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥
मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ इति ॥ ४ ॥

अथ तेषां औचित्यं सहेतुकं प्रस्थापयन् आह—

**आहारादीनां मीमांसा निष्ठानिर्माणकर्तृत्वात् ॥ ५ ॥**

सूत्रार्थः = आहारादीनां = आहारयज्ञदानतपसां मीमांसा = पूज्यो

विचारः भगवता कृतः। कथं ? निष्ठानिर्माणकर्तृत्वात् = निष्ठायाः निर्मातृत्वात् इत्यर्थः।

भाष्यम्—आत्मशब्दः त्र्यर्थवाचको ज्ञेयः। चेतनबुद्धिदेहानां अभिधायको वर्तते आत्मशब्दः। अतः त्रिष्वपि अर्थेषु यथासंभवं सः गीतासु ग्राह्यः। अतः अध्यात्मख्यापनपरायणा गीता न केवलस्य चेतनस्य आत्मनः आख्याने कृतकृत्या भवति। आत्मना सह देहस्यापि बुद्धेः अपि च साहचर्यदर्शनात्। देहस्य बुद्धेः आत्मनश्च अन्योन्योपकारकत्वं दृश्यते। देहः बुद्धिं, बुद्धिश्चआत्मानं, आत्मा च तयोः उपकुर्वन् दृश्यते। निर्बलो देहः आत्मज्ञाने अनधिकृतो भवति। प्रायः निर्बला च बुद्धिः आत्मानं नैव धारयितुं शक्नोति। आत्मा च तयोः उपकारकः प्रत्यक्षः। अतः भ्रमः एव अयं जनतायाः यत् केवलस्य आत्मनः ख्यापने कृतकृत्या गीता इति। आत्मनः दर्शनार्थं देहं च बुद्धिं च स्वस्थं स्वस्थां च अपेक्षमाणा गीता आहारादीनां मीमांसां करोति। तच्च अतीवोचितं इत्यर्थः। अन्नमेव सूक्ष्मतमतां गतं बुद्धितत्त्वं भवति। आहारशुद्धौ मुक्तिं पश्यन्ति उपनिषद्द्रष्टारः इत्यपि इममेव अर्थं समर्थयति। आहारादयः जीवननिष्ठां साधयन्ति। कीदृशं अस्य जीवनं, सात्विकं वा राजसं वा तामसं वा इति सूचयति तस्य आहारादिकम् प्रायेण। तस्मात् आहारादीनां मीमांसा अतीवोपयोगिनी अध्यात्मजीवने। तथा च भगवतः श्लोकाः—"आयुः सत्व......तामसमुदाहृतम्"। सात्विकान् एव सेवेत इति हि विवेकः तदर्थत्वात् निरूपणस्य इत्यर्थः॥ ५॥

ननु भवतु आहारादीनां मीमांसा उचिता। ॐ तत्सत् नाम्नः निर्देशेण किं साध्यते ? आह—

ॐ तत् सत् मीमांसा श्रेयःफलत्वात्॥ ६॥

सूत्रार्थः—ॐ = प्रणवः तत् = अदः सत् = अस्ति पर्यायं, तस्य प्रणवस्य, तत् शब्दस्य, सत् शब्दस्य च मीमांसा = विमर्शः भगवता कृतः। कुतः ? श्रेयःफलत्वात् = आत्यंतिककल्याणफलत्वात् इत्यर्थः।

भाष्यम्—ॐ तत् सत् इति ब्रह्मणः भगवतः परमात्मनः निर्देशः। ॐ तत् सत् नाम्ना भगवान् अभिधीयते। किं तेन भवति ? श्रेयोवाप्तिः इति समाधिः। तत्र ओंकारोदाहरणपूर्विकाः सर्वाः क्रियाः यज्ञदानतपःप्रधानाः भवितुमर्हन्ति ब्रह्मवादिनाम्। तत् शब्दः अनभिसंधाय फलानि ताः क्रियाः भवन्तु इति अस्य स्मारकः। सत् शब्दः सद्भावस्य, साधुभावस्य मांगलिककर्मणः च द्योतकः। यज्ञादिसत्कर्मनिष्ठासूचकः

भगवदीयकर्मसूचकश्च ज्ञेयः। एवं भगवन्नाम्ना विनियुक्ताः सर्वाः क्रियाः श्रेयःप्रसविन्यः भवन्ति। कर्मणः काचस्य हीरकत्वं संपादयति भगवन्नाम। अनतिवदनीयं च नाम्नः भगवतः माहात्म्यम्। सर्वामंगलघ्नं दुरितघ्नं च श्रेयः प्रेयः दोग्धृ च भगवन्नाम। तस्मात् सर्वेषां कर्मणां श्रेयस्करत्वं चेदपेक्षितं, भवतु तेषां संपर्कः भगवन्नाम्ना सर्वफलप्रदेन इत्यर्थः। तथा च भगवतः वचनानि—

ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥
तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः।
दानक्रियाश्चविविधाः क्रियन्ते मोक्षकांक्षिभिः॥
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते॥ इति॥ ६॥

व्यतिरेकमुखेन श्रद्धायाः माहात्म्यं कथयन् उपसंहरति—

अश्रद्धाफलनिरुपणं श्रद्धोत्कर्षार्थम्॥ ७॥

सूत्रार्थः—अश्रद्धा० = असद्बुद्धेः फलप्रदर्शनं भगवता विहितं कुतः? श्रद्धोत्कर्षार्थम् = श्रद्धायाः उत्कर्षाय इत्यर्थः।

भाष्यम्— अश्रद्धया यत्किमपि क्रियमाणं असदेव भवति न च प्रेत्य न च इह तत् फलति। फलन्नपि नैव सुखदं भवति। तस्मात् श्रद्धया एव सर्वं सत्कर्म कर्तव्यम् इत्यर्थः। तत्रैतदाम्नायते ऋग्वेदे—

"श्रद्धया अग्निः समिध्यते श्रद्धया हूयते हविः
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि" इति। भवति च वचनं भगवतः—

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्॥
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह॥ इति। तस्मात् विजयते श्रद्धा सर्वत्र॥ ७॥

॥ इति श्रद्धात्रयविभागयोगः॥

## ॥ अथ मोक्षसंन्यासयोगः ॥

आत्मज्ञानपूर्वकं भक्तिप्रधानं निष्कामं कर्म यावज्जीवं कर्तव्यतया प्राप्तं कर्तव्यं इत्ययं गीतार्थस्तावद् समाप्तः । संक्षेपेण तस्यार्थस्य पुनरालोचनं तावत् उपसंहारसौष्ठवलाभार्थं, सम्यक् निश्चयार्थं, दाढ्र्येण ग्रहणार्थं च कर्तव्यम् । न हि सम्यक् निश्चयाद्यभावे गीतोऽपि गीतार्थः प्रेरकः स्यात् । अतः संक्षिप्तालोचनं समग्रस्य गीतार्थस्य उचितम् । तदर्थं अन्तिमाध्यायस्य प्रवृत्तिः । तत्र गीतार्थनिर्णये शिरोवेदनाजनकौ संन्यासत्यागशब्दौ निःशंकं प्रतिपित्सुः अर्जुनः पृच्छति आदौ । तस्य रहस्यं प्रकाशयन् आह—

### संन्यासत्यागतत्त्वसंदेहः जिज्ञास्यत्वात् ॥ १ ॥

सूत्रार्थः = संन्यास० = संन्यासतत्त्वे त्यागतत्त्वे च, संदेहः अर्जुनस्य, कुतः ? जिज्ञास्यत्वात् = ज्ञातुं योगत्वात् तयोः इत्यर्थः ।

भाष्यम्—संन्यासस्य त्यागस्य तत्त्वं तावत् जिज्ञास्यं अस्ति । तयोः सम्यक्ज्ञाने सति तयोः एकतरे प्रवर्तमानः सिद्धिं लभेत । यावत् संन्यासस्य अर्थः त्यागस्य च अर्थः सम्यक्तया न ज्ञातो भवेत् तावत् वर्तनं न शुद्ध्यति । वर्तनाशुद्धौ च न फलसिद्धिः । अतः अस्ति जिज्ञास्यत्वं तयोः । जिज्ञासा च संदेहमूला । अतः युज्यते अर्जुनस्य प्रश्नः । तथा हि तस्य पृच्छा—

> संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
> त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ॥ इति ॥ १ ॥

संदेहं अपनयन् निर्णयं च समर्पयन् आह—

### काम्यस्य त्यागः संन्यासः कामनात्यागात् ॥ २ ॥

सूत्रार्थः—काम्यस्य = फलाभिसंधियुक्तस्य कर्मणः त्यागः = न्यासः संन्यासः = संन्यासः इति गीयते कुतः ? कामनात्यागात् = कामनायाः स्वार्थस्य न्यासात् इत्यर्थः

भाष्यम्ः—सम्यक् न्यासो हि संन्यासः । सम्यक्त्वं चात्र फलाभिसंधिशून्यत्वम् स्वार्थाभावापरपर्यायम् । यो हि काम्यं कर्म त्यजति स्वार्थं च संन्यस्यति स संन्यासी इति उच्यते । अस्ति तत्र संन्यासशब्दस्य उद्देश्यभूतः कामनात्यागः । लिंगधारणात् केवलात् न

भवति संन्यासः । यस्तु महाभागः स्वार्थं त्यजति सः संन्यासी भवति । तस्मात् संन्यासे कामनायाः न्यासो वेदितव्यः इत्यर्थः । तथा च भगवतः निर्णयः " काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः " इति ॥ २ ॥

तर्हि कः त्यागः ? आह—

सर्वकर्मफलन्यासः त्यागः, आत्मनः आप्तकामत्वात्, आवापोद्वापरहितत्वात्, वृद्धिह्रासाभावात्, अनपेक्षत्वाच्च ॥ ३ ॥

सूत्रार्थः—सर्वकर्मफलन्यासः = समेषां कर्मणां फलस्यन्यासः त्यागः = त्यागः इति गीयते कुतः असौ फलति ? आत्मनः स्वरूपस्य चेतनस्यात्मनः आनन्दरूपस्य आप्तकामत्वात् = पूर्णत्वात्–समाप्ताभिलाषत्वात् आवापो० = आगमापायरहितत्वात् वृद्धिह्रासाभावात् = कर्मफलेन पुष्टिकृशताभावात् अनपेक्षत्वात् = असंगत्वेन निरपेक्षत्वात् च इत्यर्थः

भाष्यम्—संन्यासात् त्यागो विशिष्यते । संन्यासे केवलं काम्यानां कर्मणामेव त्यागः भवति । त्यागे तु न कर्मणां केषांचिद् अपि त्यागः, अपि तु तेषां समेषां कर्मणां करणपूर्वकफलानां निषेधः । अतः त्यागी सर्वं कर्तव्यं करोति निष्कामभावेन फलं च संन्यस्यति । फलतुषावनद्धं हि कर्मबीजं प्ररोहति, न फलतुषानवनद्धम् । अतः त्यागी न कर्मणः बिभेति । भयजनकं फलमसौ परिजहाति । फलैषणा तु स्वाधीना, न पराधीना । कर्म तु अवशं कर्तव्यम् । तस्य फलं इषितव्यं न वा इति च भवति स्वाधीनम् । अतः भयबीजभूतं फलं एव असौ त्यजति ।

तस्य त्यागिनः इयं फलन्यासकारिणी शक्तिः कुतः आयाति ? सम्यक् ज्ञानाद् इति ब्रूमः । असौ सम्यक् वेत्ति आत्मानं । किं तत् सम्यक् वेदनं ? उच्यते ? जानाति असौ स्वानुभवेन यद् मे आत्मा आप्तकामः अस्ति । अपूर्णकामो हि वाञ्छति । वाञ्छन् च दैन्यं प्रदर्शयति । समाधिसुषुप्ति-मोक्षेषु आत्मनः आप्तकामत्वं व्यज्यते । अतः असौ किमपि न वाञ्छति । अपि जानात्यसौ यत् मे स्वरूपं तावत् आवापोद्वापरहितं अस्ति । न किंचित् तत्र आगच्छति न वा किंचित् ततःगच्छति। आत्मनःआगमापायरहितत्वात् न कर्मफलेन मे किमपि आयाति न वा तस्य त्यागेन किंचिदपि मे छिन्नं भवति । किं चापरम् ? कर्मणां तत्फलेन वा न ज्यायान् भवति कनीयान् वा आत्मा । आत्मनः मे स्वरूपं वृद्धिक्षयरहितम् इत्यपि अयं सम्यक् वेत्ति ।विदन् च फलं जहाति । अपि च आत्मनःनिरपेक्षत्वात् असौ किमपि

कर्मफलं न अपेक्षते। असंगो हि अयं आत्मा न कर्मफलैः संगं अपेक्षते। अतः फलत्यागस्य कापि अलौकिकी शक्तिः। असौ आत्मनः स्वरूपवेदनात् एव तां आत्मसात्करोति। तस्मात् विशिष्यते त्यागी संन्यासिनः इत्यर्थः। तथा च भगवतः वचनम्—

सर्वकर्मफलत्यागं प्राहुः त्यागं विचक्षणा इति। संन्यासं कवयः त्यागं च विचक्षणाः विदुः इत्यर्थः॥ कवेः विचक्षणः विशिष्यते॥ ३॥

ननु नास्ति निर्दोषं कर्म हिंसादिदोषस्य अवर्जनीयत्वात्। अतः प्रक्षालनाद् हि पंकस्य वरं अस्पर्शनं इति न्यायेन कृतं कर्मणा दोषविद्धेन। एवं प्राप्ते स्वनिश्चयं आह—

यज्ञादीनां अत्यागः पावनत्वात् लोकसंग्रहहेतुत्वाच्च॥ ४॥

सूत्रार्थः-यज्ञादिनां = यज्ञदानतपसां अत्यागः = त्यागः न कर्तव्यः कुतः पावनत्वात् = पावित्र्यसाधकत्वात् च = तथा लोकसंग्रहहेतुत्वात्= लोकसंग्रहनिमित्तत्वात् इत्यर्थः।

भाष्यम्—न खलु कर्माणि दोषवन्ति इति त्याज्यानि। निर्दोषस्य वस्तुनः केवलस्य अभावात् ऋते चित्शक्तेः। न खलु शर्करामिश्रिताः तण्डुलकणाः इति निक्षिप्यन्ते। अन्नं च अन्ते अस्ति भूतानि इति त्यज्यते केनापि। न च कर्माणि दोषविद्धानि सन्ति इति त्याज्यानि। यज्ञादीनि कर्माणि तु पावनानि सन्ति। संगत्यागपूर्वकं फलनिरपेक्षं च कर्तव्यानि। कंटकस्तु कण्टकेनैव उद्धर्तव्यः विषं विषेणैव निवर्तनीयं इति न्यायेन कर्मणां दोषविद्धत्वं कर्मणैव पावनेन शमनीयं भवति इत्यर्थः। तस्मात् कार्याणि पावनानि यज्ञादीनि कर्माणि इत्यर्थः। तथा च भगवान् वासुदेवः-

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः॥
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।
यज्ञोदानं तपश्चैव पावनानि मनीषिणाम्॥ इति॥ ४॥

किं चान्यत्—

नियतानामपि दर्शनरोधात्॥ ५॥

सूत्रार्थः-नियतानां अपि=यज्ञादीनां इव नियतानां कर्मणां अपि अत्यागः ज्ञेयः। कुतः ? दर्शनरोधात्=तामसत्वेन जीवनदृष्टिरोधात् इत्यर्थः॥ ५॥

भाष्यम्ः—यथा यज्ञादीनि कर्माणि पावनत्वात् न परित्याज्यानि अपि तु करणरीत्या कार्याणि एवमेव नियतानि कर्माणि शास्त्रेण प्रकृत्या च न हेयानि अपि तु यथाविधि विधेयानि। मोहविद्धो हि नियतानां त्यागः। मोहश्च दर्शनतिरस्कारकः। अतः सत्वसंपन्नेन दृष्टिमता पुरुषेण शास्त्रेण प्रकृत्या च अवश्यकर्तव्यतया विहितानि अवर्जनीयानि कर्माणि कर्तव्यानि इत्यर्थः। तथा च भगवान्—

नियतस्यतु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥ इति ॥ ५ ॥

त्यागस्य भेदान् आह—

त्यागस्य त्रैविध्यं सत्वादिभेदात् ॥ ६ ॥

सूत्रार्थः—त्यागस्य = फलसंगत्यागस्य त्रैविध्यं = त्रिविधत्वं कुतः? सत्त्वादिभेदात् = सत्त्वरजस्तमोभेदात् इत्यर्थः।

भाष्यम्—गुणानां त्रिविधत्वात् तत् तत् गुणप्रधानस्य पुरुषस्य त्यागोऽपि तत तत् गुणप्रधानो भवति। तथा च सत्त्वादिभेदात् त्यागस्यापि सात्त्विकस्त्यागः राजसस्त्यागः तामसस्त्यागः इति भेदाः भवन्ति। उक्तं च तेषां लक्षणं भगवतैव। तथा हि

नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः॥

दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्॥

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन।
संगं त्यक्त्वा फलं चैव स त्यागः सात्विको मतः॥ इति ॥६॥

अथ फलत्यागः एव त्यागः इति दृढयन् आह—

फलत्यागस्य शक्यत्वात् कर्मणः च अशक्यत्वात् फलत्यागः ॥ ७ ॥

सूत्रार्थः—फलत्यागस्य = फलानां हानस्य शक्यत्वात् = संभाव्यत्वात् कर्मणः = स्वरूपतः कर्मणः त्यागस्य च = तथा अशक्यत्वात् = असंभाव्यत्वात् फलत्यागः एव = फलानां त्यागः एव त्यागः वास्तवः न कर्मणां इत्यर्थः।

भाष्यम्—शक्यं हि क्रियते न अशक्यं। गृहनिर्माणं हि शक्य हिमालयस्य निर्माणं तु अशक्यं मनुष्यस्य। अतः शक्यं हि क्रियमाणं शोभते। फलानां त्यागः शक्यः। अशक्यश्च कर्मणां त्यागः। अतः कर्मत्यागे मा मतिं कृथा इत्यर्थः। असकृत् प्रपंचितश्च अयमर्थः न पुनरुच्यते। तथा च भगवान्

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते॥
अनिष्टं इष्टं मिश्रं च त्रिविधं कर्मणः फलम्।
भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्॥ इति ॥ ७॥

अथ आत्मनः असंगत्वं प्रतिपादयन् कर्तृत्वादिनिषेधभूमिकां रचयन्नाह—

असंगः पुरुषः केवलत्वात् अहंभावाभावाच्च ॥ ८ ॥

सूत्रार्थः असंगः = विकाररहितः पुरुषः = आत्मा, कुतः केवल त्वात् = एकलत्वात् असंकीर्णत्वात् च = तथा अहंभावाभावात् = अहं-भावस्य आत्मनः स्वरूपे अविद्यमानत्वात् इत्यर्थः।

भाष्यम्—कर्ममात्रस्य साधकं तावत् अधिष्ठानादि कारणपंचकं विद्यते। मिलितानां कर्तृत्वे सति आत्मनः कर्मसंबंधः एकलस्य न न्यायी वर्तते। केवलत्वाच्च आत्मनः न तस्य स्वप्नेऽपि संगः कल्पयितुं शक्यते। अहंभावो हि तस्य दुःसंगात् दृश्यते समाध्याद्यवस्थासु अन-नुभूतत्वात् आत्मनः च केवलस्य तत्रापि सत्वेन अनुभूयमानत्वात् इत्यर्थः। अतः असंगः एव अयं पुरुषः स्वरूपेण, लोहप्रविष्टः इव हुताशः दुःसंगात् मुद्गरैः संसारदुःखावहैः कर्माभिःअभिहन्यते इत्यर्थः ॥ ८ ॥

फलितं आह—

अतः एव कर्तृत्वभोक्तृत्वाद्यभावः ॥ ९ ॥

सूत्रार्थः— अतः एव = यतः आत्मा स्वरूपेण असंगः अहंभाव शून्यः च ततः एव तस्य कर्तृत्वभोक्तृत्वाद्यभावः = कर्तृत्वस्य तत्परिणा-मभूतस्य भोक्तृत्वस्य च अभावः विज्ञेयः इत्यर्थः।

भाष्यम्ः—असंगत्वात् अहंभावविरहितत्वाच्च न आत्मनः असंकीर्णस्य प्रकृत्या कर्तृत्वादिकं उपपद्यते। कर्तृत्वं च भोक्तृत्वं आवहति। कर्ता सन् भोक्ता भवत्येव। कर्तुः भोगस्य अवर्जनीयत्वात्। अयं तु न कर्ता अतः एव न भोक्ता अतः एव प्रपंचास्पृष्टः शुद्धबुद्धमुक्तस्वभावः। वर्णितं चैतत् सर्वं भगवता परमपुरुषेण—

पञ्चैतानि महाबाहो कारणानि निबोध मे।
सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम्॥
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः
न्याय्यं वा विपरीतं या पञ्चैते तस्य हेतवः॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते॥ इति ॥ ८ ॥

अथ सर्वेषां कर्मणां प्रवर्तकं आश्रयं च ज्ञानादिकं अवान्तरभेदैः सहितं संक्षेपेण कथयन्नाह—

## ज्ञानादिसुखान्तानां त्रैविध्यं गुणभेदात् ॥ ९ ॥

सूत्रार्थः—ज्ञानादि० = ज्ञानमारभ्य सुखान्तानां पदार्थानां त्रिविधत्वं ज्ञेयम्। कुतः ? गुणभेदात् = गुणानां सत्वादीनां भेदात् इत्यर्थः।

भाष्यम्—ज्ञान-कर्म-कर्तृ-बुद्धि-धृति-सुखानां तावत् सर्वेषां कर्मणां प्रवर्तकाश्रयभूतानां त्रिविधत्वं भगवता प्रतिपादितम्। तत् त्रिविधत्वं गुणमूलं विज्ञेयम्। गुणभेदात् भिद्यन्ते ज्ञानादयः सुखान्ताः। भेदविज्ञानं च सात्विकानां तेषां उपादानार्थं राजसतामसानां च वर्जनार्थं ज्ञेयम्। सात्विकोपादानात् सत्त्वशुद्धेः मोक्षं लभते। तथा च भगवतः परमदार्शनिकस्य वचांसि मननीयानि—

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः॥

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥
यथा धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥

अधर्मं धर्ममिति या मन्यते तमसावृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥
धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च ।
न विमुञ्चति दुर्मेधाधृतिः सा पार्थ तामसी ॥

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ।
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥
नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥
अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥

मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥

यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिःस्यात्त्रिभिर्गुणैः ॥ इति ॥ ९ ॥

ननु ब्राह्मणादि प्रकृतिख्यापनं अनुचितं उच्चावचभावप्रचारकत्वात् । न च ब्राह्मणादिशब्दाः जातिवाचकाः अपि तु गुणवाचकाः " सर्वे एते शब्दाः गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियः वैश्यः शूद्रः इति महाभाष्यकृद् वचनात् । समादधन् आह—

### ब्राह्मणादिप्रकृतिनिर्देशः न उच्चावचभावप्रस्थापनार्थः सिद्धान्तहानेः ॥ १० ॥

सूत्रार्थः—ब्राह्मणादि० = ब्राह्मणक्षत्रियादिवर्णानां प्रकृतेः व्यपदेशः न उच्चावचभावप्रस्थापनार्थः = न उत्तमाधमभावस्थापनार्थः । कुतः ? सिद्धान्तहानेः = गीतायाः सिद्धान्तस्य हानेः परित्यागात् इत्यर्थः ।

भाष्यम्:—सत्यम् । ब्राह्मणत्वादिप्रकृतिकर्मणां वर्णनं न उच्चावचभावप्रस्थापनार्थं गीतासु वर्तते । गुणेभ्यः कर्मभ्यः च पतितो ब्राह्मणोऽपि जात्या,भवति चांडालः कर्मणा । चांडालोऽपि गुणाधानात् भवति ब्राह्मणः ।

अतः ब्राह्मणत्वादिजात्यभिमानं अत्र नैवोद्दिष्टं भगवतः। एवं सति गीतायाः सिद्धान्तस्य यथाकर्म यथाश्रुतं भवति जीवः इत्यात्मकस्य हानिः भवेत्। न च सा इष्टा। न किमपि जातौ निहितं अस्ति। गुणे च तत्प्रेरिते कर्मणि च सामर्थ्यं अस्ति उच्चावचगतिदानस्य। अतः नायं अशिष्टः अर्थः अत्र बोध्यः। कस्तर्हि आशयः ब्राह्मणो वा क्षत्रियो वा यो वा को वा भवतु तिष्ठतु सः स्वीये वर्णे। करोतु च सर्वं कर्म स्ववर्णाश्रमोचितं कर्तव्यतया प्राप्तम्। यावत् तत् कर्म परमात्मनः पूजारूपं न भवति तावत् सत्कर्मापि सत् तत् नैव वास्तवाय लाभाय भवति। अतः वर्णे वा कर्मणि वा न किमपि महत्त्वम्। आत्मीयं कर्म भगवदीयं अस्ति न वा अस्ति इति एतत् मुख्यम्। ब्राह्मणकर्मापि चेत् न प्रभोः पूजारूपं भवति भवति तत् शल्यं तुल्यम्, दुःखदायकं अतः न वर्णात् वर्णान्तरगमनं न वा स्वकर्मणः त्यागपूर्वकं परकर्मणः स्वीकरणं सिद्धिदम्। सिद्धिदं तु भवति तत् प्रभोः अर्चनेन। अतः मास्तु वर्णाश्रमाणां कर्मणां च विवादः सर्वे तावत् स्वे स्वे स्थाने स्थित्वा स्वं स्वं कर्म यथाविधि निर्वर्तयन्तः पूजयन्तु तैः कर्मभिः परमात्मानम् इति अयं मुख्यः सिद्धान्तः। यत् कर्म हरितोषणं तत् कर्म, इतरत् तु विकर्म, सदपि इति संक्षेपः। तथा च विचक्षणस्य भगवतः वचनानि—

ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम्।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तत् शृणु॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ इति ॥ १०॥

वर्णान्तरगमनं, अहमहमिका च परकर्मणः करणे स्वकर्मणः तिरस्कारपूर्विका, न श्रेयोमार्गः। श्रेयो हि प्राप्तव्यम्। तस्य तु अन्यः एव अध्वा। तमध्वानं निदर्शयन् आह—

## आत्मपूजकं कर्म नैष्कर्म्यहेतुत्वात् ॥ ११ ॥

सूत्रार्थः—आत्मपूजकं = आत्मनः परमात्मनः अर्चकं कर्म स्यात् कुतः नैष्कर्म्यहेतुत्वात् = तथाविधं कर्म निष्कर्मतायाः हेतुः भवति तस्माद् इत्यर्थः ।

भाष्यम्—यावद् हरिचरणार्चनं न भवति कर्मणा यावच्च जगतां अधीश्वरः सर्वभूतात्मभूतात्मा कर्मणा न प्रसीदति तावत् श्रेयः नैव भवितुमर्हति । तस्मात् कर्ममात्रं प्रभुपूजापुष्पं भवेत् । ततः प्रसन्नता परमात्मनः । प्रसन्नश्च परमात्मा तस्य स्वात्मार्चकस्य श्रेयः विदधाति । श्रेयश्च नैष्कर्म्यस्य प्राप्तिः । नैष्कर्म्यं च पूर्वं तावत् व्याख्यातम् । अतः नैष्कर्म्यस्य श्रेयोपरपर्यायस्य हेतुत्वात् सर्वं कर्म आत्मपूजकं भवतु इत्यर्थः । तथा च भगवतः वाक्यं—

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ इति ॥ ११ ॥

ननु तादृशस्य नैष्कर्म्यस्य लाभः कथं भवेत् ? आह—

## नैष्कर्म्यलाभः साधनयोगात् ॥ १२ ॥

सूत्रार्थः—नैष्कर्म्यलाभः = नैष्कर्म्यस्य – अकर्मत्वस्य लाभः साधनयोगात् = साधनानां संपत्तेर्भवति इत्यर्थः ।

भाष्यम्—नैष्कर्मस्य सिद्धिः तावत् न अलसानां स्थितिः । न वा जडानां अवस्था । न खलु अतितेजसि अतितमसि च पदार्थो न दृश्यते इति अतितेजस्तिमिरयोः एकरूपत्वं भवति वा अविशेषो वा भवति । कर्मणः सत्वेऽपि तत्र नैष्कर्म्यं तस्य अकर्मत्वं भवति । सा च स्थितिः साधनैः साध्या । साधनानां च उल्लेखः भगवता एव क्रियते । तथा च ते श्लोकाः—

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममःशान्तो ब्रह्मभूयाय कल्पते ॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ इति ॥ १२ ॥

मद्भक्तिं लभते पराम् इत्युक्तम् । ज्ञानस्येव पराकाष्ठाभक्तिः भक्तेः च पराकाष्ठा ज्ञानम् । एवं तयोः वास्तविकं ऐक्यं सद् अपि प्रकृतं तयोः अन्योन्योपकारकत्वं ब्रुवन्नाह:—

## ज्ञानभक्त्योः इतरेतरपोषकत्वं अनुभवात् ॥ १३ ॥

सूत्रार्थः—ज्ञान० = ज्ञानस्य भक्तेः च इतरे० = परस्परपुष्टिजनकत्वं कुतः ? अनुभवात् = अनुभूतेः इत्यर्थः

भाष्यम्—न खलु ज्ञानभक्त्योः भेदः अस्ति मनागपि । ज्ञान एवं परमगोचरं महिमामयं भक्तिः द्रवीभूतं सत् चारुतरवर्तनरूपम् । भक्तिः एव परमविषया घनीभूता ज्ञानम् सर्वत्रात्मदर्शकम् । ज्ञानेन भक्तिः भक्त्या च ज्ञानं परिपुष्यते । तयोः परिपोषः अन्योन्यस्य हितावहः । तदेतत् अनुभवदशायां एव विज्ञायते । अतः अनुभवः एव हि अत्र गुरुः । तथा च भगवतः गूढं दर्शनं ।

" भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् " इति ॥ १३ ॥

## तल्लाभः प्रपत्तेः साधनत्वात् ॥ १४ ॥

सूत्रार्थः—तल्लाभः= तयोः ज्ञानभक्त्योः= प्राप्तिः प्रपत्तेः = शरणागतेः भवति कुतः साधनत्वात् = उपायभूतत्वात् इत्यर्थः ।

भाष्यम्—भगवत् शरणगमनं हि ज्ञानस्य भक्तेः च लाभे परमं कारणम् । यो हि अहंकारं हित्वा, सर्वाणि कर्माणि कुर्वन्, समर्पयन् च भगवच्चरणयोः ईश्वरं एव शरणं जानन् गच्छति तच्चरणशरणं स

एव भगवतः प्रसादात् ज्ञानं च भक्तिं च परां शांतिं च स्थानं च शाश्वतं लभते। न इतरः इत्यर्थः। तथा च भगवतः वचनानि—

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः।
मद् प्रसादादवाप्नोति शाश्वतं पदमव्ययम्॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः॥
बुद्धियोगमुपाश्रित्य मच्चितः सततं भव।
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि॥
अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि।
यदहंकारमाश्रित्य न योत्स्य इति मन्यसे॥
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति।
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा॥
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत्॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥
तमेव शरणं गच्छ सर्वभावेन भारत।

तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥इति१४॥

भगवत्प्रपत्तिरेव गुह्यतमं कर्मयोगज्ञानं इति द्रढयन् आह—

## तत् हि परमरहस्यं हिततमत्वात् जीवप्रियतमत्वाद् ईशस्य च ॥१५॥

सूत्रार्थः—तत् = शरणगमनपूर्वकं हि= एव परमरहस्यं= गूढतमम्, कर्मयोगांगभूतस्यज्ञानस्य श्रेष्ठः सारः। कुतः ? हिततमत्वात् = कल्याणतमत्वात् च = तथा ईशस्य = भगवतः परमेश्वरस्य जीवप्रियतमत्वात् = आत्मेष्टतमत्वात् इत्यर्थः।

भाष्यम्ः—भगवतः सर्वभावेन प्रपत्तिः एव सर्वज्ञानस्य गुह्यतमस्य कर्मयोगांगस्य श्रेष्ठः रसः। कुतः ? भगवता एव तस्य हिततमत्वेन शंसनात्। अपि च सर्वे एव जीवाः भगवतः अतिप्रिया सन्ति। तेष प्रियतमानां जीवानां हिततमं ब्रुवन् भगवान् प्रपत्तिं श्रेष्ठां मनुते। अतः प्रपत्तिरेव रहस्यम्। तथा च निखिलजीववत्सलस्य भगवतः सर्वगुह्यतमं परमं वचः हिततमं—

मन्मनाः भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यः मोक्षयिष्यामि मा शुचः इति ॥

अतः शरणत्वेन प्राप्तान् सर्वान् विधिनिषेधरूपान् धर्मान् शरणत्वेन अनादृत्य-एभिः कर्मभिः धर्मभिः मम श्रेयो भविष्यति अश्रेयो वा भविष्यति इति इमां शरणबुद्धिं परिहाय, तन्मना तद्भक्तः तद्याजी तत्प्रणामी सन् तस्यैव शरणं गृहीत्वा कुर्वन् सर्वाणि कर्माणि निर्ममो निरहंकार सन् वर्तते इत्यर्थः ॥ १५ ॥

शरणागतेः रहस्यं विशदयन् आह—

## शोकाभावः आत्मज्ञानात् श्रुतेः ॥ १६ ॥

सूत्रार्थः—शोकाभावः = संतापाभावः आत्मज्ञानात् = ईश्वरदत्तात्मवेदनात् भवति । श्रुतेः = श्रुतिवचनाद् इत्यर्थः ।

भाष्यम्—'तरति शोकं आत्मविद्' इति हि श्रुतिवचनम् । आत्मनः वेदनं च ईश्वरानुकंपयैव भवति । तस्यानुकंपा च प्रपत्यायत्ता । अतः प्रपद्यमानः पुरुषः परमात्मनः कृपया आत्मज्ञानं लभते । ततः च तस्य शोकस्य आत्यन्तिकी निवृत्तिः भवति । भगवान् एव एवं शुचः मोचयिता । तस्मात् ईयात् भगवच्छरणं सर्वभावेन इत्यर्थः । मोक्षयिष्यामि मा शुचः इति हि भगवद् वचनम् इत्यर्थः ॥ १६ ॥

समाप्तं गीताशास्त्रं । अथ तस्य संप्रदायविधेः रहस्यं कथयन्नाह-

## अधिकारनिर्देशः तद्विहीनानां अनुपकारकत्वात् ॥ १७ ॥

सूत्रार्थः—अधिकार० = अधिकारस्य व्यपदेशः कृतः भगवता कुतः ? तद्विहीनानां = अधिकारशून्यानां अनुपकारकत्वात् = उपकाराकर्तृत्वात् इत्यर्थः ।

भाष्यम्-आत्मविद्या हि अधिकारं अपेक्षते । स च विवेकादिलक्षणः । यस्य नासौ विद्यते दत्ता अपि तस्मै ब्रह्मविद्या न फलति । प्रत्युत तस्याहितं कुरुतेऽपि । तथा च भगवतः वचनम्—

इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥
य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ इति॥१७॥

अथ भगवत्प्रश्नस्य रहस्यं स्पष्टयन्नाह—

## शिष्यज्ञानपरीक्षार्थं भगवत्प्रश्नः श्रवणविधिप्रदर्शनार्थं च ॥ १८ ॥

सूत्रार्थः—भगवत्प्रश्नः = भगवता कृतः प्रश्नः शिष्य०= अन्तेवासिनः ज्ञानाज्ञानयोः ग्रहणार्थं विज्ञेयः च = तथा श्रवण० = श्रवणस्य यो विधिः तस्य प्रदर्शनार्थं सः ज्ञेयः इत्यर्थः

भाष्यम्:—“ कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा । कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनंजय ! ” इति अयं भगवतः प्रश्नः तावत् अर्जुनेन आत्मानुशासनं शिवतमं गृहीतं न वा गृहीतं इति परीक्षार्थं ज्ञेयः । श्रुतं चेत् सम्यक्, अज्ञानसंम्मोहस्य नाशः ध्रुवं भविष्यति । न श्रुतं चेत् सम्यक् मोहः तदवस्थः स्थास्यति । अपि च प्रश्ने श्रवणविधेः अपि प्रदर्शनं विज्ञेयम् । एकाग्रेण चेतसा श्रवणं विधेयं न भ्रमता व्यग्रेण इति हि श्रवणविधिः इत्यर्थः ॥ १८ ॥

अथार्जुनप्रतिवचनस्य किं रहस्यं ? दर्शयन् आह—

## फलनिर्देशात् प्रतिवचनं माहात्म्यसूचकम् ॥ १९ ॥

सूत्रार्थ :—फलनिर्देशात् = आत्मज्ञानस्य यत् फलं तस्य निर्वचनात् प्रतिवचनं = अर्जुनस्य प्रतिभाषणं माहात्म्यसूचकं = गीताशास्त्रस्य महत्तायाः व्यंजकं ज्ञेयं इत्यर्थः ।

भाष्यम् :—आत्मज्ञानस्य फलं तावत् मोहस्य नाशः सम्यक्ज्ञान-गोचरायाः स्मृतेः लाभः संदेहस्य निवृत्तिः, भगवदाज्ञानुसरणं, भगवत्प्रसादादेव तल्लब्धिः इति स्वीकारः सहृदयः। तस्य एतस्य संपूर्णस्य फलस्य निर्देशः प्रतिवचने अर्जुनस्य दृष्टः। अतः फलनिर्वचनपरं अर्जुनस्य प्रतिवचनं गीताशास्त्रस्य माहात्म्यस्यापि द्योतकं वेदितव्यम्। नाशयति मोहं, जनयति स्मृतिं, प्रसादाभिमुखं करोति परमात्मानं, संदेहं क्षीणोति, अत्मावस्थितिं प्रापयति भगवदुक्तं परमप्रेम्णा अनुकारयति गीताशास्त्रं शोकमोहसंतप्तिशामकं इत्यर्थः। तथा हि अर्जुन वचनं—

नष्टो माहेः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत !
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ इति ॥ १९ ॥

उपसंहरन्नाह

जयपराजययोः निर्णयमुखेनोपसंहारः ॥ २० ॥

सूत्रार्थः—जय० = उत्कर्षअपकर्षयोः निर्णयमुखेन निश्चयद्वारेण उपसंहारः = गीताशास्त्रस्य उपसंहरणं—समाप्तिमांगल्यं कृतं इत्यर्थः।

भाष्यम्—परिसमाप्तं भगवदुक्तं गीताशास्त्रम्। कथासंबंध—प्रदर्शनार्थं संजयस्य कतिपयाः उक्तयः दृश्यन्ते। अन्ते च संजयः धृतराष्ट्रं जयपराजयविषयं आत्मनिर्णयं ब्रवीति। अनेन निर्णयेन धर्माज्जयः अधर्माच्च पराजयः इति सूचितं भवति। तथा च उपसंहार-श्लोकः—

यत्र योगेश्वरः कृष्णः यत्र पार्थो धनुर्धरः !
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ इति ॥ २० ॥

॥ इति संन्यासमोक्षयोगः ॥

## ॥ अथोपसंहाराध्यायः ॥

अथ भगवत्याः गीतादेव्याः उपसंहाराध्यायः प्रस्तूयते। गीतोक्तार्थस्य दृढीकरणाय, समस्तस्य शास्त्रस्य सारोद्धाराय च। तस्येदं आदिमं सूत्रं गीतायाः उपनिषत्वसाधकं—

गीतोपनिषद् मोहमारकत्वात् ॥ १ ॥

सूत्रार्थः—गीता = भगवती गीता उपनिषत् = आत्मविद्या ज्ञेया कुतः ? मोहमारकत्वात् = विपर्ययस्य नाशकत्वात् इत्यर्थः ।

भाष्यम्—गीता उपनिषद् विद्या एव ज्ञेया । उपनिषद् गीतायाश्च प्रयोजनैक्यात् । यत् प्रयोजना उपनिषत् विद्या तत्प्रयोजना एव इयं भगवती गीता । आत्मविद्याप्रदानेन अविद्यायाः मोहरूपायाः निकन्दनं हि उपनिषदां प्रयोजनम् । अत्रापि तदेव दृष्टत्वात् गीतायाः उपनिषत्वं निश्चेयम् इत्यर्थः ॥ १ ॥

ननु शोकप्रभवा गीता । शोकश्च किं मूलः ? आह—

शोकः मोहात् ॥ २ ॥

सूत्रार्थः—शोकः = प्रियवियोगजन्यः आंतरः संतापः मोहात् = अविवेकात् भवति इत्यर्थः ।

भाष्यम्—शोको हि संतापः । स च प्रियवियोगजन्मा । शोकः च असौ मोहादेव प्रभवति । विना मोहं शोकस्य किमपि कारणं नास्ति । आत्मानात्मनोः तत्वतः भिन्नयोः पारस्परिकः अध्यासः मोहजन्यः एव । आत्मा सर्वस्य स्वरूपं । स च आनन्दरूपः । स्वस्य स्वेन वियोगः अशक्यः । अतः आत्मनः आत्मना सदैव योगात् तस्य च सुखरूपत्वात् शोकस्यावसरः एव नास्ति । देहादीनां सदातनः संयोगः एव न शक्यः । विनाशस्वाभाव्यात् । अतः अस्वरूपस्य तस्य वियोगशोकः तावत् नितरां अनुपपन्नः । तथापि चेत् शोकः अस्ति एव तर्हि सः मोहप्रभवः एवास्ति । तस्मात् मोहात् शोकोत्पत्तिः ॥ २ ॥

ननु शोकस्य निवृत्तिः कथं भवति ? आह—

मोहविच्छित्तिः आत्मज्ञानात् श्रुतेः ॥ ३ ॥

सूत्रार्थः—मोहविच्छित्तिः = अविवेकस्य कृन्तनं आत्मज्ञानात् = आत्मनः वेदनाद् भवति श्रुतेः = श्रुतिवचनात् इत्यर्थः ।

भाष्यम्—मोहस्य नाशः आत्मज्ञानेन एव भवति । न हि आत्मज्ञानं हित्वा तस्य विच्छित्तये उपायान्तरः विद्यते । तथा च श्रुतिवचनम्

" तमेव विदित्वा अतिमृत्युमेति नान्यः पंथाः विद्यते अयनाय " इति ।
इतराणि अपि औपनिषद्वाक्यानि स्वयमेव अनुसंन्धेयानि विस्तर-
भयाद् अत्र अनवतीर्णानि इत्यर्थः ॥ ३ ॥

ननु आत्मनः ज्ञानं कथं भवति ? आह—

आत्मदर्शनयोग्यता योगात् ॥ ४ ॥

सूत्रार्थः– आत्मदर्शनयोग्यता = आत्मनः स्वरूपस्य सूक्ष्मतमस्य
दर्शनाय अर्हणता योगात् = समाधिलक्षणात् योगात् भवति इत्यर्थः

भाष्यम्—आत्मना एव आत्मनः आत्मने दर्शनं भवति । तदर्थं
योग्यता च योगादायाति । योगश्च समाधिसंज्ञकः अत्र विज्ञेयः । सर्वेषु
योगेषु प्रोतत्वात् समेषां इतरेषां योगानां आधारभूतत्वाच्च । तस्मात्
योगाद् आत्मदर्शनयोग्यता भवति इत्यर्थः ॥ ४ ॥

ननु गीतायां योगशब्दः बह्वर्थः । कथं समाध्यर्थः योगः एव योगः
योगशब्देन उच्यते ? आह—

एकत्वेऽपि वैविध्यं रुचिभेदात् प्रकृति वैचित्र्यात्
दृष्टिभूमिकाभेदाच्च ॥ ५ ॥

सूत्रार्थः—एकत्वे = योगस्य एकत्वे-एकरूपत्वे अपि वैविध्यं =
विविधता ज्ञेया, कुतः ? रुचिभेदात् = रुचेः प्रतिपुरुषं भेदात् ।
प्रकृति० = स्वभावस्य विचित्रत्वात् च = तथा दृष्टि० = दृष्टेः अवस्थायाः
च विशेषात् इत्यर्थः ।

भाष्यम्:—एकः एवास्ति योगः, तत्त्वस्य सर्वेषु गीतोक्तेषु योगेषु
समानत्वात् । तथापि अयं ज्ञानयोगः अयं भक्तियोगः अयं कर्मयोगः
इत्यात्मको भेदः तु रुच्यादीनां भेदात् भवति । सर्वेषु च एषु योगेषु
समाध्यपरपर्यायो सात्त्विकचित्तैकाग्र्यलक्षणः योगः आकाशः इव भूतेषु
प्रसृतो वेदितव्यः । तस्य भावे भावात् अभावे च अभावात् इत्यर्थः ।
अतः योगस्तु एक एव । प्रतिजनं रुचिः भिद्यते इति तु प्रसिद्धम् ।
अतः बुद्धिप्रधानः ज्ञानयोगी भवति, हृदयप्रधानो भक्तः, विवेककाष्ठां
आरूढश्च भगवान् कर्मयोगी भवति । न रुचिभेदात् तत्त्वभेदः तर्क्यः ।
अपि च अस्ति जनेषु स्वभावस्य वैचित्र्यम् त्रिगुणोपमर्दभवम् । न च

स्वभावः पर्यनुयोज्यः । किं च ? दर्शनस्य भेदोऽपि योगभेदको भवति । अवस्थाभेदोऽपि तथैव भेदकारकः भवति । तस्मात् न विवदितव्यम् अतिमात्रं योगार्थे प्राज्ञेन अनुभूतिपरायणेन । न खलु त्रिकोणाकृतौ एकस्यापि कोणस्य अभावः तस्य संसाधको भवति । तस्मात् योगस्य एकत्वेऽपि वैविध्यं खलु शोभाप्रदम् इत्यर्थः ॥ ५ ॥

कस्तर्हि गीतायाः अन्तिमः निर्णयः हार्दभूतः ? आह—

## आत्मज्ञानमूलकः भक्तिप्रधानः निष्कामकर्मयोगः निष्कर्षात् ॥ ६ ॥

सूत्रार्थ :—आत्मज्ञानमूलकः = आत्मज्ञाननिमित्तकः भक्तिप्रधानः = प्रेममुख्यः निष्कामकर्मयोगः = निष्कामभावेन कृतः स्वकर्तव्यकरणरूपः योगः गीतायाः हार्दभूतः विज्ञेयः कुतः ? निष्कर्षात् = समग्रस्य गीताशास्त्रस्य निष्कर्षभूतत्वात् इत्यर्थः ।

भाष्यम् :—आत्मज्ञानपूर्वकः भक्तिभावार्द्रः फलाभिसंधिशून्यः कर्मयोगः गीतायाः भगवत्याः हार्दम् । मनुष्यो हि मस्तकसंपन्नः हृदयसंपन्न करपादसंपन्नश्च अस्ति । शिरसः ज्ञानयोगः हृदयात् भक्तियोगः कराभ्यां च कर्मयोगः निःसरति शिरोहृदयकरपादादीनां च नैव दृष्टः परस्परः विरोधः प्रत्युत अस्ति अविरोधः जीवनक्रियासाधकः । अतः अपि निश्चीयते यत् आत्मज्ञानपूर्वकः भक्तिस्नातः कर्मयोगः एव गीतासारः इति ॥ ६ ॥

ननु आत्मनः ज्ञानादूर्ध्वं कर्मणः प्रयोजनाभावात् अकरणं त्यागो वा एव आयाति न तेषां करणम् । अतः कर्मसंन्यासः एव स्वाभाविकतरः इति निरस्यन् आह—

## ऊर्ध्वमपि कर्मयोगः साहजिकत्वात् सृष्टिरहस्यत्वाच्च ॥ ७ ॥

सूत्रार्थः—ऊर्ध्वमपि = आत्मनः ज्ञानात् यथा पूर्वं तथा ऊर्ध्वं अपि कर्मयोगः = कर्मयोगः एव स्वाभाविकतरः न कर्मसंन्यासः कुतः ? साहजिकत्वात् = स्वाभाविकत्वात् च = तथा सृष्टिरहस्यत्वात् = सृष्टेः एकान्ततत्वात् इत्यर्थः ।

भाष्यम्—सत्यम् । आत्मनः ज्ञानादूर्ध्वं न स्वार्थः वर्तते । अतः कर्मणः आत्मीयं किमपि प्रयोजनं नास्ति । तथापि करणीयं कर्म ।

कर्मकरणं एव स्वाभाविकं वर्तते। निष्क्रियतायाः प्रकृतिक्षेत्रे असंभवात्। न हि बलात्कारेण कर्मकरणं निरुध्यते प्रकृतिपरवशत्वात् देहिनाम्। अतः आत्मज्ञानिना अपि प्रकृत्या संवादो विधेयः न विसंवादः। विसंवादकरणात् च नासौ प्राज्ञत्वं व्यनक्ति। किं च ? कर्मयोगः सृष्टेः रहस्यं वर्तते। सर्वा हि सृष्टिः परोपकारपरायणा एव वर्तते। स्वार्थे च मनुष्यः एव एकः निमग्नः। जडा अपि सृष्टिः चेत् परोपकाराय वर्तते किमु वक्तव्यं चेतनस्य मनुष्यस्य विवेकवतः। तस्मात् आत्मज्ञानिना तु अवश्यं कर्मयोगः एव आस्थेयः इत्यर्थः। अत्रत्यः विस्तरस्तु असकृत् अवोचाम। अतः कर्मयोगः एव श्रेयान् इत्यर्थः ॥ ७ ॥

फलितं आह—

सेवायां विनियोगः सर्वस्वस्य शेषसृष्टिवत् ॥ ८ ॥

सूत्रार्थः—आत्मज्ञानिना सेवायां = विश्वरूपस्य परमात्मनः सपर्यायां विनियोगः = उपयोगः सर्वस्वस्य = सर्वस्य स्वस्य देहादिनिखिलस्य पदार्थस्य कर्तव्यः शेषसृष्टिवत् = अवशिष्टसृष्टिवत् इत्यर्थः।

भाष्यम्—यो हि आत्मनः द्रष्टा भवति तेन सर्वं स्वं देहादि निखिलं उपकरणं स्वरूपभूतस्य विश्वस्य परमात्मनः सेवायां विनियोज्यम्। स्तेयस्य प्रायश्चित्तभूता सेवा स्वाभाविकी भवति ज्ञानिनः। यथा शेषसृष्टिः सेवापरायणा एव दृश्यते एवमेव मनुष्येणापि ज्ञानिना भवितव्यम् इत्यर्थः ॥ ८ ॥

सेवायाः फलमाह—

ततः आत्मनिष्ठा ॥ ९ ॥

सूत्रार्थः— ततः = ज्ञानपूर्विकायाः स्तेयप्रायश्चित्तभूतायाः सेवायाः आत्मनिष्ठा = आत्मनि स्वरूपे अवस्थितिः भवति इत्यर्थः।

भाष्यम्—सेवापरायणो आत्मनिष्ठो भवति। स्वरूपावस्थितिः च अभिलषणीया। सा च सेवालभ्या। सेवया प्रसन्नो भगवान् सेवकाय आत्मनिष्ठां ददाति। आत्मनिष्ठा हि सेवायाः पारितोषिकं इत्यर्थः ॥ ९ ॥

उपसंहरन् निखिलमपि शास्त्रं आह—

प्राप्तिः त्यागात् प्राप्तिः त्यागादिति ॥ १० ॥

सूत्रार्थः—वीप्सा शास्त्रसमाप्तिद्योतिका । प्राप्तिः = आत्मनः परमात्मरूपेण प्राप्तिः त्यागात् = आत्मनः देहादिबुद्ध्यन्तस्य अनासक्तभावेन विश्वरूपस्य परमेश्वरस्य सेवायां समर्पणात् भवति इत्यर्थः ।

भाष्यम्ः—त्यागो हि प्राप्तिमन्त्रः । त्यागश्च अनासक्तिरूपः । स च देहादिबुद्ध्यन्तस्य स्वरूपभूते आत्मनि अनध्यासरूपः आत्मनः सम्यक्ज्ञानात् तत्र च अवस्थानात् जायते। यो हि त्यजति आत्मानं प्राप्नोति स आत्मानं सच्चिदानन्दरूपम् । आत्मनः प्राप्तिः तु काष्ठा प्राप्तेः । "पुरुषात् न परं किंचित् सा काष्ठा सा परागतिः" इति श्रुतेः । तस्मात् त्यागो हि अनासक्तिरूपः कर्मयोगापरपर्यायः गीतादेव्याः अविस्मरणीयः सनातनः ध्वनिः इति शम् ॥ १० ॥

॥ इति उपसंहाराध्यायः ॥

॥ हरिः ॐ तत् सत् ॥

गीतार्थो हरिणा गीतः स्वात्मबुद्धिप्रसादनः ।
तिष्ठतु हृदये नित्यं प्रार्थये नन्दनन्दनम् ॥
प्रसादात् देवदेवस्य यावच्चन्द्रदिवाकरौ ।
भाष्यं तिष्ठतु मेदिन्यां मुक्तसंगमनोरमम् ॥
पठन्तु साधवः सर्वे पठन्तु गृहमेधिनः ।
पठन्तु बटवः सर्वे भवन्तु कर्मयोगिनः ॥

॥ इति श्रीमन्निखिलशास्त्रनिष्णात परमहंस परिव्राजकाचार्य हरिप्रसाद-वैदिकमुनिशिष्य भट्टोपनामक मणिशंकरात्मज नलिनशर्मणा कृतं गीतादर्शनं सभाष्यम् ॥ ॥ हरिः ॐ तत्सत् ॥

## ગીતાદર્શન અંગે દાનદાતાઓની શુભનામાવલિઃ—

### " लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् "

| | | | |
|---|---|---|---|
| ૧ | શ્રી રજનિકાન્ત હીરાલાલ મુન્શી | ( મુંબઈ ) | રૂા. ૧૧૨૫—૦—૦ |
| ૨. | ,, ભગવાનદાસ રતનશી | ( મુંબઈ ) | રૂા. ૫૦૧—૦—૦ |
| ૩ | ,, મંગલાબેન શાન્તિલાલ મહેતા | ( ,, ) | રૂા. ૩૨૬—૦—૦ |
| ૪ | ,, સાવિત્રીબેન નટવરલાલ દેસાઇ | ( ,, ) | રૂા. ૩૨૫—૦—૦ |
| ૫ | ,, છીબાભાઈ જીવણજી ક્ષત્રિય | ( વલસાડ ) | રૂા ૩૨૫—૦—૦ |
| ૬ | ,, જીવરાજ હીરાલાલ પટેલ | ( ,, ) | રૂા. ૩૨૫—૦—૦ |
| ૭ | ,, બાલકૃષ્ણ ભીખાભાઈ શાહ | ( મુંબઈ ) | રૂા. ૨૫૧—૦—૦ |
| ૮ | ,, રસિકલાલ મ. દેસાઈ | ( ,, ) | રૂા. ૨૫૧—૦—૦ |
| ૯ | ,, એક સદ્‌ગૃહસ્થ | ( ,, ) | રૂા. ૨૫૧—૦—૦ |
| ૧૦ | ,, રશ્મિબેન રજનિકાન્ત મુન્શી | ( મુંબઈ ) | રૂા. ૧૨૫—૦—૦ |
| ૧૧ | ,, હસુમતીબેન દેસાઈ | ( ,, ) | રૂા. ૧૦૧—૦—૦ |
| ૧૨ | ,, મોંઘીબેન દુતીયા | ( ,, ) | રૂા. ૧૦૧—૦—૦ |
| ૧૩ | ,, ચંપાવતી રસિકલાલ દેસાઈ | ( ,, ) | રૂા. ૧૦૧—૦—૦ |
| ૧૪ | ,, પ્રિયવદન છોટાલાલ ભટ્ટ | ( ,, ) | રૂા. ૧૦૧—૦—૦ |
| ૧૫ | ,, વૈજનાથ મહેરા | ( ,, ) | રૂા. ૧૦૧—૦—૦ |
| ૧૬. | ,, ગટુલાલ રંગીલદાસ શાહ | ( મુંબઈ ) | રૂા. ૧૦૧—૦—૦ |
| ૧૭ | ,, વીરમતીબેન નગીનદાસ શ્રોફ | ( ,, ) | રૂા. ૫૧—૦—૦ |
| ૧૮ | ,, શાન્તાબેન ફતેહચંદ ચોકસી | ( ,, ) | રૂા. ૫૧—૦—૦ |
| ૧૯ | ,, ડૉ. સરલાબેન જે. મરચંટ | ( ,, ) | રૂા. ૫૧—૦—૦ |
| ૨૦ | ,, ગીતાવર્ગના એક બેન | ( ,, ) | રૂા. ૫૧—૦—૦ |
| ૨૧. | ,, રતિલાલ લલ્લુભાઈ | (અમદાવાદ) | રૂા. ૫૧—૦—૦ |
| ૨૨. | ,, રમણલાલ મોહનલાલ | ( ,, ) | રૂા. ૫૧—૦—૦ |

***